श्रीः ।

# भर्तृहरि शतकम्.

## भाषाटीका

जिसमें

महाराजा श्रीप्रतापसिंह जूकी सुन्दर कविता प्रत्येक
श्लोकपर और संस्कृत टीका सहित है.

तच्च

मुंबापुर्यां
"ज्ञानसागर"यन्त्रालयाधिपतिना श्रीवरात्म-
जेन पण्डित श्रीकृष्णलालशर्मणा
स्वकीये"ज्ञानसागर" यन्त्रालय
मुद्रयित्वा प्रकाशितम् ।

तस्येदं तृतीया वृत्तिः ।

संवत् १९६७ शके १८३२ सन् १९१०

---

श्रीः

श्रीहरिर्वन्दे ।

श्रीवृन्दावनविहारिणेनमः ।

अथ

# भर्तृहरिकृतशतकत्रयम् ।

तत्र

## प्रथमं नीतिशतकं प्रारभ्यते ।

॥ मङ्गलाचरणम् ॥

दिक्कालाद्यनवच्छिन्नानन्तचिन्मात्रमूर्तये ॥
स्वानुभूत्येकसाराय नमः शान्ताय तेजसे ॥ १ ॥

संस्कृत टीका—विघ्नेशं विघ्नहर्तारं गणराजं नमाम्यहम्। शारदां वरदां नौमि बुद्धिव्याप्तनुत्तये ॥ १ ॥ श्रीगोपालं नमस्कृत्य नत्वा गुरुपरंपराम् । नीत्यादिशतकानां च व्याख्यां सुबोधिनीम् । ग्रन्थादौ ग्रन्थमध्ये ग्रन्थान्ते च मङ्गलाचरणं कर्तव्यमितिशिष्टाचारोऽस्ति, अतो ग्रस्य निर्विघ्नपरिसमाप्तये ग्रन्थकर्त्रा नमनात्मकं मङ्गलं कृतम् । दिगिति । दशदिक्षु तथा भूत भविष्यद्वर्तमान् त्रिकालेष्वनवच्छिन्ना व्याप्ता अतएव अनन्ता नास्त्यन्तो यस्याः साचिन्मात्रा चिद्रूपा मूर्तिः स्वरूपं यस्य तस्मै, तथा स्वानुभूतिः स्वस्यानुभवः स एव सारांशो यस्य तस्मै तेजसे प्रकाशरूपाय शान्ताय शान्तस्वरूपाय ब्रह्मणे नमः ॥ अनुष्टुप् वृत्तमिदम् ॥ १ ॥

भाषा टीका–दशोदिशा और त्रिकाल आदिमें परिपूर्ण अनन्त चैतन्य मूर्ति और केवल अपने अनुभवसे ज्ञातव्य शान्त और तेजोमय ईश्वरको नमस्कारहै ॥ १ ॥

सोरठा—सर्वदिशा सब काल, पूरि रह्यौ चैतन्य घन ।
सदा एकरस चाल, वन्दन वा परब्रह्मकौ ॥ १ ॥

यां चिन्तयामि सततं मयि सा विरक्ता ।
साप्यन्यमिच्छति जनं स जनोऽन्यसक्तः ॥
अस्मत्कृते च परितुष्यति काचिदन्या ।
धिक्तां च तं च मदनं च इमां च मां च ॥ २ ॥

संस्कृत टीका—प्रयोजनं विना मन्दोपि न प्रवर्त्तते । एवं नीतिर्वर्तते तर्हि कारणेन ग्रन्थः कृतस्तत् कारणं येन वैराग्योत्पत्तिस्ताल्लिखति । राज्ञाविक्रमशकेन स्वलब्धं फलं कश्चिद्ब्राह्मणाय दत्तं तस्य फलस्य महिमा येन भक्षितं सोऽमरो भवति तस्य मरणं नास्ति, ब्राह्मणः तत्फलं बहूनाम् पालकाय राज्ञे भर्तृहरयेदत्तं, तेन भर्तृहरिणा स्वपत्न्यैदत्तं, अन्यपुरुषासक्ता साऽन्य दत्तवती, सजारोऽपि स्वप्रिया कांचन पुंश्चली तस्यै दत्तवान्, सापुंश्चली तद्राज्ञे दत्तवती राजा तावत्पूर्व समस्तवृत्तान्तं ज्ञात्वा पश्चात् वैराग्येणात्मसहितान् भार्यादीन् निन्दति । यामिति । अहं यां सततं हृदि चिन्तयामि प्राणादधिकां मन्ये साऽपि मयि विरक्ताऽस्ति । सा स्त्रीअन्यं जनं जारपु प्रियतममिच्छति । स जनोऽप्यन्यां पुंश्चलीं प्रियत्वेनेच्छति सा काचिदन्या चास्मदर्थे परितुष्य सन्तोषं प्राप्नोति । एवं न कश्चित् कस्यचित् प्रियः । अतोऽस्मत्कृते परितुष्यति तां पुंश्चलीं धिक् तं जारपुरुषमपिधिक् इमां मदीयां स्त्रियं धिक्, अहमपि एतादृशोमूर्खः मां च धिक् । सर्वं मदनकृतमतो तं मदनं च धिगित्यर्थः ॥ २ ॥

भाषा टीका—किसी समय एक ब्राह्मणको अमृतफल मिला तब उसने विचारा कि यह फल किसको देना योग्य है, सोचते २ उसको ध्यान आया कि राजा भर्तृहरिको देना चाहिये. क्योंकि वह बडा धर्मज्ञ और प्रजापालक है, यह सो उसने वह फल राजाको दे दिया, राजाने उसे अपनी प्राणप्रिया स्त्रीको दिया, रानीने वह फल अपने मित्रको दिया, उस जारपुरुषने वह फल किसी वेश्याके दे दिया, और उस वेश्याने धनके लोभसे वह फल राजाको फिर दिया, उस फल देखकर राजाको बडा सोच हुआ, और उसके समस्त वृत्तान्तको जानना चा प्रयत्न करनेसे उसको सब वृत्तान्त ज्ञात हो गया, तब तौ उसको एकदमसे वैरा उत्पन्न हुआ, और कहने लगा । ( श्लोकार्थ ) जिस प्रियतमाको मैं निरन्तर प्राण भी अधिक प्रिय मानताहूं वह मुझसे विरक्त होकर अन्य पुरुषकी इच्छा करती और वह, अन्य पुरुष दूसरी स्त्रीपर आसक्तहै और वह अन्य स्त्री मुझसे प्रसन्नहै इसलि मेरी प्रियाको जो अन्य पुरुषसे प्रीति रखती है धिक्कारहै, उस अन्यको जो ( ऐसी रा पाकर ) अन्य स्त्रीपर आसक्तहै धिक्कारहै इस अन्य स्त्रीको जो मुझसे प्रसन्नहै धिक्का तथा मुझको और इस कामदेवको भी धिक्कारहै ॥ २ ॥

छप्पय—जाकी मेरे चाह वहै मोसों विरक्त मन । और पुरुषसों प्री पुरुष वह चहत और धन । मेरे कृतपर रीझ रही कोऊ इक औरहि । य बिचित्र गति देख चित्र ज्यों तजत न ठौरहि । सब भांति राजपत्नी सुधि जारपुरुषको परमधिक् । धिक् काम याहिधिक् मोहिधिक् अब ब्रजनिधि शरण इक ॥ २ ॥

अज्ञः सुखमाराध्यः सुखतरमाराध्यते विशेषज्ञः ॥
ज्ञानलवदुर्विदग्धं ब्रह्मापि च तं नरं न रंजयति ॥ ३ ॥

संस्कृत टीका—एवं ज्ञाते सति स्वस्मिन् मूर्खत्वं ज्ञातमतो मूर्खलक्षणानि वदति । अज्ञ इति । यः केवलं न जानाति सोऽज्ञः मूर्ख इत्यर्थः स तु शिष्टेन युक्तायुक्तमुक्तम् तच्छृणोति तथैव करोति, अतः सुखेन आराधितुं वशीकर्तुम् शक्याः । यस्तुविशेषं युक्तायुक्तं जानाति स विशेषज्ञः । कदाचित् प्रमादादयुक्ते कर्मणि प्रवृत्तः सन्नपरेण निवारितश्चेच्छृणोति सच सुखतरमतिसुखेनाराध्यते । परन्तु उभयोर्विलक्षणोऽज्ञो न भवति पूर्णज्ञाताऽपि न भवति शास्त्रेष्वपि प्रवृत्तिर्नभवति बहुश्रुततया स्वस्मिन् पण्डितंमन्यतया परस्य वचनमपि न स्वीकरोति किञ्चित् ज्ञानलवेन दुर्विदग्धोगर्विष्ठस्तं वशीकर्त्तुम् चतुर्मुखोब्रह्मापि न शक्तः तर्हि इतरेषां काकथा । आर्यावृत्तमिदम् ॥ ३ ॥

भाषा टीका—मूर्खका प्रसन्न करना सहजहै, ज्ञानीका प्रसन्न करना उससे भी सहज है, परन्तु जो पुरुष अल्पज्ञानके मदसे भरे हैं उनको ब्रह्माभी प्रसन्न नहीं करसक्के ॥ ३ ॥

दोहा—सुखकर मूढ रिझाइये, अति सुख पण्डित लोग ॥
स्वल्पज्ञानगर्विष्ठको, विधिहुन रिझवन योग ॥ ३ ॥

प्रसह्य मणिमुद्धरेन्मकरवक्त्रदंष्ट्रांकुरात् ।
समुद्रमपि संतरेत्प्रचलदूर्मिमालाकुलम् ॥
भुजङ्गमपि कोपितं सिरसि पुष्पवद्धारयेत् ।
न तु प्रतिनिविष्टमूर्खजनचित्तमाराधयेत् ॥ ४ ॥

सं० टी०—इदानीम् श्लोकद्वयेन मूर्खजनानाम् चित्तस्याराधनाभावं सदृष्टान्तं वर्ण्यते । प्रसह्येति । मकरो नामझषविशेषस्तस्य वक्त्रेदंष्ट्रांकुरस्तस्मिन्मणिः समणिः प्रसह्य बलात्कारेण निष्कासितुं शक्यो भवेत् । मकरमुखे मणेरभावो वर्तते किन्तु महताप्रयत्नेन सोऽपिसाध्योभविष्यति । तथा च प्रचलन्तीनामूर्मीणां लहरीणां माला: समुदायास्ताभिराकुलं समुद्रमपि बाहुभ्यां सन्तरेति । बाहुभ्यां समुद्रतरणमसम्भवमस्ति किन्तु उपायेन तदपि सुगमम्भवति । तथा च कोपितं भुजंगं सर्पं शिरसि पुष्पवद्धारयेत् । एते अघटितः दृष्टान्तः कालेन भविष्यन्ति परन्तु प्रतिनिविष्ट आविष्टाचित्तः तस्य मूर्खं जनस्य चित्तं न आराधयेत्, आराधितुं न शक्य इत्यर्थः । पृथ्वीवृत्तम् ॥४॥

भा०टी०—मगर की डाढोंमें से मणिका निकालना सहजहै, प्रचंडलहरों के आवेगसे चञ्चल समुद्र को तैरकर पार करना सहजहै, कोपसे भरे सर्पको शिरपर पुष्पके समान धारण करलेनाभी सहज है किन्तु मूर्खका मन जिस वस्तु पर जम गया है उससे हटाना कठिनहै ॥ ४ ॥

लभेत सिकतासु तैलमपि यत्नतः पीडयन् ।
पिबेच्च मृगतृष्णिकासु सलिलं पिपासार्दितः ॥
कदाचिदपि पर्यटञ्छशविषाणमासादयेत् ।
न तु प्रतिनिविष्टमूर्खजनचित्तमाराधयेत् ॥ ५ ॥

सं॰ टी॰—लभेतेति । सिकतासु वालुकासु, तैलं यत्नतः प्रयासेन पीडयन् सन् कदाचिल्लभेत । तथाच पिपासार्दितः तृषार्तःसन् मृगतृष्णिकासु सलिलमुदकं कदाचित् पिबेत् । कदाचित् पृथ्वीं पर्यटन्सन् शशस्य विषाणं शृंगम् प्राप्नुयात् । एवमघटितघटनम् भविष्यति किन्तु प्रतिनिविष्टमूर्खजनस्य चित्तं न आराधयेत् ॥ ५ ॥ छन्दःपूर्वोक्तम् ।

भाषा टीका—यत्नपूर्वक पेलनेसे रेतमें से तैल निकालना सम्भव है, मृग तृष्णासे प्यासेकी प्यास बुझाना सम्भवहै. ढूंढनेसे खरगोशका सींग भी मिल सक्ताहै परन्तु मूर्खका मन जिस बस्तुकी ओर झुक गया है उससे हटाना सम्भव नहीं है ॥५॥

छप्पय—निकसत वारू तेल जतनकर काढत कोऊ । मृगतृष्णाकौ नीरपियै प्यासौहै सोऊ । लहत शशाको शृंग ग्राह मुखतें मणि काढत । होत जलधिके पार लहर वाकी जब बाढत ॥ रिसभरे सर्पकौ पुहुप ज्यों अपने सिर पै धर सकत । हठभरे महासठ नरनकों कोऊ वसनहिं कर सकत ॥ ४ ॥ ५ ॥

व्यालं बालमृणालतन्तुभिरसौ रोद्धुं समुज्जृम्भते ।
छेत्तुं वज्रमणीञ्छिरीषकुसुमप्रान्तेन सन्नह्यते ॥
माधुर्यं मधुबिन्दुना रचयितुं क्षाराम्बुधेरीहते ।
नेतुं वाञ्छति यःखलान्पथि सतां सूक्तैः सुधास्यंदिभिः॥६ ॥

सं॰ टी॰—मूर्खजनानां सन्मार्गे प्रवेशोऽति दुर्लभ इत्याह । व्यालमिति । असौ व्यालं गजं वालमृणालतन्तुभिः कोमलकमलतन्तुभीरोद्धुमवरोद्धुं वाञ्छति । तथाच वज्रमणीन् हीरकमणीन् शिरीषकुसुमप्रान्तेन शिरीषपुष्पाग्रेण छेत्तुं सच्छिद्रीं कर्तुं सन्नह्यतवुद्युक्तो भवति । तथा च क्षाराम्बुधेः क्षारसमुद्रस्य मधुबिन्दुना माधुर्यं रचयितुं कर्तुमीहते चेष्टते, यः खलान् दुर्जनान् सतां पथि सुधास्यन्दिभिरमृततुल्यैः सूक्तैर्वाग्भिर्नेतुं वाञ्छति ॥ शार्दूलविक्रीडितवृत्तमिदम् ॥ ६ ॥

भा॰ टी॰—वह मनुष्य कमल की कोमल डंडीसे हाथीको बांधना चाहताहै, शिरीष के फूलकी पंखुरीसे हीरेको वेधना चाहताहै, और मधु को एक बुन्दसे खारे समुद्रको मीठा करना चाहताहै, जो खलोंको अपने अमृततुल्य वाक्योंसे सत् मार्ग में लाने की इच्छा करताहै ॥ ६ ॥

छन्द—कमल तन्तुसों बांधि गजहि वसकरन उमाहत । सिरस पुहुपके तार वज्रकों वेध्यो चाहत॥ बूंद सहतकी डार उदधि को खार मिटावत । ये बातैं विपरीतहोहिं बरु यह श्रुति गावत॥ पर अमृतमयी निज बैन सों सत्पथमें खैंचनचहै । जो कोउ कहुँ खलजननको इहै एक अचरजअहै ॥ ६ ॥

स्वायत्तमेकान्तगुणं विधात्रा, बिनिर्मितं छादनमज्ञतायाः ॥
विशेषतःसर्वविदां समाजे, विभूषणं मौनमपण्डितानाम् ॥ ७ ॥

सं० टी०—अधुना मूर्खस्य मूर्खतायाः छादनोपायमाह । स्वायत्तमिति । अज्ञतायाः मौर्ख्यस्य छादनमाच्छादनं मौनं विधात्रा ब्रह्मणा विनिर्मितमुत्पादितं । कथंभूतं मौनं स्वायत्तं स्वाधीनं, पुनः कथंभूतं, एकान्ताः गुणाः । उत्कर्षाः यस्मिंस्तत् एकान्तगुणं । तन्मौनं विशेषतः विशेषेण सर्वविदां सर्वज्ञानिनां समाजे समूहे अपण्डितानां मूर्खाणां विभूषणं भवति । इह मूर्खस्य अज्ञताच्छादने केवलं मौनमेव उपायोऽस्तीति भावः । वृत्तमिन्द्रवज्रा ॥ १ ॥

भा० टी०—विधाताने मौन अर्थात् चुप रहनाही अज्ञानता का ढकना बनाया है, यह मनुष्यके आधीनहै तथा इसमें औरभी अनेक गुणहै। यही ज्ञानियोंकी सभा मे अज्ञानियोंका अभूषणहै ॥ ७ ॥

दोहा—मूर्खताके ढकनको, रच्यो विधाता मौन।
ज्ञानि सभा महँ आभरण, अज्ञहि गुणको मौन ॥ ७ ॥

यदा किञ्चिज्ज्ञोऽहं द्विप इव मदान्धः समभवम्।
तदा सर्वज्ञोऽस्मीत्यभवदवलिप्तं मम मनः ॥
यदा किञ्चित्किञ्चिद्बुधजनसकाशादवगतम् ॥
तदा मूर्खोऽस्मीति ज्वर इव मदो मे व्यपगतः । ८ ॥

सं० टी०—यदेति । यदा यस्मिन् काले किंचिज्ज्ञोऽहं तदा द्वाभ्यां शुण्डतुंडाभ्यां पिबतीतिद्विपोगजः । स इव मदेन अंधइति मदांधः समभवं जातः तदा तास्मिन् काले अहं सर्वज्ञोऽस्मीति मममनोऽवलिप्तं गर्विष्ठमभवत् । तदुपरि यदा बुधजनस्य पण्डितजनस्य सकासात् संसर्गात् किंचित् किंचित् ज्ञानं अवगतं प्राप्तं तदा अहम् मूर्खोऽस्मीति ज्ञातम् पूर्वं यो मे मम मदः गर्वोऽभवत् सोऽपि ज्वर इव व्यपगतः । शिखरिणी वृत्तमिदम् ॥ ८ ॥

भा० टी०—जब मुझको थोडासा ज्ञान हुआ तब मैं हाथी की तरह मदसे अन्धा होगया, और यह समझनें लगा कि ज्ञानमें मुझसे कोई अधिक नहीं है परन्तु जब विद्वानों की संगतिसे मुझको कुछ अधिक ज्ञान प्राप्त हुआ तब मुझको ज्ञात होगया कि मैं मूर्खहूं और मेरा मदज्वर के समान उतर गया ॥ ८ ॥

छप्पय—जब हों समझों नेक तबहि सर्वज्ञ भयौ हौ।जैसे गज मदमत्त अंधता छाय गयौ हौ ॥ जब सतसंगतिपाय कछुकहों समझन लाग्यौ। तबहि भयो अति मूढ गर्वगुणकौ सब भाग्यौ ॥ ज्वर चढतचढत अतिताप ज्यों उतरत सीतल होत तन। त्योंही मनकौ मद उतरिगौ लियौ शील सन्तोषपन ॥ ८ ॥

कृमिकुलचितं लालाक्लिन्नं विगर्हि जुगुप्सितम् ।
निरुपमरसं प्रीत्या खादन्नरास्थि निरामिषम् ॥
सुरपतिमपि श्वा पार्श्वस्थं विलोक्य न शङ्कते ।
नहि गणयति क्षुद्रो जन्तुः परिग्रहफल्गुताम् ॥ ९ ॥

सं० टी०—इदानीं क्षुद्रविषये लितं जनं श्वदृष्टान्तेन निन्दति । कृमिकुलेति । यथा कृमिकुलैश्चितं व्याप्तं लालया क्लिन्नमार्द्रं विगर्हि अपवित्रमतएव जुगुप्सितं निन्द्यं, निर्गता उपमा यस्य एतादृशो यो रसः तं निरामिषं मांसरहितं निरास्थि प्रीत्या खादन् श्वा पार्श्वस्थं समीपस्थमपि सुरपतिमिन्द्रम् विलोक्य न शंकते तथा क्षुद्रः नीचो जन्तुः प्राणी, परिग्रहस्य फल्गुतां निःसारतां नगणयति न मनुते । हरिणीवृत्तमिदम् ॥ ९ ॥

भाषा टीका-जैसे कुत्ता कीडों के समूहसे भरी हुई, लारसे भीगी हुई, दुर्गन्धयुक्त, निन्दित, निरस, और मांसरहित हड्डी को प्रीतिसे खातेसमय पास खडे हुए इन्द्रको भी देखकर शंका नहीं करता है वैसेही क्षुद्रजीव जिस पदार्थको ग्रहण करलेता है उसकी निःसारता पर ध्यान नहीं देता अर्थात् उसको श्रेष्ठ ही समझता है९

कुण्डलिया-कूकर शिर कीरापरै गिरै बदन ते लार । बुरौ बास बिकरालतन बुरौ हाल बीमार ॥ बुरौ हाल बीमार हाड सूखेकों चाबत । लखि इन्द्रहुको निकट कछू उर शंक न लावत ॥ निठुर महा मन मांहि देख घुरीवत हूकर । तैसेही नर नीच निलज डोलै ज्यों कूकर ॥ ९ ॥

शिरः शार्वं स्वर्गात्पतति शिरसस्तत्क्षितिधरम् ।
महीध्रादुत्तुङ्गादवनिमवने श्चापि जलधिम् ॥
अधो गङ्गा सेयं पदमुपगता स्तोकमथवा ।
विवेकभ्रष्टानां भवति विनिपातः शतमुखः ॥ १० ॥

सं० टी०—यः पुरुष उत्तमपदाद्भ्रष्टः सन् अधः पतति स पुनः उच्चपदम् न प्राप्नोतीति गंगादृष्टान्तेन द्योतयति । शिर । इति । स्वर्गात् गंगा विष्णुपादोदकमादौ शार्वं शार्वो महादेवस्तस्येदं शार्वं शिरो मस्तकं पतति, तत् पश्चात् शिरसः क्षितिधरं हिमालयपर्वतं पतति, उत्तुंगात् महीं धारयतीति महीध्रः पर्वतस्तस्मात् अवनिं पृथ्वीं पतति, अवनेश्चापि जलधिं समुद्रं पतति, एवमियंगंगा अधोधः स्तोकमल्पं पदं स्थानं उपगता प्राप्ता । अथवा विवेकभ्रष्टानां विचारहीनानां शतमनेकानि मुखानि वदनानि यस्य तादृशो विनिपातोऽधःपतनं गंगाजलवद्भवतीत्यर्थः । विवेकशून्याः पुरुषाः सर्वदा नीचं पदं प्राप्नुवन्ति, तेषां नान्यागतिरिति भावः । शिखरिणीवृत्तमिदम् ॥ १० ॥

भा०टी०-यह गङ्गा प्रथम स्वर्गसे शिवजीके मस्तकपर गिरी, फिर वहांसे ऊंचे पर्वतपर, और पर्वतसे पृथ्वीपर, और पृथ्वीसे समुद्रमें, इस भांति क्रमसे नीचेही गिरती

ई, इसी तरह जिन पुरुषों को किसी प्रकारका ज्ञान नहीं रहा, वे सर्वदासे सौर२ प्रकारसे
ीचेही गिरते जातेहैं ॥ १० ॥

दोहा—ईशशीश दिविशैल तजि, भूतजि गिरी समुद्र ॥
यथा गंग तिमि ज्ञान बिनु, नीचेहि गिरते क्षुद्र ॥ १० ॥

शक्यो वारयितुं जलेन हुतभुक् छत्रेण सूर्यातपो ।
नागेन्द्रो निशिताङ्कुशेन समदो दण्डेन गोगर्दभौ ॥
व्याधिर्भेषजसङ्ग्रहैश्च विविधैर्मन्त्रप्रयोगैर्विषम् ।
सर्वस्योषधमस्ति शास्त्रविहितं मूर्खस्य नास्त्यौषधम् ॥११॥

सं० टी०—सर्वरोग निरसनोपायो लोके शास्त्रे च विहितः किन्तु मूर्खस्य मूर्खत्व नाशको
ायः कुत्रापि नास्ति इत्याह । शक्य इति "हुतं भुंक्ते" इति हुतभुगग्निः जलेन वारिणा वारयितुं
ाक्यः । तथा "सूर्यातपं उष्णत्वं छत्रेण वारायितुं शक्यः । तथा मदेनसह" समदो नागेन्द्रो
जराजः निशितेन तीक्ष्णेनाङ्कुशेन वारयितुं शक्यः । तथा गौश्च गर्दभश्च तौ गोगर्दभौ दण्डेन ।
थथा व्याधि, भेषजस्यौषधस्य संग्रहैः सेवनैः ॥ तथा च विष विविधैर्मंत्रप्रयोगैः वारयितुं शक्यं ॥
वं सर्वस्य शास्त्रविहितमौषधमस्ति परंतु मूर्खस्य मूर्खत्वनिरसनरूपमौषधं कुत्रापि नास्तीति ॥
ार्दूलविक्रीडितं वृत्तमिदम् ॥ ११ ॥

भा० टी०—जलसे अग्निका रोकनासम्भवहै, छत्रीसे धूपका निवारण करना
सम्भवहै, मतवाला हाथी भी अकुंशसे वशमें हो सक्ताहै, गौ गर्दभ आदि चौपायों को
दंड देकर बशमें कर सक्तेहैं, रोगको बिविध प्रकारकी औषधोंसे दूर करना संभवहै और
मंत्रद्वारा विष उतर जाता है इस प्रकार पृथ्वीपर सब वस्तुओं की शास्त्रोक्त औषधि है.
परन्तु मूर्खताकी कोई औषधि नहींहै. ॥ ११ ॥

छप्पय—मिटै छत्रसों धूप और जल अग्नि बुझावै । तीखे अकुंश मार
मत्त गजवसमें लावै ॥ दण्ड दिये तें दुष्ट बैल अरु गदहा मूरख ।
औषधि बिबिध प्रदान व्याधि खोवै चित तू रख ॥ अरु लिखेअनेकन
मन्त्र जिमि हरहिं जु बिषता सबनकी । पै इक नहिं औषध जगतमे दहै
मूर्खता कुजनकी ॥ ११ ॥

साहित्यसंगीतकलाविहीनः साक्षात्पशुः पुच्छविषाणहीनः ॥
तृणं न खादन्नपि जीवमानस्तद्भागधेयं परमं पशूनाम् ॥ १२ ॥

सं० टी०—साहित्यसंगीतकलाविहीतः पुरुषः साक्षाव पशुरित्याह । साहित्येति । साहित्यं

काव्यालंकारादि । संगीतं गानादि । कला: शिल्पादय: । एतैर्यो विहीन:स साहित्यसंगीतकला विहीन: एतादृश: पुरुष: पुच्छश्चविषाणश्च पुच्छविषाणे ताभ्यां हीनो रहित: साक्षात् पशुरेव तृणभक्षणं पशूनां धर्मस्तर्हि कुतो नायं खादतीत्याह । तृणमिति । तृणं न खादन्भक्षयन् जीवमान इदं तु इतरपशूनां परममुत्कृष्टं भागधेयमदृष्टं मनुष्यमात्रेण धर्मशास्त्रमवश्यमाकर्ण्यमिति भाव: ॥ उपजातिवृत्तमिदम् ॥ १२ ॥

भा० टी०-जिस मनुष्यने साहित्य और संगीतशास्त्र नहीं सीखा वह बिना पूंछ और सींगका साक्षात् पशु है, तृण खाये विनाही जीता है यह उस पशुका पर भाग्य है ॥ १२ ॥

दोहा-गीत कला साहित्यहूं, नहिं सीख्यो नर जौन ॥
सींग पूँछ बिन पशु परं, तृण नहिं खाते तौन ॥ १२ ॥

येषां न विद्या न तपो न दानं ।
ज्ञानं न शीलं न गुणो न धर्मः ॥
ते मर्त्यलोके भुवि भारभूता ।
मनुष्यरूपेण मृगाश्चरन्ति ॥ १३ ॥

सं० टी०—विद्यादिधर्महीना नरा मनुष्यरूपेण मृगा इव भूमौ विचरंति, इत्याह येषामिति । येषां विद्या व्याकरणन्यायादिर्न, तपो व्रतोपवासादि न, दानं न, ज्ञानं न, शील सद्वृत्तं न "शीलं स्वभावे सद्वृत्ते" इत्यमर: । (सत्वादि:) गुणो न, धर्मो न, एवंभूता मनुष्यास्तेऽस्मिन् मर्त्यलोके भुवि भारभूता: सन्तो मनुष्यरूपेण मृगा: पशव इव "मृगा: पशु कुरंग" इति मेदनी । चरन्ति विचरान्ति । विद्यादिसदाचरणहीना: पुरुषा: पशुसदृशा इति भाव: पशुत्वनिरसनार्थं विद्या अवश्यमेव पठनीया ! उपजातिवृत्तमिदम् ॥ १३ ॥

भा० टी०-जिन मनुष्योंको न विद्याहै, न तप है, न दान है, न ज्ञान है, और न जिनमें शील, गुण और धर्म है, वे इस पृथ्वीपर भाररूपहैं, वे मनुष्यरूप धारणकर पशुके समान विचरतेहैं ॥ १३ ॥

दोहा-विद्यादान न ज्ञान तप, शीलधर्म गुणहीन ॥
विचरहिं ते नररूप पशु, भूमि भारअतिदीन ॥ १३ ॥

वरं पर्वतदुर्गेषु भ्रान्तं बनचरैः सह ॥
न मूर्खजनसम्पर्कः सुरेन्द्रभवनेष्वपि ॥ १४ ॥

सं० टी०—पर्वते वनचरै: सह भ्रमणं श्रेष्ठं किन्तु मूर्खजनसम्पर्क: स्वर्गेऽप्युचितो न, इत्याह वरमिति । पर्वतदुर्गेषु वनचरै: व्याघ्रादिभि:सह भ्रान्तं भ्रमणं वरमुत्कृष्टं, परन्तु मूर्खजनसम्पर्क इन्द्रभवनेष्वपि नास्त्वति । अनुष्टुब् वृत्तमिदम् ॥ १४ ॥

भा० टी०—पर्वतों और वनोंमें वनचरोंके संग विचरना श्रेष्ठहै परन्तु मूर्खमनुष्यका संग स्वर्गमेंभी बुराहै ॥ १४ ॥

दोहा—वनचरसँग रहवौ सुखद, वनपर्वतके मांहि ।
पै मूरुखसँग स्वर्गहू, दुखयुत संशय नाहिं ॥ १४ ॥

## इत्यज्ञनिन्दाप्रकरणम् ।

शास्त्रोपस्कृतशब्दसुन्दरगिरः शिष्यप्रदेयागमा ।
विख्याताः कवयो वसन्ति बिषये यस्य प्रभोर्निर्धनाः ॥
तज्जाड्यं वसुधाधिपस्य कवयो ह्यर्थं विनापीश्वराः ।
कुत्स्याःस्युःकुपरीक्षका हि मणयो यैरर्घतः पातिताः ॥१५॥

सं० टी०—यस्यराज्ञो देशे कवया निर्धना वसन्ति स राजा मूर्ख इत्याह । शास्त्रेति । व्याकरणाभिधानादिभिः शास्त्रैरुपस्कृताः शिक्षिताः शब्दास्तैः सुन्दरा गीर्वाणी येषान्ते । तथा च शिष्येभ्यः प्रदेया दत्ताः पाठिता आगमा वेदशास्त्राणि यैस्ते । तथा च सर्वलोकेषु विख्याताः प्रसिद्धाः कवयः कवित्वं कुर्वाणाः । एवंभूता विद्वांसो यस्य प्रभोर्विषये देशमध्ये वसन्ति अथ च निर्धना धनरहिताः । राजा तान्नैव जानाति तेषां परामर्शं न गृह्णाति, तत् वसुधाधिपस्य राज्ञो जाड्यं मौर्ख्यं कवयस्तु सुधियस्तु अर्थं विनापीश्वराः समर्थाः । यथा मणयो बहुमूल्यास्ते कुपरीक्षकैरज्ञात्वा अर्धतो मूल्यतः पातिताः न्यूनमूल्याः कृताः तर्ह्ययं दोषः परीक्षकाणां न तु मणीनां परीक्षकाः कुत्स्याः स्युः कुत्सिता एव न तु मणयः । ये भूपतयः सन्तस्तादृशानां कवीनां स्वरूपं न जानन्ति ते मणिमूल्यं यथार्थमजानन्तः कुपरीक्षका इव निंद्या इत्यर्थः । तस्मात् राज्ञा कवयोऽवश्यं आदरणीया इति भावः । शार्दूलविक्रीडितवृत्तमिदम् ॥ १५ ॥

भा० टी०—जिनकी वाणीको शास्त्रोक्तशब्दोंनें सुन्दर कियाहै, और जिनकीविद्या शिष्योंके पढाने योग्य है, ऐसे प्रसिद्ध कवि जिस राजाके देशमें निर्धन रहतेहैं वे राजा मूर्ख हैं, कविलोग तौ विनाद्रव्यकेही श्रेष्ठहैं तथा वे राजा उस जौहरीकेसमान मूर्ख हैं जो मणिको न पहिचानकर उसका मूल्य घटातेहैं ॥ १५ ॥

छप्पय—सब ग्रन्थनको ज्ञान मधुर बाणी जिनके मुख । नित प्रति विद्या देत सुयशको पूर रह्यो सुख । ऐसे कवि जिहिं देश वसत निर्धनता लहि अति । राजा नाहिं प्रवीणभई याही ते यह गति । वे हैं विवेक सम्पति सहित सब पुरुषनमें अतिहि वर । घट कियौ रतनको मोल जिन तेइ जौहरीकूरनर ॥ १५ ॥

हर्तुर्याति न गोचरं किमपि शं पुष्णाति यत्सर्वदा ।
ह्यर्थिभ्यः प्रतिपाद्यमानमनिशं प्राप्नोति वृद्धिं पराम् ॥

कल्पांतेष्वपि न प्रयाति निधनं विद्याख्यमंतर्धनम् ।
येषां तान्प्रति मानमुज्झत नृपाः कस्तैः सह स्पर्धते ॥ १६ ॥

सं० टी०—राज्ञा कवयः सर्वदा आदरणीयाः नतु अहंकारेण निर्भर्त्सनीया इति श्लोकद्वयेनाह हर्तुरिति । भो नृपा राजानः ! येषां विद्याख्यमन्तर्धनं वर्त्तते तान्प्रति मानमहंकारमुज्झत त्यजत । कथंभूतं विद्याख्यं धनम् । हर्तुस्तस्करस्य यद्गोचरं याति तस्य दृश्यं न भवति । पुनः कथंभूतं किमप्यनिर्वचनीयं शं सुखं पुष्णाति पुष्टिं प्रापयति । पुनः कथंभूतं । सर्वदा सर्वकालेष्वपि अर्थिभ्य. शिष्येभ्यः प्रतिपाद्यमानं दत्तं परामुत्कृष्टां वृद्धिं प्राप्नोति । पुनः कल्पान्तेष्वपि निधनं नाशं न प्रयाति न प्राप्नोति । एतादृशं येषामन्तर्धनं तैःसह कःस्पर्धते स्पर्धां करोति । न कोऽपीत्यर्थः । शार्दूलविक्रीडितं वृत्तमिदम् ॥ १६ ॥

भा० टी०—जो चोरको नहीं देख पडता, जो सदैव सुखकी वृद्धि करताहै, जो जिज्ञासुओंको देनेसे परमवृद्धिकोप्राप्तहोताहै, तथा कल्पान्तमें भी जिसका नाश नहीं होता, ऐसा विद्यारूपी गुप्तधन जिनकेपासहै उनसे हे राजागणों ! कभी अभिमान मत करो. क्योंकि उनके समान इस जगत्‌में दूसरा कौनहै ? ॥ १६ ॥

छप्पय—चोर सकत नहिं चोर भोर निशि पुष्ट करत हित । अर्थिनहूं कौं दत होत क्षण क्षणमें अगणित । कबहूं बिनसत नाहिं लसत विद्या सु गुप्त धन । जिनके ये सुख साज सदा तिनकौं प्रसन्न मन । राजाधिराज प्रभु छत्रपति ये एतौ अधिकार लहि । उनकों निहार दृग फेरवो यह तुमको है उचित नहिं ॥ १६ ॥

अधिगतपरमार्थान्पण्डितान्मावमंस्था ।
स्तृणमिव लघु लक्ष्मी नैव तान्संरुणद्धि ॥
अभिनवमदलेखाश्यामगण्डस्थलानाम् ।
न भवति बिसतन्तुर्वारणं वारणानाम् ॥ १७ ॥

सं० टी०—अधिगतेति । अधिगतः प्राप्तः परमार्थो यैस्तान्प्रति मावमंस्थास्तेषामपमानं माकुरु । लक्ष्मीः लघु तृणमिव तान्नैव संरुणद्धि रोद्धुं न शक्नोति । अत्र दृष्टान्तः । अभिनवा सुन्दरा मदलेखा मदजललेखापरम्परा तया श्यामायमानानि गण्डस्थलानि येषां ते।एवंभूतानां वारणानां गजानां विषतन्तुः कमलमूलतन्तुः वारणं न भवति रोद्धुं न शक्नोति । अतः पण्डितानामवज्ञा न कर्तव्येत्यर्थः । मालिनीवृत्तमिदम् ॥ १७ ॥

भा० टी०—जिनपण्डितोंको परमार्थका ज्ञान है उनका अपमान मत करो। तृणकेसमान लघु लक्ष्मी उनको ऐसे नहीं रोकसकती जैसे नवीन मदधारासे शोभित श्याममस्तकवाले हस्तियोंको कमलकी डण्डी ॥ १७ ॥

कुण्डलिया—पण्डित परमार्थीनको नहि करिये अपमान । तृणसम

म्पत्कों गिनैं बस नहिं होत सुजान ॥ बस नहिं होत सुजान पटा
रमद है जैसे । कमलनालके तन्तु बंधे रुक रहिहैं कैसे । तैसे इनको
ान सबहि सुख शोभामण्डित । आदरसों बस होत मस्त हाथी ज्यों
ण्डित ॥ १७ ॥

अम्भोजिनीवननिवासविलासमेव ।
हंसस्य हन्ति नितरां कुपितो विधाता ॥
नत्वस्य दुग्धजलभेदविधौ प्रसिद्धाम् ।
वैदग्ध्यकीर्तिमपहर्तुमसौ समर्थः ॥ १८ ॥

सं० टी०-औपाधिकगुणान् निवर्तयितुं लोकः समर्थः किन्तु स्वाभाविकगुणं निवर्तयितुं कोऽपि समर्थ इति हंसदृष्टान्तेन द्योतयति । अम्भोजिनीति । यो यस्य स्वाभाविकः सद्गुणस्तं गुण कोऽपि हर्तुं शक्नोति । अत्र दृष्टान्तः ॥ अम्भसो जाताः कमलिन्यस्तासां वनं तत्र निवासो वसति ौनं तेन विलसदम्भ एतादृशं हंसस्य विलासं विधाता ब्रह्मा नितरामत्यन्तं कुपितश्चेद्विलासमेव हन्ति न दुग्धजलयोर्भेदविधौ यत् प्रसिद्धं वैदग्ध्यं चातुर्यं तस्य कीर्तिस्तांहर्तुं समर्थः ॥ तर्हि इतरेषां का वार्ता न्ततिलकावृत्तमिदम् ॥ १८ ॥

भा० टी०-हंसपर यदि विधाता कोप करे तो उसका कमलके वनोंका निवास और वहांका विलास नष्ट करसकताहै; परन्तु उसके दूध और पानीके अलग करनेकी सिद्ध कीर्तिको नहीं नष्ट करसक्ता; अर्थात् उसके गुणोंको नहीं छीनसक्ता ॥ १८ ॥

दोहा-कोपित यदि विधि हंसको, हरत निवास विलास ।
पय पानीको पृथक् गुण, तासु सकै नहिं नाश ॥ १८ ॥

केयूरा न विभूषयंति पुरुषं हारा न चंद्रोज्ज्वला ।
न स्नानं न विलेपनं न कुसुमं नालंकृता मूर्द्धजाः ॥
वाण्येका समलंकरोति पुरुषं या संस्कृता धार्यते ।
क्षीयंते खलु भूषणानि सततं वाग्भूषणं भूषणम् ॥ १९ ॥

सं० टी०-केयूरादयोऽलंकाराः पुरुषं न विभूषयन्ति किन्तु वागलंकारो हि तस्योत्तमोऽलंकार याह । केयूरेति. केयूरा बाहुभूषणानि, चन्द्रवदुज्ज्वला मुक्ताफलानां हाराः, शुद्धं स्नानं, विलेपनं गन्धादिकं, कुसुमं पुष्पं च अलंकृताः सज्जीकृताः धूपिता मूर्द्धजाः केशाः ऐते पदार्थाः पुरुषं न भूषयन्ति । रा मौर्ख्यं पुरुषस्याऽस्ति तदेभिः किंभूषणं भवति ॥ तर्हि किं एका वाक् सम्यक्प्रकारेण अलंकरोति भयति, साऽपि वाक् या संस्कृता व्याकरणादिशास्त्रसंस्कारयुक्ता पुरुषेण धार्यते ॥ सकलविभूषणानि ीयन्ते, एकं वाग्भूषणं न क्षीयते, अतः सततं सर्वकालं वाग्भूषणमेव भूषणम् शार्दूलविक्रीडितवृत्तमिदम् ॥१९॥

भा० टी०-बाजूबन्द, चन्द्रमाकेसमान उज्वलमोतियोंके हार पहरनेसे स्नान,

करनेसे; उबटना लगानेसे बालोंके सुधारनेसे; अथवा पुष्पोंके शृंगारकरनेसे पुरुषोंकी ऐसी शोभा नहीं होती है, जैसे वाणीकी उत्कृष्टतासे होतीहै जो क्षय नहीं होतीहैं ॥ १९ ॥

छप्पय–कंकन छवि नहिं देत हार उज्वल नहिं सो हैं । कर उब अस्नान कुसुम नहिं मनको मोहैं ॥ केतिककेस सँभार नाहिं शोभ ऐसी । वाणी मनहर लसै एकसुन्दर मुख जैसी ॥ जग और अभूषण गिरें टूटें घिसतेहैं सही । पैवाणी जोहैएकरस शुभभूषण बिगडैनहीं॥१

विद्या नाम नरस्य रूपमधिकं प्रच्छन्नगुप्तं धनम् ।
विद्या भोगकरी यशः सुखकरी विद्या गुरूणां गुरुः ॥
विद्या बंधुजनो विदेश गमने विद्या परं दैवतम् ।
विद्या राजसुपूजिता न हि धनं विद्याविहीनः पशुः ॥ २०

सं० टी०–विद्याविहीनो नरः पशुरेवेत्याह विद्येति ॥ पुरुषस्य विद्याव्यतिरिक्तं यद्धनं तद्धनं वाति तत्क्षीयते तस्करादिभिर्नीयते गोप्यं न भवति. अतो विद्यानाम धनं तत्समीचीनं बहुगुणं । क विद्याख्यं धनं । नरस्याधिकं रूपं करोति, तथा च प्रच्छन्नं गुप्तं धनं भवति । विद्या भोगकरी गान् करोति, यशःकीर्त्तिं सुखं च करोति । विद्या गुरूणां गुरुः क्षुद्रगुरवः सर्वविद्यासम्पूर्णं प्राज्ञ ष्टमायान्ति, स प्राज्ञो गुरूणामपि गुरुः । अथ च गृण्हाति हितमुपदिशतीति गुरुरिति गुरुपदव्या मतो हितकर्त्री विद्यैव । विदेशगमने विद्या बन्धुजनः. विदेशे ये जनास्ते विद्यया बन्धुजना एव भव विद्या परं दैवतं । राजसुपूजिता विद्या येषां ते राज्ञां सभायां पूजिता भवन्ति. तथाच धनाढ्याः पू नभवन्ति; अतो विद्याविहीनो यः सः पशुरेव बोद्धव्यः । शार्दूलविक्रीडितवृत्तमिदम् ॥ २० ॥

भा० टी०–विद्याही मनुष्यका अधिकरूप और छिपा हुआ धन है, विद्या भोग, यश और सुखके सम्पादन करनेवालीहै, और गुरुओंकी गुरु है, परदेश विद्याही बन्धु और विद्याही देवताहै, और राजाओंमें विद्याही अधिक पूजनीय धन नहीं, जिसमें विद्या नहीं है, वह पशु है ॥ २० ॥

छप्पय–विद्या नरकौ रूप अधिक विद्या सुगुप्तधन । विद्यासु यश देत संग बिद्या सुबंधुजन । विद्या सदा सहाय देवताहू विद्या यह विद्या राखत नाम लसत विद्याहीते गृह । सब भांति सबन अतिबडी विद्याकों कविजन कहत॥ शिवविधि कहँ विद्या बसकरत नृपक्षि न्यासविद्या चहत ॥ २० ॥

क्षांतिश्चेद्वचनेन किंकिमरिभिः क्रोधोऽस्ति चेद्देहिनाम् ।
ज्ञातिश्चेदनलेन किं यदि सुहृद्दिव्यौषधैः किं फलम् ॥
किं सर्पैर्यदि दुर्जनः किमु धनैर्विद्याऽनवद्या यदि ।
व्रीडा चेत्किमु भूषणैः सुकविता यद्यस्ति राज्येन किम् ॥२१॥

सं० टी०—क्षान्तिरिति । देहिनां प्राणिनां यदि क्षान्ति क्षमा वर्तते तदा बचनेन सांत्ववचनेन किं ...जनं । तथा च क्रोधोऽस्ति तर्हि अरिभिः शत्रुभिः किम् । ज्ञातिश्चेदनलेनाग्निना किम् । "दायादाः ...जारयः" इतिवर्त्तते । ज्ञातया दया निन्दादिपुरुषं वदन्ति तेनैव दाहो भवति अग्नेः किं प्रयोजनम् । यदि सखा वर्त्तते तदा दिव्यौषधैः किं फलं प्रयोजनम् । यदि दुर्जनाः सन्ति तदा सर्पैः किम् । सर्पाः विशेषेण मारयन्ति तथा दुर्जना अपि छिद्रान्वेषणेन मारयन्ति । यदि अनवद्या सुन्दरा सम्पूर्णा ...ऽस्ति तदा धनैः किम् । यदि व्रीडा लज्जा वर्त्तते तदा तदेव भूषणं इतरभूषणैः किम् । यदि सुकाविता ...र्यैमस्ति तदा राज्येन किम् ॥ वृत्तं पूर्वोक्तमेव ॥ २१ ॥

भा० टी०—जिस मनुष्यको क्षमा है उसको शान्तवचनसे क्या काम है, ...स मनुष्यमें क्रोधहै उसको शत्रुकी क्या आवश्यकताहै, यदि जाति है तो ... अग्निका क्या प्रयोजन. जिसके मित्रहै उसको दिव्य औषधियोंसे क्या काम ... जिसकी दुर्जनोंसे संगतिहै उसको सर्पोंसे क्या प्रयोजन, जिसको विद्या है उसको ...य धनकी क्या आवश्यकताहै, जिसे लज्जा है उसे अन्यभूषणोंसे क्या काम है, ...र जिसको सुन्दर कविता करनेकी शक्तिहै उसके आगे राज्य क्या है ? ॥ २१ ॥

छप्पय—बचन न चहिये ताहि क्षमा जो चितमें राखत । कहा ...ज लो ताहि सुकविता मुख जो भाषत ॥ क्रोध भये अरि कहा जाति ...हें अनलहि चाहत । औषध तिनको व्यर्थ जहां सन्मित्र निवाहत ॥ ...रु धन संचय फलहीन जोविद्याहोय अदूषणौ। लज्जासंयुत जोहोय तेहि ...छू न चहिये भूषणौ ॥ २१ ॥

दाक्षिण्यं स्वजने दया परजने शाठ्यं सदा दुर्जने ।
प्रीतिः साधुजने नयो नृपजने विद्वज्जनेष्वार्जवम् ॥
शौर्यं शत्रुजने क्षमा गुरुजने नारीजने धूर्तता ।
ये चैवं पुरुषाः कलासु कुशलास्तेष्वेव लोकस्थितिः ॥२२॥

सं० टी०—अधुना लोकस्थितिं द्योतयति । दाक्षिण्यमिति । स्वजने पुत्रकलत्रादौ दाक्षिण्यमौदार्य्यं ...क्षिणे सरलो दाराबित्यमरः" । परजने दया कृपा "कृपा दयाऽनुकम्पास्यादित्यमरः" । दुर्जने मनुष्ये सदा शाठ्यं शठता, । नृपजने राज्ञि नयो नीतिर्न्यायः, । विद्वज्जनेषु पण्डितेष्वार्जवमृजुत्वम् । साधुजने

प्रीतिः । शत्रुजने शौर्यं शूरता । गुरुजने मान्यजने क्षमा । नारीजने धूर्तता । एवमनेन प्रकारेण ये कलासु कुशला दक्षास्तेष्वेव लोकानां स्थितिर्मर्यादापालनम् ॥ वृत्तं पूर्वोक्तमेव ॥ २२ ॥

भा० टी०—स्त्री पुत्रादिपर उदारता, परजनोंपर दया, दुर्जनके संग शा भलोंके संग प्रीति, राजसभामें नीति, विद्वानोंके संग नम्रता, शत्रुके प्रति शू बडेलोगोंसे क्षमा, और स्त्रियोंके साथ धूर्त्तता; जो पुरुष इन सब कलाओंमे कु हैं उन्हींसे लोककी मर्यादाहै ॥ २२ ॥

छप्पय—सज्जनसों हित रीति दया परजनसों भाषहु । दुर्जन शठभाव प्रीति सन्तन प्रति राखहु । कपट खलनसों राखि वि राखौ बुधजनसों । क्षमा गुरुनसों राख शूरता वैरीगणसों । अरु धूर रखि त्रियनसों जो तू जग वसिवो चहै । अतिही कराल कलिकालमें चालनसों सुख लहै ॥ २२ ॥

जाड्यं धियो हरति सिञ्चति वाचि सत्यम् ।
मानोन्नतिं दिशति पापमपाकरोति ॥
चेतः प्रसादयति दिक्षु तनोति कीर्तिम् ।
सत्सङ्गतिः कथय किं न करोति पुंसाम् ॥ २३ ॥

सं० टी०—इदानीं सत्सङ्गतेः प्रभावं वर्णयति । जाड्यमिति । सत्सङ्गतिः साधुजनानां सङ्ग धियः बुद्धेर्जाड्यं मन्दतां हरति, वाचि वाण्यां सत्यं सिंचति, मानस्योन्नतिं वृद्धिं दिशति दद पापमपाकरोति दूरीकरोति । चेतश्चित्तं प्रसादयति प्रसन्नतां नयति । दिक्षु कीर्तिम् यशः त विस्तारयति । एवं च सत्सङ्गतिः पुंसां किंकिं न करोतीति कथय वद वसन्त तिलकावृत्तमिदम् ॥

भा० टी०—सज्जनोंकी संगति बुद्धिकी मन्दताको नाश करतीहै, णीको सत्यताकी धारासे सींचती है, मानको बढातीहै, पापोको दूर करती चित्तको प्रसन्न रखतीहै, और चारोंओर यशको फैलातीहै फिर बताओ मनुष्यको क्या २ लाभ नही पहुंचाती ॥ २३ ॥

दोहा—जडताई मतिकी हरत, पाप निवारत अङ्ग ।
कीरति सत्य प्रसन्नता, देत सदा सत्संग ॥ २३ ॥

जयन्ति ते सुकृतिनो रससिद्धाः कवीश्वराः ॥
नास्ति येषां यशःकाये जरामरणजं भयम् ॥ २४ ॥

सं० टी०—अधुना रससिद्धकवीश्वराणां सर्वोत्कर्षत्वमाह । जयन्तीति । रसेषु शृंगारादिषु सि परिपूर्णाः सुकृतिनः पुण्यवन्तः "सुकृती पुण्यवान् धन्यं" इत्यमरः । ते कवीश्वराः कवि

जयन्ति सर्वोत्कर्षेण वर्त्तन्ते । ते के, येषां यशःकाये कीर्तिरूपदेहे जरा च मरणं च ताभ्यां जातं भयं नास्ति । अनुष्टुब्वृत्तमिदम् ॥ २४ ॥

भा० टी०—जय होनेसे पुण्यात्मा कवीश्वरोंको धन्यवाद जिनने रसोंको सिद्ध किया, और जिनकी यशरूपी कायाको बुढापे और मृत्युसे भय नहीं है ॥ २४ ॥

दोहा—सबसे ऊंचे सुकविजन, जानत रसकौ सोत ।
जिनके यशकी देहकौ, जरामरण नहि होत ॥ २४ ॥

सूनुः सच्चरितः सती प्रियतमा स्वामी प्रसादोन्मुखः ।
स्निग्धं मित्रमवञ्चकः परिजनो निःक्लेशलेशं मनः ॥
आकारो रुचिरः स्थिरश्च विभवो विद्यावदातं मुखम् ।
तुष्टे विष्टपहारिणीष्टदहरौ संप्राप्यते देहिना ॥ २५ ॥

सं० टी०—भगवत्प्रसादादेव सच्चरितादियुक्ताः पुत्रादयो भवन्तीत्याह । सूनुरिति । सूनुः पुत्रः सच्चरितः सद्वृत्तः । अतिशयेन प्रिया प्रियतमा सती । स्वामी प्रसादे प्रसन्नतायां ऊर्ध्वं मुखं यस्येति प्रसादोन्मुखः । स्निग्धं स्नेहयुक्तं मित्रम् । अवंचकः परिजनः स्वकीयजनसमुदायः । निःक्लेशलेशमाधिरहितं स्वस्थं मनः । आकारो रुचिरः । स्थिरश्च विभवः ऐश्वर्यं । विद्ययाऽवदातं शोभितं मुखमिति । एते पदार्था विष्टपहारिणि स्वर्गवासिनीष्टदहरौ नारायणे तुष्टे प्रसन्ने सति देहिना पुरुषेण प्राप्यन्ते ॥ शार्दूलविक्रीडितं वृत्तमिदम् ॥ २५ ॥

भा० टी०—सपूतलडका, पतिव्रतास्त्री, हँसमुख स्वामी, प्रेमीमित्र, अवंचक, कुटुम्बी, क्लेशरहित मन, सुन्दरस्वरूप, स्थिर सम्पत्ति, और विद्यासे शोभित मुख, ये सब उस मनुष्यको प्राप्त होतेहैं जिसपर संपूर्ण मनोरथोंका देनेवाला स्वर्गवासी ईश्वर प्रसन्न हो ॥ २५ ॥

छप्पय—पुत्र मिलै सच्चरित नारीहू सतीसुहावन । स्वामी हँसमुख मिलै मित्रहू प्रीतिनिवाहन ॥ परिजन छलसों हीन कलहबिन मन सुखकारी ॥ आनन सुन्दर मिलै अचल लक्ष्मीहू भारी ॥ इमि सब शोभाकी खानि तो विद्यामुख हो मंडनौ ॥ जब होहिं प्रसन्न रमेशजू कल्मष सकल विखंडनौ ॥ २५ ॥

प्राणाघातान्निवृत्तिः परधनहरणे संयमः सत्यवाक्यम् ।
काले शक्त्या प्रदानं युवतिजनकथामूकभावः परेषाम् ॥
तृष्णास्रोतोविभङ्गो गुरुषु च विनयः सर्वभूतानुकम्पा ।
सामान्यः सर्वशास्त्रेष्वनुपहतविधिः श्रेयसामेषपंथा ॥ २६ ॥

सं० टी०-प्राणाघातादिति । प्राणस्य आत्मनोऽन्यस्य वा आघातो हननं तस्मान्निवृत्तिः । परधनहर संयमश्चित्तस्य नियमनं । सत्यवाक्यं यथार्थवचनम् । योग्यकाले शक्त्यादानम् । परेषां युवतिजनकथासु मूकभा वस्तूष्णीभावः । तृष्णालक्षणं स्रोतस्तस्यविभङ्गः आशाप्रवाहनिवर्तनम् । गुरुषु विनयो नम्रत्वम् । सर्वभूतेष्वनु कम्पा कृपा । एते पदार्थाः सर्वशास्त्रेषु सामान्यतो बाहुल्येन अनुपहतविधिः न त्यक्तो विधिमर्यादा एवंभूत श्रेयसां पुण्यानामेषः पन्थाः मार्गः प्रोक्तः स्रग्धरावृत्तमिदम् ॥ २६ ॥

भा० टी०-जीवहिंसा न करना, परधनहरण न करना; सत्यबोलना, समय पर यथाशक्ति दान करना, पराई स्त्रियोंकी कथापर ध्यान न देना, तृष्णाके प्रवाहको तोडना ( लोभको छोडना ) बडे लोगोंसे नम्रता करना, प्राणिमात्रपर दया करना, और शास्त्रानुसार विधिपूर्वक कार्य करना, ये सब मनुष्योंके कल्याणके मार्ग हैं ॥ २६ ॥

छप्पय-तजै प्राणकी घात और परधन नहिं राखे । पर युवतीके त्याग बचन झूंठे नहिं भाषै । निज हाथन जुति दान, देत तृष्णा को रोकत । दया सबनमें राख गुरुनके चरणन ढोकत । यह सम्मती श्रुति सुमृतिको सबकों सुखदायक सुभग । सब बिधि दायक कल्याणके अति उत्तम यह सुगम मग ॥ २६ ॥

प्रारभ्यते न खलु विघ्नभयेन नीचैः ।
प्रारभ्य विघ्नविहता विरमन्ति मध्याः ॥
विघ्नैः पुनः पुनरपि प्रतिहन्यमानाः ।
प्रारभ्य चोत्तमजना न परित्यजन्ति ॥ २७ ॥

सं० टी०-इदानीं उत्तममध्यमाधमपुरुषाणां कार्यारम्भे वैचित्र्यं वर्णयति । प्रारभ्य इति । नीचैः क्षुद्रैःविघ्नभयेन यत्किंचित्कर्म न प्रारभ्यते नानुष्ठीयते । मध्यमा आदौ प्रारम्भं कृत्वा पश्चात् विघ्नेन विहता बाधिताः संतः कार्यं तथैव परित्यजन्ति । उत्तमजनास्तु यदारब्धं कार्यं पुनः पुनः विघ्नेन प्रतिहता अपि न परित्यजन्ति ॥ वसन्ततिलकावृत्तमिदम् ॥ २७ ॥

भा० टी०-नीचमनुष्य विघ्नके भयसे कोई काम आरम्भही नहीं करते मध्यमपुरुष कार्यको आरम्भ तो करदेतेहैं पर विघ्न होतेही छोड देतेहैं, परन्तु उत्तमपुरुष बारंबार विघ्न होने परभी जिस कार्यको प्रारंभ करतेहैं उसे पूरा किये विना नहीं छोडते ॥ २७ ॥

छप्पय-करहिंन कार्य्यारम्भ बिघ्नभय अधम अनारी । मध्यम काजहिं छेंड विघ्नभय देहिं विसारी ॥ उत्तम त्यागहि नाहिं करे जो काज अरम्भा

रें अनेकन विघ्न तदपि रहँ अडिगअथम्भा ॥ धनजन बैभवमें पापबिनरहें
स जनसूरहैं । ते दै मूछनपै तावको फिरें जगत सुख पूरहैं ॥ २७ ॥

असन्तो नाभ्यर्थ्याः सुहृदपि न याच्यः कृशधनः।
प्रिया न्याय्या वृत्तिर्मलिनमसुभङ्गेऽप्यसुकरम् ॥
विपद्युच्चैः स्थेयं पदमनुविधेयं च महताम्।
सतां केनोद्दिष्टं विषममसिधारा व्रतमिदम् ॥ २८ ॥

सं० टी०—अधुना सत्पुरुषाणां स्वाभाविकगुणान् दर्शयति । प्रियेति । असन्तो दुष्टानाभ्यर्थ्याः न याच्याः । कृशधनोऽल्पधनः सुहृदपि नयाच्यः । सर्वेषां प्रिय न्याय्या विध्युक्ता वृत्तिः । असुभङ्गे प्राणभङ्गेऽपि लेनं पापमसुकरं नैव करोति । बिपद्यापत्तौ उच्चैः स्थेयम् । महत्पदे स्थितो भवति स्वगौरवं न त्यजति । तां पदमनुविधेयं । यथा महान्तः स्वपदे स्वस्थाने महत्वेन स्थिताः तथैवायमप्यनुकरोति । इति ममसिधाराव्रतं नैष्ठिकव्रतं सतां केनोद्दिष्टमुपदिष्टं न केनापि । अयं सतां स्वाभाविको गुण इत्यर्थः ॥ खरिणीवृत्तमिदम् ॥ २८ ॥

भा० टी०—अच्छे मनुष्योंको न्यायसें प्रेम होताहै, और वे प्राण जानेभी बुरे काम नही करते । दुष्टमनुष्यसे और स्वल्प धनवाले मित्रसेभी कैसी विपत्ति क्योंनपडे नही मांगते, और अपने गौरवको उच्चपदसे नहीं गिरने देते । नही जानपडता कि तलवारकी धारसेभी कठिन यह व्रत किसने इनको खाया है ? ॥ २८ ॥

कुण्डलिया—मांगै नांहि जो दुष्टसोंलेत मित्रकौ नांहि । प्रीति निवाहत पदमें न्यायवृत्ति मन माँहि ॥ न्यायवृत्ति मन माहिं उच्चपद प्यारौ नकों । प्राणन हूं के जात अकृत नहि भावत तिनकों ॥ खड्गधारव्रत र रहै केहूं नहि त्यागैं। सन्तनकों यह मंत्र दियौ कौने बिन मागैं ॥२८॥

## ॥ इति विद्वत्प्रशंसा ॥

---

# अथ मानशौर्य प्रशंसा।

क्षुत्क्षामोपि जराकृशोऽपि शिथिलप्रायोपि कष्टां दशा।
मापन्नोपि विपन्नदीधितिरपि प्राणेषु नश्यत्स्वपि ॥
मत्तेभेन्द्रविभिन्नकुम्भकवलग्रासैकबद्धस्पृहः।
किं जीर्णं तृणमत्ति मानमहतामग्रेसरः केसरी ॥ २९ ॥

सं० टी०-अतिहीनदशामापन्नोऽपि मानी पुरुषः स्वमाननाशकं किमपि कार्यं न करो सिंहान्योक्त्या ध्वनति । क्षुत्क्षामेति । क्षुत्क्षामोऽपि क्षुधया क्षामो हीनसत्वोपि, जरया, कृशो शिथिलप्रायोऽपि, एवं कष्टां दशामापन्नः प्राप्तोपि । विपन्नदीधितिरपि, निस्तेजाअपि । प्राणेषु नश्य मरणसमयं प्राप्तोपि । एवं जाते सति क्षुधानाशार्थं केसरी सिंहः किं जीर्णं तृणमत्ति भक्षय कथंभूतः केसरी महान्तश्चते इभेन्द्राश्च तेषां विभिन्ना विदारिताः कुम्भाः गण्डस्थलानि तेषां ये कवलास्तेषां ग्रासास्तेषु बद्धा स्पृहा येन । पुनः कथंभूतः मानेनाभिमानेन महान्तस्तेषामध्येऽ ऽग्रगण्योऽहंकार युक्तः । एवं सिंहवदहंकारवत् पुरुषार्थी पुरुषः क्षुद्रकार्यं नावलम्बते । श विक्रीडितवृत्तमिदम् ॥ २९ ॥

भा. टी०-भूखकेमारे दुर्बल, शक्तिहीन, बुढापेसे दुःखी कष्टकी दशाको तेजहीन और महान् पुरुषोंमें अग्रगण्य सिंह प्राण जानेवाले हों तौभी मद हाथीके मस्तकको फाडकर मांस खानेकी इच्छा रखताहै, सूखी घास खा नहीं, इस श्लोकका अभिप्राय यहहै कि चाहै जैसी विपत्ति क्यों न पडे उत्तम नीचकर्म कभी नहीं करते ॥ २९ ॥

कुण्डलिया—नाहर भूखौ उदर कृश वृद्ध वयस तनक्षीण । शि प्राण अतिकष्टसों चलिवेहीमें लीन । चलवेहीमें लीन तऊ साहस छांडै । मदगज कुम्भविदार मांसभक्षण मन आंडै । मृगपति भूखौ पुरानौ खात न जाहर । अभिमानिनमें मुख्य शिरोमणि सोहत नाहर॥२

स्वल्पं स्नायुवसावशेषमलिनं निर्मांसमप्यस्थि गोः ।
श्वा लब्ध्वा परितोषमेति न तु तत्तस्य क्षुधाशान्तये ॥
सिंहो जंबुकमङ्कमागतमपि त्यक्त्वा निहंति द्विपम् ।
सर्वः कृच्छ्रगतोऽपि वांछति जनः सत्वानुरूपं फलम् ॥३०॥

सं० टी०-सर्वे जनाः सत्त्वानुरूपं फलं प्राप्नुवन्तीति सिंहदृष्टान्तेन वर्णयति । स्वल्पमिति । स्नायुवसादयोऽन्तर्धातवस्तेषामवशेषोऽशमात्रं यस्मिन् तथाभूतं,तदपि मलिनं, निर्मांसं मांसरहितं, गोर्दृष श्वा लब्ध्वा प्राप्य सन्तोषमेति, परन्तु तत्तस्य क्षुधाशान्त्यर्थं न भवति । सिंहश्च जम्बुकं शृगालमङ्कं सम गतमपि त्यक्त्वा द्विपं हस्तिनमेव निहन्ति । एवं सर्वो जनः कृच्छ्रं कष्टं प्राप्तोऽपि सत्वानुरूपं सामर्थ्य फलं प्राप्नोति शार्दूलविक्रीडितं वृत्तम् ॥ ३० ॥

भा० टी०-जिसमें चर्बी आदि नाममात्रको लगी हुई है, और जिसमें विल्कुल नहीं है, ऐसे छोटेसे हाडके टुकडेको पाकर कुत्ता प्रसन्न होजाताहै, उससे उसकी भूख नहीं जाती, इसीप्रकार सिंहभी हस्तगत स्यारको छो हाथीहीको मारता है, इससे यह सिद्ध होता है कि समस्त पुरुष चाहे जैसे सागरमें क्यों न डवेहों सदा अपने पुरुषार्थके अनुसार फल पानेकी करते हैं ॥ ३० ॥

कुण्डलिया—कूकर सूखेहाडसों मानतहैं मनमोद। सिंह चलावत हाथ हि गीदड आये गोद ॥ गीदड आये गोद आंखहूंनांहि उघारै। महामत्त ज देख दौरके कुम्भ बिदारै॥ ऐसेही नर खरेबढीकृत करत दुहूंकर। करैं चिता नीच कूर कुत्सित ज्यों कूकर ॥ ३० ॥

लांगूलचालनमधश्चरणावपातम्।
भूमौ निपत्य वदनोदरदर्शनञ्च ॥
श्वा पिण्डदस्य कुरुते गजपुङ्गवस्तु।
धीरं विलोकयति चाटुशतैश्च भुङ्क्ते ॥ ३१ ॥

सं० टी०—इदानीं क्षुद्रजनस्य नीचत्वं महाजनस्योच्चत्वं च श्वगजदृष्टान्तेन द्योतयति। लाङ्गूलेति। पिण्डदस्य पिण्डं ग्रासं ददाति तस्य पुरतो लोभेन लाङ्गूलस्य पुच्छस्य चालनं तथा चाधश्चरणावपात णानां पतनं। तथा च भूमौ निपत्य पतित्वा वदनोदरयोर्दर्शनं च कुरुते। गजपुङ्गवो गजश्रेष्ठो धीरं था स्यात्तथा विलोकयति, चाटुशतैः प्रियवचनशतैः प्रार्थितः सन् भुंक्ते। एवं क्षुद्रजनो मानहीनस्थलेऽव- नितोऽपि पुनःपुनर्याचत एव। धीरः प्रार्थितोऽपि नैवायाति मानपुरःसरं गृह्णातीत्यर्थः। वसन्ततिलका मिदम् ॥ ३१ ॥

भा० टी०—कुत्ता टुकडादेनेवालेके आगे पूंछ हिलाकर, चरणोंपर गिरकर थ्वीपर लोटकर, पेट और मुख दिखलाकर अपनी दीनता प्रगट करता है, और जराज अपने आहार देनेवालेकी ओर एकवार गम्भीरतासे देखकर सौ सौ मीठीबातें हनेपर भोजन करता है, इसका यह आशय है कि नीचमनुष्यतो बिना किसी नकेभी वार २ मांगता है, परन्तु उत्तममनुष्य प्रार्थना करनेपरभी अङ्गीकार हीं करता ॥ ३१ ॥

दोहा—श्वान लेत लोयौ लपक, दीन मान करि दूर ॥
सौ कों दे भक्षण करत, धीर बीर गजपूर ॥ ३१ ॥

परिवर्तिनि संसारे मृतः को वा न जायते ॥
स जातो येन जातेन जाति वंशः समुन्नतिम् ॥ ३२ ॥

सं० टी०—परिवर्तिन्यागमापयवति संसारे को न जायते वा को न मृतः, तर्हि येन जातेनोत्पन्नेन कुलं समुन्नतिमुत्कर्षं याति प्राप्नोति स जातः। अनुष्टुब्वृत्तमिदम् ॥ ३२ ॥

भा० टी०—इस चक्रकेसमान घूमतेहुए संसारमें मरकर कौन जन्म नहीं पाता है, र्थात् सभी जन्म पाते हैं, परन्तु जन्म होना उसी पुरुषका सुफल है जिससे कुलकी न्नति होती है ॥ ३२ ॥

दोहा—जन्ममरण जगचक्रमें, ये दो बात महान ॥
करैजु उन्नति बंशकी जन्म्यों सोही जान ॥ ३२ ॥

कुसुमस्तबकस्येव द्वे गती स्तो मनस्विनाम् ॥
मूर्ध्नि वा सर्वलोकस्य शीर्यते वन एव वा ॥ ३३ ॥

सं० टी०—कुसुमेति । कुसुमानां पुष्पाणां स्तवको गुच्छस्तस्येव प्रशस्तं मनोऽस्य मनस्वी ते गती स्थितीस्तः के ते प्रकाराः यथा ग्रहीतरि सति पुष्पस्तवकेन सर्वलोकस्य मूर्ध्नि मस्तके अथवा वने विशीर्यंत । तथा मनस्विनः हितोपदेशकरणेन पूज्या भवन्तीत्यन्यथा तूष्णीमवतिष्ठ ज्ञातव्यम् । अनुष्टुब्वृत्तमिदम् ॥ ३३ ॥

भा० टी०—श्रेष्ठपुरुषोंकी गति फूलके गुच्छेके समान दोप्रकारकी कि या तौ वे सबलोगोंके शिरही पर विराजते हैं अथवा बनमेंही सूखकर न जाते हैं ॥ ३३ ॥

दोहा—पहुप गुच्छ सिरपै रहै, कै सूखै वन माँहि ॥
मान ठौर सत् पुरुष रहि, कै सुखदुख घन माँहि ॥ ३३

संत्यन्येऽपि बृहस्पतिप्रभृतयः संभाविताः
पञ्चषास्तान्प्रत्येष विशेषविक्रमरुची राहु
र्न वैरायते ॥ द्वावेव ग्रसते दिनेश्वरनि-
शाप्राणेश्वरौ भासुरौ भ्रांतः पर्वणि पश्य
दानवपतिः शीर्षावशेषीकृतः ॥ ३४ ॥

सं० टी०—शूराः समानपराक्रमान् पीडयन्ति अल्पवीर्यान् नेति राहुदृष्टान्तेन ध्वनति । सन् बृहस्पतिप्रभृतयः पंच वा षड्वा पंचषाः सम्भाविता महान्तःसन्ति । तान् प्रत्येषो राहुर्विशेषविक्र सन्नवैरायते न वैरं करोति । पर्वणि दिनेश्वरः सूर्यो निशाप्राणेश्वरश्चन्द्रः इमौद्वावेव भासुरौ तेजस् ग्रसते । कथंभूतो राहुः दानवपतिः शीर्षावशेषीकृतः अतो भ्रांतः । किमुक्तं वैरी सावशेषो न उन्त तु निःशेषम् । शार्दूलविक्रीडितवृत्तमिदम् ॥ ३४ ॥

भा० टी०—पराक्रमकी विशेष इच्छा करनेवाला दानवोंका पति वा राहु बृह आदि अन्य पांच वा छः ग्रहोंसे वैर नहीं करता, केवल सिरमात्रही रहजानेपरभी अतितेज रखनेवाले सूर्य और चन्द्रमाकोही अमावास्या और पूर्णमासीको जाकर ताहै । इसका अभिप्राय यह है कि शूरवीर अपने बराबरवालोंकाही सामना क निर्बलको नहीं सताते हैं ॥ ३४ ॥

कुण्डलिया—राजा निशि अरु दिवसको रबि शशि तेजनिधान ।
ग्रह इनसम नहीं ताते तजै निदान ॥ ताते तजै निदान आन

ो अकडत । रह्यौ शीसकौ राहु चाहकर जबतब पकडत ॥ ऐसेही रधीर मरतहू करत सुकाजा। गिरत पडत रणमाँहि सुभट पहुंचत हँ राजा ॥ ३४ ॥

वहति भुवनश्रेणीं शेषः फणाफणकस्थितां कमठ-
पतिना मध्येपृष्ठं सदा स विधार्यते ॥ तमपि कुरुते
क्रोडाधीनं पयोधिरनादरादहह महतां निःसी
मानश्चरित्रविभूतयः ॥ ३५ ॥

सं० टी०—वहतीति । शेषो नागः भुवनस्य संसारस्य श्रेणीं पंक्तिं फणाफलकस्थितां फणामण्डलस्थितां ति धारयति । स शेषः कमठपतिना कूर्मेण मध्येपृष्ठं पृष्ठमध्ये सदा धार्यते । तं कूर्मं पयोनिधिः समुद्रोऽना रात् क्रोडो वराहस्तदधीनं कुरुते । एवं महतां चरित्रविभूतयः ऐश्वर्याणि निःसीमानो मर्यादामतिक्रान्ता तिशयिताः अनेन महतां सामर्थ्यं निःसीममपरिमितमितिसूचितम् । हरिणीवृत्तमिदम् ॥ ३५ ॥

भा० टी०—चौदह भुवनोंकी पंक्ति शेषजी अपने फनापर धारण करते हैं, और नशेषजीको कच्छप अपनी पीठपर धारण करताहै, तथा इस कच्छपको समुद्रने अ- ादरसे वराहजी ( सूकर ) के आधीन करदियाहै, इससे यह सिद्ध होताहै कि हज्जनोंके चरित्रकी विभूति असीमहै ॥ ३५ ॥

छप्पय—धर्यौ धराकों शीस शेष अति कर्यौ पराक्रम । शेष सहित बभूमि कमठ धर रह्यौ बिनाश्रम ॥ कमठ शेष अरु भूमिभार वाराह रह्यौ र । इन सबहिनकौ भार एक जलके आश्रितकर ॥ इक इकसों विक्रम धिकही करत बडे अद्भुतसुकृति । तिनके चरित्र सीमारहित अति बिचित्र ाखत सुवृति ॥ ३५ ॥

वरं पक्षच्छेदः समदमघवन्मुक्तकुलिशप्रहारैरुद्गच्छद्बहल
दहनोद्गारगुरुभिः ॥ तुषाराद्रेःसूनोरहह पितरि क्लेशवि
वशे नचासौ सम्पातःपयसि पयसां पत्युरुचितः ॥ ३६ ॥

सं० टी०—क्लेशाक्रान्तं पितरं त्यक्त्वाऽन्यत्र स्वप्राणरक्षणार्थं गन्तुं नोचितमित्याह । तुषाराद्रेर्हिमाल स्य सूनोः पुत्रस्य मैनाकस्य समदमघवन्मुक्तकुलिशप्रहारैर्मदेन युक्तो मघवानिन्द्रस्तेन मुक्ताः कुलिशप्रहारा तैः पक्षच्छेदः वरं श्रेष्ठः कथंभूतैरुद्गच्छन्तो ये बहलदहनस्योद्गारास्तैर्गुरुभिः पृथुभिरेवंभूतैः खड्गप्रहारैः । स्मिन् सति । पितरि हिमाद्रौ क्लेशविवशे पक्षच्छेदेन क्लेशयुक्ते सति तं पितरं त्यक्त्वा पयसां पत्युः मुद्रस्य पयस्युदके संपातः भयेन पतनं नोचितं न योग्यम् । शिखरिणीवृत्तमिदम् ॥ ३६ ॥

भा० टी०—मदमें भरेहुए इन्द्रके चलाए हुए वज्रसे कि जिसकी ज्वाला अत्यन्त कठिन है, मैनाकका मरजाना अच्छा था, परन्तु उचित नहीं था, कि अपने पिता हिमाचलको क्लेशविवश छोडकर समुद्रमें अपने पंख बचावे ॥ ३६ ॥

कुण्डलिया—हिमगिरि सिर धुनकै कहै कहा कियौ मनाक। सहिवौ निजशीसपै इन्द्रवज्रपरिपाक॥ इन्द्रवज्रपरिपाक अग्निज्वालामें जरि नीकौ हौ सब भांति उहां सन्मुख है मरिबौ॥ दुरयो सिन्धुके माँहि कौलों द्वै है थिर। निलज लजायौ मोहि पिता नहि जान्यौ हिमागिरि॥

यदचेतनोऽपि पादैःस्पृष्टः प्रज्वलति सवितुरिनकांतः॥
तत्तेजस्वी पुरुषः परकृतविकृतिं कथं सहते ॥ ३७॥

सं० टी०—तेजस्वीपुरुषः परकृतविकृतिं नसहत इति इनकान्तदृष्टान्तेन वदति। यदिति यदचेतः चेतनारहितोऽपि इनकान्तः सूर्यकान्तः सवितुः सूर्यस्य पादैः किरणैः स्पृष्टः सन् प्रज्वलति। एवं सचेनस्तेजस्वी पुरुषः परकृतां विकृतिं विकारं कथं सहते नसहत इत्यर्थः। आर्यावृत्तमिदम्॥ ३७॥

भा० टी०—जब सूर्यकान्तमणि अचेतन होनेपरभी सूर्यके किरण पांवके स्पर्शसे जल उठता है तो सचेतन तेजस्वी पुरुष दूसरोंके अनादरको सहसक्तेहैं॥ ३७॥

दोहा—वचन बाणसम श्रवण सुन, सहत कौन रिस त्याग॥
सूरजपद परिहारतें, पाहन उगलत आग॥ ३७॥

सिंहःशिशुरपि निपतति मदमलिनकपोलभित्तिषुगजेषु
प्रकृतिरियं सत्ववतां न खलु वयस्तेजसो हेतुः॥ ३८॥

सं० टी०—सत्ववतां तेजसो हेतुः प्रकृतिरेव वयो नेति सिंहशिशुदृष्टान्तेन वदति। सिंहेति। सिंहो मदेन मलिनाः कपोलभित्तयो येषां तेषु गजेषु निपतति। इयं सत्ववतां प्रकृतिःस्वभावः अतो निश्चयेन तेजसो हेतुः वयो नेत्यर्थः। आर्यावृत्तमिदम्॥ ३८॥

भाषा टीका—सिंहका बच्चाभी मदसे मलिन कपोलोंवाले हाथियोंप झपटता है क्योंकि तेजस्वियोंका यही स्वभाव है। निश्चय जानों कि तेजका हेतु वस्था नहीं है॥ ३८॥

दोहा—टूट सिंह शिशु करिनिकर, विचलावै क्षणमांहि॥
तेजवानकी प्रकृति यह, तेजहेतु वय नांहि॥ ३८॥

इति मानशौर्यप्रशंसा।

## ॥ अथ द्रव्यप्रशंसा ॥

जातिर्यातु रसातलं गुणगणस्तस्याप्यधो गच्छता
च्छीलं शैलतटात्पतत्वभिजनः सन्दह्यतां वन्हिना ॥
शौर्ये वैरिणि वज्रमाशु निपतत्वर्थोऽस्तु नः केवलं
येनैकेन विना गुणास्तृणलवप्रायाः समस्ता इमे ॥ ३९ ॥

सं० टी०–इदानीं द्रव्यप्रशंसा वर्ण्यते । जातिरिति । जातिः स्वजातिः रसातलं यातु गच्छतु । गुणा शृद्गुणास्तेषां गणः समुदायो रसातलस्याप्यधो गच्छतात् । शीलं सद्वृत्तं शैलतटात् पततु । अभिजन कुलं " सन्तातिर्गोत्रजनन कुलान्यभिजनान्वयौ " इत्यमरः वन्हिना दह्यताम् । शौर्येण य चितुं न शक्य ऽतस्तद्वैरिणि शौर्ये तस्मिन् वज्रमाशु शीघ्रं निपततु । एवं सर्वस्य हानिर्भवतु परन्तु नोऽस्माकं केवलं मुख्योऽर्थो द्रव्यमस्तु किमर्थं येनैकेनार्थेनाविना पूर्वोक्तगुणास्तृणलवप्राया भवन्ति । शार्दूलविक्रीडितवृत्तमिदम् ॥ ३९ ॥

भा. टी.–चाहे जाति रसातलमें जाय, सब उत्तमगुण उससेभी नीचे चले जाँय, शीलता पर्वतसे गिरकर नष्ट होजाय, कुलके लोग अग्निसे जलजाँय, और शूरतारूपी शत्रुपर वज्र गिरपडे ( इनसे हमको कुछ प्रयोजन नहीं ) हमको तौ केवल एक द्रव्यसे प्रयोजनहै, जिसके बिना सब गुण तृणके समानहैं ॥ ३९ ॥

छप्पय–जाति रसातल जाहु जाहु गुण ताहूके तर । परौ शीलपर शैल अग्निमें जरौ सुपरिकर । शूरातनके शीश वज्र वैरिनकौ वरसहु । एक द्रव्य बहु भांति रैन दिन घन ज्यों सरसहु । जिहि बिन सब गुण हैं तृणहि सम कछु कारज नहिं करसकहिं । कंचन अधीन सबसोंज सुख बिन कंचन अकबक बकहिं ॥ ३९ ॥

तानीन्द्रियाणि सकलानि तदेव कर्म सा बुद्धिरप्र-
तिहता वचनं तदेव ॥ अर्थोष्मणा विरहितः पुरुषः
स एव त्वन्यः क्षणेन भवतीति विचित्रमेतत् ॥ ४० ॥

सं० टी०–अधुना श्लोकद्वयेन द्रव्यस्य श्रेष्ठत्वं वर्णयति । सामर्थ्ये सति यानि पूर्व मिन्द्रियाणि आसन् तान्येव सन्ति । तदेव कर्म । बुद्धिरपि सैव की दृश्यप्रतिहता नाशं न प्राप्ता । वचनमपि तदेव वक्तृशक्तिः । एवं सर्वथा पूर्वं यदासीत्तदस्ति परन्तु एकोऽर्थो द्रव्यं तस्योष्मा तेन विरहितः शून्यः स एव पुरुषः क्षणेनान्यो भवतीति एतत् विचित्रमाश्चर्यम् । अवश्यं द्रव्यं सम्पादनीयमितिभावः ॥ वसन्ततिलकावृत्तम् ॥ ४० ॥

भा. टी.–सब इन्द्रियांभी वहीहैं, सब व्यवहारभी वहीहैं, बुद्धिभी पहिलेकेसदृश प्रबलहै, बचनभी वहीहै, परन्तु बडे आश्चर्यकी बातहै की बिना धनके वही मनुष्य क्षणभरमें औरका और होजाताहै ॥ ४० ॥

दोहा–वै इंद्री वै कर्म हैं, वही बुद्धि वह ठौर ॥
धनविहीन नर क्षणहिमें, होत औरते और ॥ ४० ॥

यस्यास्ति वित्तं स नरः कुलीनः स पण्डितः स श्रुतवान् गुणज्ञः ॥ स एव वक्ता स च दर्शनीयः सर्वे गुणाः काञ्चनमाश्रयन्ति ॥ ४१ ॥

सं० टी०यस्य पुरुषस्य वित्तं धनमस्ति स नरः कुलीन एव । स एव पण्डितः स एव श्रुतवान् शास्त्रज्ञः, स एव गुणज्ञाता; स एव वक्ता । स एव दर्शनीयः द्रष्टुं योग्यः एते सर्वे गुणाः कांचनं सुवर्णमाश्रयन्ति । उपजातिर्वृत्तम् ॥ ४१ ॥

भा० टी०–जिसकेपास धन है वही मनुष्य कुलीन, पण्डित, गुणी वक्ता देखनेयोग्य होताहै इससे ज्ञात होताहै की सबगुण सुवर्ण (धन) केही आश्रितहैं ॥४१॥

दोहा–सोइ पंडित वक्ता गुणी, दर्शनयोग कुलीन ॥
जाके ढिग लक्ष्मी अहै, सब गुण तिहिं आधीन ॥ ४१ ॥

दौर्मन्त्र्यान्नृपतिर्विनश्यति यतिः संगात्सुतो लालना द्विप्रोऽनध्ययनात्कुलं कुतनयाच्छीलं खलोपासनात् ॥ ह्रीर्मद्यादनवेक्षणादपि कृषिः स्नेहः प्रवासाश्रयान्मैत्री चाप्रणयात्समृद्धिरनयात्त्यागात्प्रमादाद्धनम् ॥ ४२ ॥

सं० टी०—दौर्मन्त्र्यादिति । नृपतिर्भूपालः दौर्मन्त्र्यात् दुष्टप्रधानानुरोधात् विनश्यति नाशं प्राप्नोति यतिः सन्यासी संगात् स्त्र्यादिसंसर्गात् विनश्यति, सुतः पुत्रो लालनात् विनश्यति, विप्रो ब्राह्मणोऽनध्ययनात् विद्याध्ययनं विना नष्टो भवति, कुलं कुतनयात् कुमार्गगामिसुतात् विनश्यति, । शीलं सद्वृत्तं "शीलं स्वभावे सद्वृत्ते" इत्यमरः । खलोपासनात् दुष्टजनोपासनात् विनश्यति; ह्रीर्लज्जा मद्यान्मदिरापानात् नश्यति कृषिरनवेक्षणात् वारम्बारमनवलोकनात् विनश्यति, स्नेहः प्रीतिः प्रवासात् चिरकालविदेशनिवासाद्विनश्यति मैत्री चापणयात् अविनयात् विनश्यति, समृद्धिरैश्वर्य्यमनयादन्यायात् नाशं प्राप्नोति, धनं प्रमादात् व्ययात् नष्टं भवति । तस्मान्नृपादिभिर्दुष्टप्रधानाद्यनुसेवनं न कर्तव्यमितिभावः ॥ शार्दूलविक्रीडितं वृत्तम् ॥४२॥

भा० टी०–बुरे मंत्रियोंसे राजाका नाश होताहै, संगतिसे तपस्वी भ्रष्ट होजाताहै बहुत लाड प्यारसे पुत्र बिगडजाताहै, विद्या न पढनेसे ब्राह्मणका और कुपूतसे कुलका नाश होजाताहै; दुर्जनोंकी सेवा करनेसे शीलता और मद्य पीनेसे लज्जा जाती रहती है बिना देखभालकिये खेती और बिदेशमें रहनेसे स्नेह नष्ट होजाताहै । नम्रता न रखनेसे मित्रता, अनीति करनेसे ऐश्वर्य और असावधानतासे व्यय करनेसे धनका नाश होजाताहै ॥ ४२ ॥

छप्पय—कुत्सितमंत्री भूप सन्त बिनसत कुसंगतें। लाडलडाये पूत गोत कन्या कुढंगतें ॥ विनविद्यातें विप्र शील खल संग लियेतें । होत प्रीतिकी नाश वास परदेस कियेतें ॥ वनिता विनाश मदहाससों खेती विन देखे द्वगन । सुख जात अनय अनुरागतें, अतिप्रमादतैं जात धन ॥ ४२ ॥

दानं भोगो नाशस्तिस्रो गतयो भवन्ति वित्तस्य ॥
योन ददाति न भुंक्ते तस्य तृतीया गतिर्भवति ॥ ४३ ॥

सं० टी०—दानमिति । दानं भोगो नाशः । एतः तिस्रो वित्तस्य धनस्य गतयो भवन्ति । यः पुरुषो न ददाति न च भुंक्ते भोगं न कुरुते तस्य वित्तस्य तृतीया गतिर्नाशो भवति । तस्माद्धनवता पुरुषेण दानं भोगश्चावश्यमेव कर्तव्य इति तात्पर्यम् । आर्यावृत्तमिदम् ॥ ४३ ॥

भा० टी०—दान, भोग और नाश यहइ धनकी तीन गतिहैं, यदि धन न तौ भोगा जाय; और न दिया जाय तौ उसकी तीसरी गति होतीहै, अर्थात् नाश होजाताहै ४३

सोरठा—दान भोग अरु नाश, तीन होत गति द्रव्यकी ॥
नांहिन द्वैको वास, तहां तीसरौ वसत है ॥ ४३ ॥

मणिःशाणोल्लीढः समरविजयी हेतिनिहतो मद-
क्षीणो नागः शरदि सरितः श्यानपुलिनाः ॥
कलाशेषश्चन्द्रः सुरतमृदिता बालललना तनि-
म्नाशोभन्ते गलितविभवाश्चार्थिषु नृपाः ॥ ४४ ॥

सं० टी०—मणिरिति । शाणेन निकषपाषाणेनोल्लीढ उल्लिखितः कृशीकृतो मणिः । हेतिभिरायुधै कृतक्षतः समरे विजयशीलो योद्धा, मदेन क्षीणो नागो हस्ती, शरदि श्यानानि शुष्काणि पुलिनानि जलनिर्मुक्ततटानि यासां ताः सरितो नद्यः । कलया षोडशभागेनशेषोऽवशिष्टश्चन्द्रः । सुरते मृदिता चुम्बनालिङ्गनाद्युपमर्दितांगी बाला नवयौवना षोडशवयस्कास्त्री । एवमर्थिषु याचकेषु गलितः संक्रान्तः विभवः समृद्धिर्येषांते नृपाश्च । तनिम्ना तनोः कृशस्य भावस्तनिमा कार्श्यं तेन शोभन्त इत्यन्वयः । शोभारूपैकधर्मादीपकालंकारः ॥ शिखरिणीवृत्तमिदम् ॥ ४४ ॥

भा० टी०—सानसे खरादा हुआ मणि, समरमें शस्त्रोंसे घायल कियाहुआ शूर, मदसे उतरा हुआ हाथी, शरदृतुकी क्षीण नदी, द्वितीयाका चन्द्रमा काम केलिमें मर्दनकीहुई नवयौवना वाला स्त्री और अतिदान करनेसे दरिद्री राजा इन सबकी दुर्बलताहीसे शोभाहै ॥ ४४ ॥

कुण्डलिया—छोटी हू नीकी लगै मणि खरषाण चढीसु । वीरअंग कटि शस्त्रसों शोभा सरस बढीसु ॥ शोभा सरस बढीसु अंग गज मदकर छीनहि । द्वैज कला शशि सोह शरदि सरिता जिमिहीनहिं ॥ सुरत

दलमलीनार लहत सुन्दरता मोटी । अर्थिनकों धन देत घटी सो ना न छोटी ॥ ४४ ॥

परिक्षीणः कश्चित्स्पृहयति यवानां प्रसृतये स पश्चात्संपूर्णो गणयति धरित्रीं तृणसमाम् ॥ अतश्चा- नैकान्त्याद्गुरुलघुतयार्थेषु धनिनामवस्था वस्तूनि प्रथयति च संकोचयति च ॥ ४५ ॥

सं० टी०-वस्तूनां गुरुत्वलघुत्वहेतुरवस्थाभेदो नान्य इत्याह । परिक्षीणेति । कश्चित् पु क्षीणो दरिद्रः सन् यवानां प्रसृतये तुषाय स्पृहयति स्पृहां करोति । स एव पश्चादग्रे लक्ष्म्या स सन्निमां धरित्रीं तृणसमां तृणतुल्यां गणयति । अतो धनिनामनैकांत्यादेकस्थितेरभावादवस्था प्रयोजनेषु गुरुलघुतया वस्तूनि प्रथयाति संकोचयति च । यदा कालेनावस्थाया गुरुत्वं भवति गुरुत्वमेवेच्छति । यदा च तस्या लघुत्वं भवति तदा लघुत्वमेवाङ्गीकरोति । एवं कालपरत्वे स्थाभेदो भवति । शिखरणीवृत्तमिदम् ॥ ४५ ॥

भा० टी०-जब कोई मनुष्य दरिद्री होताहै तब तौं वह केवल एक एक अंज जौंकि इच्छा करताहै, परन्तु वही मनुष्य जब सर्बसम्पन्न अर्थात् धनी होजाताहै पृथ्वीको तृणसमान समझताहै, इसलिये येहि दोनों चंचलअवस्था मनुष्यको गुरु लघु बनातीहैं तथा बस्तुओंको फैलाती और समेटती है ॥ ४५ ॥

छप्पय-होत वहै धनहीन तबै अंजलि जो मांगत । धन पाये वैराग ताहि महि तृणसम लागत ॥ दशा यहीं द्वैचपल नराहैं लघु दीर्घ बनावे कराहैं नीचको ऊंच ऊंचको नीच जनावे ॥ जग यह बिलोकि सज्जनपुर सदा रहैं समता धरे ॥ ते पूर्ण रहैं अम्भोधि जनु प्रेम ईशयशमे करे ॥ ४५

राजन्दुधुक्षसि यदि क्षितिधेनुमेनां तेनाद्य वत्समिव लोकममुं पुषाण ॥ तस्मिंश्च सम्यगनिशं परिपोष्य- माणे नानाफलैः फलति कल्पलतेव भूमिः ॥ ४६ ॥

सं० टी०-इदानीं राज्ञा भूमिपालनप्रकारमाह । राजन्निति । हे राजन् । यद्येनां क्षितिं पृथ्वीरूपा धेनुं दुधुक्षसि दोग्धुमिच्छासि । तेन दोहनेनाद्याधुनेमं लोकं प्रजां वत्समिव पुषाण पोषय तस्मिन् लोके वत्से सम्यक् परिपोष्यमाणे सतीयं भूमिः कल्पलतेवानिशं सर्वकालं नानाफलैः फलं फलं ददाति । वसन्ततिलकावृत्तमिदम् ॥ ४६ ॥

भा० टी०-हे राजन्! यदि तुम पृथ्वीरूपी धेनुको दुहा चाहतेहो तौ प्रजारू बछडेका तन मन धनसे पालनकरो, यदि उसका पालन भली प्रकार किया जाय तो पृथ्वी कल्पवृक्षके समान अनेक प्रकारके फल देगी ॥ ४६ ॥

दोहा—धेनु धराकौ चहत पय, प्रजा वत्स करि मान।
याकौ परिपोषण किये, कल्पवृक्ष सम जान॥ ४६॥

सत्यानृता च परुषा प्रियवादिनी च हिंस्रा दया-
लुरपि चार्थपरा वदान्या॥ नित्यव्यया प्रचुरनि-
त्यधनागमा च वेश्यागनेव नृपनीतिरनेकरूपा॥४७॥

सं० टी०—अधुना नृपनीतिर्वेश्याङ्गनेवानेकरूपेत्याह। सत्येति कुत्रचिदव्ययं सर्वत्र वक्तव्यम्। कुत्रचित्सत्या सत्यत्वेन, अनृतानृतत्वेन, पुरुषा काठिन्येन, मृदुवादिनी मधुरभाषणेन, हिंस्रा हिंसया, दयालुः कृपालुत्वेन, अर्थपरार्थग्रहणेन, वदान्या दातृत्वेन, नित्यव्यया धनापगमे, यस्य यन्नियमितं तेन प्रचुरं नित्यं धनानामागमनं यस्यां तादृशी। एवं नृपते राज्ञो नीतिः कर्तव्यतानेकरूपा। यथा वाराङ्गना वेश्या नानावेषान् करोति तथा राजनीतिरपि नानारूपा भवति। उपमालंकारोऽत्र। वसन्ततिलकावृत्तमिदम्॥ ४७॥

भा० टी०—राजनीति वेश्याके समान अनेक प्रकारसे बर्तती है, कहीं यह सत्य होतीहै, कहीं असत्य होतीहै,कहीं कठोर और कहीं प्रियभाषिणी होतीहै कहीं हिंसक और दयालु होतीहै, कहीं कृपण औरकहीं उदार होतीहै, कहींअधिक द्रव्यव्यय करनेवाली और कहीं बहुत संचय करनेवाली होती है॥ ४७॥

छप्पय—सांची है सब भांति सदा सब बातनि झूठी। कबहुं रोससों भरी कबहुं प्रिय बनै अनूठी। हिंसाको डर नाहि दयाहू प्रगट दिखावत। धन लेवेकी वान खर्चहू धनको भावत। राखत जुभीर बहुनरनकीसदा सवां रत रहतगृह। इह भांतिरूप नाना रचत गनिकासम नृपनीति यह॥४७॥

विद्या कीर्तिः पालनं ब्राह्मणानां दानं भोगो मित्र-
संरक्षणं च॥ येषामेते षड्गुणा न प्रवृत्ताः कोऽर्थ-
स्तेषां पार्थिवोपाश्रयेण॥ ४८॥

सं० टी०—"विद्यादिषड्गुणैर्विना मनुष्याणां नृपाश्रयो व्यर्थ" इत्यधुना वदति। विद्या, कीर्तिर्यशः, ब्राह्मणानां पालनं रक्षणं, दानं, भोग, विपद्भ्यो मित्राणां संरक्षणं, एते पूर्वकथिताः षड्गुणा येषां न प्रवृत्ता न प्राप्तास्तेषां पार्थिवस्य नृपस्योपाश्रयेणाश्रयेण कोऽर्थः कोऽपि न। शालिनीवृत्तमिदम्॥४८॥

भा० टी०—विद्या, यश, ब्राह्मणोंको पालन, दान, भोग, और मित्रोंकी रक्षा करना, जिसमें यह छः गुण विद्यमान नहीं हैं उनको राजाकी सेवा करनेसे क्या मिलसक्ताहै॥ ४८॥

दोहा—विद्या यश द्विजपालना, दान भोग सन्मान।
नृपसेवा इन छः बिना, निष्फल जान सुजान॥ ४८॥

यद्धात्रा निजभालपट्टलिखितं स्तोकं महद्वा धनं
तत्प्राप्नोति मरुस्थलेऽपि नितरां मेरौ ततो नाधिकम् ॥
तद्धीरो भव वित्तवत्सु कृपणां वृत्तिं वृथा मा कृथाः
कूपे पश्य पयोनिधावपि घटो गृह्णाति तुल्यं जलम् ॥४९॥

सं० टी०-" विधात्रा यत् स्वभालपट्टलिखितं ततोऽधिकं कोऽपि न प्राप्नोति " इति दृष्टान्तेनवदति । यद्धात्रेति विधात्रा ब्रह्मणा यन्निजे स्वकीये भालपट्टे स्तोकमल्पं वा महद्बहुधनं लिखि तदेव पुरुषो मरुस्थले निर्जलदेशे मेरौ च सुवर्णाद्रौ नितरां निश्चयेन प्राप्नोति अतस्त्वं धीरो भव वित्तवत्सु द्रव्याढ्येषु कृपणां दीनां वृत्तिं वर्तनं जीवनं वा वृथा मा कृथाः मा कुरु । अत्र दृष्टान्त पश्य । कूपेऽथवा पयोनिधौ समुद्रे घटः तुल्यं स्वप्रमाणानुसारं जलं गृह्णाति । शार्दूलविक्रीडि वृत्तमिदम् ॥ ४९ ॥

भा० टी०-थोडा अथवा बहुत जितना धन विधाताने भाग्यमें लिखदियाहै व अवश्यही निर्जल और शून्यस्थानोंमेंभी मिलजायगा, परन्तु उससे अधिक जो सुमे पर्वतपरभी चलेजाओ तो न मिलेगा; इसलिये धैर्य धारण करो और धनीके निव वृथा अपनी दीनताको प्रगट मत करो। देखो, कुएमें और समुद्रमें घडा समान जल भरताहै ॥ ४९ ॥

दोहा-भाललिख्यौ जु विरंचि वह, घटै वढै कछु नांहि ।
सुरधर कञ्चन मेरुसम, जान लेहु मनमांहि ॥ ४९ ॥

त्वमेव चातकाधारोऽसीति केषां न गोचरः ॥
किमम्भोदवरास्माकं कार्पण्योक्तिं प्रतीक्ष्यसे ॥ ५० ॥

सं० टी०-मेघं प्रति चातकस्योक्तिः । त्वमेति । हे अम्भोदवर ! हे मेघश्रेष्ठ ! त्वं चातक नामाधारः आश्रयोऽसीति केषां गोचरः प्रत्यक्षं न अपितु सर्वेषां गोचरः । तस्मादस्माकं चातका कार्पण्योक्तिं किं प्रतीक्ष्यसे किमुपेक्षसे । अनुष्टुबूवृत्तमिदम् ॥ ५० ॥

भा० टी०-हे मेघश्रेष्ठ! यह कौन नहीं जानताहै कि तुमहीं हम चातकों आधार हौ, फिर अब तुम हमारी दीनताकी क्यों प्रतीक्षा करते हो ॥ ५० ॥

दोहा-मेघ तुम्हे जाने जगत, पपिहा प्राणअधार ।
दीनवचन चाहत सुन्यौ, यह नहिं उचित बिचार ॥ ५० ॥

रे रे चातक सावधानमनसा मित्र क्षणं श्रूयताम-
म्भोदा बहवो वसन्ति गगने सर्वेऽपि नैतादृशाः ॥
केचिद्वृष्टिभिरार्द्रयन्ति वसुधां गर्जन्ति केचिद्वृथा
यं यं पश्यसि तस्य तस्य पुरतो मा ब्रूहि दीनं वचः ॥५१॥

सं० टी०—चातकोक्तेरुत्तरमिदम् । रे रे चातकेति । रे रे इति वीप्सा । हे चातक ! सावधानमनसा स्वस्थचेतसा क्षणं क्षणमात्रं श्रूयतां मम वचः इति शेषः । हि यस्माद्गगनेऽम्भोदा मेघा बहवो वसन्ति किन्तु सर्वे एतादृशाः करुणावन्तो न, कुतः केचिद्वृष्टिभिर्वसुधां पृथ्वीमार्द्रयन्ति जलेन सिंचयन्ति । केचिद्वृथा गर्जन्ति गर्जनां कुर्वन्ति । तस्मात् हे मित्र ! यं यं मेघं पश्यसि तस्य तस्य पुरतोऽग्रे दीनं वचो मा ब्रूहि मा वद ॥ दातारं प्रति याचना कर्तव्या सर्वान्प्रति नेतिभावः । शार्दूलविक्रीडितवृत्तमिदम् ॥ ५१ ॥

भा० टी०—हे चातक ! सावधान होकर मेरी बातको सुन, आकाशमें मेघ बहुतसे हैं परन्तु सब एकसे नहीं होते, कितनेही तौ जल बर्षाकर पृथ्वीको तृप्तकरतेहैं, कितने वृथाही गर्जना कियाकरतेहैं, इसलिये जिसको तूं देखै उसीके आगे दीन होकर मत मांग ॥ ५१ ॥

कुण्डलिया—चातक सुन मेरे वचन सावधान मन हाय । मेघ बहुत आकाशमें प्रकृति जुदीपन जोय ॥ प्रकृति जुदीपन जोय कोय वरसें महि भारी ॥ कोई बूंद न देहिं गरज कर उपल प्रहारी ॥ ताहीसों में कहत लेय मत यह सिर पातक । देखै जोही मेघ ताहि मत मांगै चातक ॥ ५१ ॥

इति द्रव्यप्रशंसा समाप्ता ।

अकरुणत्वमकारणविग्रहः परधने परयोषिति च
स्पृहा ॥ सुजनबन्धुजनेष्वसहिष्णुता प्रकृतिसिद्ध-
मिदं हि दुरात्मनाम् ॥ ५२ ॥

सं० टी०—इदानीं दुर्जनानां प्रकृतिसिद्धलक्षणं द्योतयति । अकरुणेति । प्राणिमात्रेषु अकरुणत्वं दयाहीनता, अकारणविग्रहः कारणं विना वैरं, परस्यान्यस्य धने द्रव्ये तथाच परस्य योषिति स्त्रियां स्पृहेच्छा । सुजनेषु बन्धुजनेषु सहिष्णोर्भावः साहिष्णुता न सहिष्णुता असहिष्णुता असहनशीलता । इदं दुरात्मनां प्रकृतिसिद्धं स्वाभाविकं लक्षणमिति शेषः । द्रुतविलम्बितंवृत्तम् ॥ ५२ ॥

भा० टी०—दया न करना, बिना कारणही वैर करना, पराये धन और स्त्रीकी इच्छा करना, कुटुम्बियों और मित्रोंकी बात न सहना, ये सब दुर्जनोंके स्वाभाविक लक्षण हैं ॥ ५२ ॥

दोहा—दयाहीन बिनकाज रिपु, तस्करता परपुष्ट ।
सहि न सकत सुख बन्धुकौ, यह सुभावसों दुष्ट ॥ ५२ ॥

दुर्जनः परिहर्तव्यो विद्यया भूषितोऽपि सन् ॥
मणिनालङ्कृतः सर्पः किमसौ न भयङ्करः ॥ ५३ ॥

सं० टी०-विद्यावानपि दुर्जनः परिहर्तव्य इति सर्पदृष्टान्तेन वदति । दुर्जन इति । दुर्जनो दु विद्यया भूषितोऽप्यलंकृतोऽपि सन् परिहर्तव्यस्त्याज्योऽस्ति । असौ सर्पो मणिनाऽलंकृतोऽपि भ तीति भयंकरो न किम् । अपितु भयंकर इत्यर्थः । अनुष्टुब्वृत्तमिदम् ॥ ५३ ॥

भा० टी०-दुर्जन यदि विद्यावान्‌भी हो तोभी उसकी संगति मत करे । क मणिसे भूषित सर्प भयंकर नहीं होताहै ॥ ५३ ॥

सोरठा-विद्यायुतहू होय, तदपि दुष्ट तजदीजिये ।
सर्पजु मणिधर कोय, भयकारी तेहुँ जानिये ॥ ५३ ॥

जाड्यं ह्रीमति गण्यते व्रतरुचौ दम्भः शुचौ कैतवं
शूरे निर्घृणता मुनौ विमतिता दैन्यं प्रियालापिनी ॥
तेजस्विन्यवलिप्तता मुखरता वक्तर्यशक्तिः स्थिरे तत्को
नाम गुणो भवेत्स गुनिणां यो दुर्जनैर्नाङ्कितः ॥ ५४ ॥

सं० टी०--गुणिनां सर्वे गुणा दुर्जनैः कलंकिता इत्याह । जाड्यमिति । गुणिनां गुणोयो दु नौंकितःस को नाम भवेत् नास्त्येव । तत्कथं ह्रीमति लज्जावति पुरुषे जाड्यं मौर्ख्यं स्थापयन्ति । व्रते प्रीतिर्यस्य तस्मिन् पुरुषे दम्भो गण्यते । शुचौ शुचिमति कितवस्य धूर्तस्य भावः कैतवं प्रतारणं धूर्तता निर्घृणता निर्दयत्वम् । मुनौ मौनवति विमतिता प्रज्ञाराहित्यं वक्तुमशक्तिः । प्रियालापिनि प्रियव दैन्यं दीनत्वं । तेजस्विन्यवलिप्तता वक्तरि मुखरता वाचालता । स्थिरे पुरुषे अशक्तिः शक्त्यभाव एवं सर्वेष्वपि गुणेषु दोषारोपो दुर्जनैः क्रियते । एवं दुर्जनैर्नाङ्कितो न निन्दित इत्थं गुणो नास्ति शार्दूलविक्रीडितं वृत्तमिदम् ॥ ५४ ॥

भा० टी०-दुर्जन लज्जावान् पुरुषको मूर्ख, व्रतधारीको दंभी, पवित्रको प षंडी, शूरको निर्दयी, मौनव्रत करनेवालेको मूर्ख; मिष्टभाषीको दरिद्री, तेजस्वी गर्वीला, वक्ताको बकवादी, और स्थिरचित्तवालेको आलसी कहतेहैं, इससे यह ज्ञा होताहै कि ऐसा कोई गुण नहीं है जिसको दुर्जनोंने कलङ्क नहीं लगाया ॥ ५४ ॥

छप्पय-लज्जायुत जो होय ताहि मूरख ठहरावत । धर्मवृत्ति म मांहि ताहि दम्भी कहि गावत । अति पवित्र जो होय ताहि कपट कहि बोलत । धरै शूरता अंग ताहि पापी कहि तोलत । विक्रमी मा प्रियवचन रत तेजवान लम्पट कहत । पण्डित लवार कहै दुष्टजन गुण तज औगुण गहत ॥ ५४ ॥

लोभश्चेदगुणेन किं पिशुनता यद्यस्ति किं पातकैः
सत्यं चेत्तपसा च किं शुचि मनो यद्यस्ति
तीर्थेन किम् ॥ सौजन्यं यदि किं गुणैः स्वम-

हिमा यद्यस्ति किं मंडनैः सद्विद्या यदि किं जनै-
रपयशो यद्यस्ति किं मृत्युना ॥ ५५ ॥

स० टी०–लोभश्चेदिति । लोभो लुब्धकता चेदगुणेनगुणरहितेन किं स्वल्पोपि लोभः सर्वं गुणाना-च्छादयतीति भावः । यदि पिशुनता दौर्जन्यमस्ति तर्हि पातकैः किं पिशुनता सर्वोपरि पातकमिति भावः । सत्यं यथार्थभाषणं चेदस्ति तर्हि तपसा किम् । सत्यमेव सर्वश्रेष्ठं तपः । यदि मनोन्तःकरणं शुचिः शुद्धमस्ति तर्हि तीर्थेन तीर्थ यात्रया किम् । शुद्धान्तः करणे सर्वतीर्थानि तिष्ठन्ति इति भावः । यदि सौजन्यं सुजनता-ऽस्ति तर्हि निजैरात्मीयजनैः किम् । सुजनस्य सर्वे लोका आत्मीया इति भावः । यदि सु महिमा सुश्लो-कश्चेत् तर्हि मण्डनैरितरभूषणैः सुन्दर वस्त्रालंकार धारणैः किम् । सुमहिमैव परमोत्तमभूषणम् । यदि सद्विद्या उत्कृष्टविद्याऽस्ति तर्हि धनैः किम् । सर्वधनेषु विद्याधनं श्रेष्ठतमं इति भावः । यद्यपयशोऽपकीर्तिरस्ति तर्हि मृत्युना किं तस्यैव मृत्युकार्यं करित्वादिति भावः । शार्दूलविक्रीडितवृत्तमिदम् ॥ ५५ ॥

भाषा टीका–जिसमें लोभहै उसमें दूसरे अवगुणोंकी क्या आवश्याकताहैं, जो कुटिल है उसे और उपाय करनेका क्या आवश्यकताहै, जो सत्यवादीहै उसे तपसे क्या प्रयोजन है, जिसका मन शुद्ध है उसको तीर्थ करनेसे क्या अधिक होगा, जो सज्जनहैं उनको मित्र और कुटुम्बियोंकी क्या कमीहै, यशस्वी मनुष्योंके लिये यशसे बढकर दूसरा कौन भूषण है, विद्यावान्को अन्यधनकी क्या आवश्यकता है, जिसको अपयश है उसको मृत्युसे बढकर क्या चाहिये अथात् अपयशी मनुष्यकेलिये मृत्युही उत्तम है ॥ ५५ ॥

छप्पय–भयौ लोभ मनमांहि कहा तब अवगुण चहिये । निन्दा सबकी करत तहां सब पातक लहिये । सत्यबचन तप जान शुद्ध मन तीरथ जानहु । होत सुजनता जहां तहां गुण प्रगट प्रमानहु । यश जहां कहां भूषण चहै सद्विद्या जहँ धन कहा । अपयश जु छयौ या जगतमें तिन्है मृत्युही है महा ॥ ५५ ॥

शशी दिवसधूसरो गलितयौवना कामिनी सरो
विगतवारिजं मुखमनक्षरं स्वाकृतेः ॥ प्रभुर्धनप-
रायणः सततदुर्गतः सज्जनो ॥ नृपाङ्गणगतः खलो
मनसि सप्त शल्यानि मे ॥ ५६ ॥

सं० टी०–अधुना स्वमनसि यानि दुःखानि तानि निरूपयति । शशीति । शशी चन्द्रमा दिवसे धूसरो मलिनः गलितं नष्टं यौवनं तारुण्यं यस्यास्तादृशी कामिनी, विगतं वारिजं कमलं यस्मात्तत् सरः सरोवरम् ( शोभना आकृतिर्यस्य ) स्वाकृतिस्तस्य ( न विद्यते अक्षराणि वर्णाः यस्मिंस्तत् ) अनक्षरं मुखं, सततंदुर्गतः निरंतरं दारिद्र्यं प्राप्तः सज्जनः, तथा नृपस्य राज्ञोऽगणे चत्वरे गतः प्राप्तः खलो दुर्जनः, एते सप्तमे मम मनसि शल्यानि शल्यवत् प्रहारं कुर्वन्ति ॥ पृथ्वीवृत्तम् ॥५६॥

भा० टी०-दिनका मलिनचन्द्रमा, यौवनहीन स्त्री, कमलरहित सरोवर, सु- रूपवान् मनुष्य मूर्ख, धनवान् कृपण, सज्जनपुरुष दरिद्री, राजसभामें दुष्ट, ये सा हमारे हृदयमें कांटेके समान खटकतेहैं ॥ ५६ ॥

कुण्डलिया-फीकौ है शशि दिवसमें, कामिन यौबनहीन। सुन्द मुख अक्षरविना, सरवर पंकज क्षीन ॥ सरवर पंकजक्षीन होत प्र लोभी धनकौ। सज्जन कपटी होत नृपति ढिगवास खलनकौ॥ सातों हैं शल्य परम छेदत या जीको। ब्रजनिधि इनको देख होत मे मन फीकौ ॥ ५६ ॥

न कश्चिच्चण्डकोपानामात्मीयो नाम भूभुजाम् ॥
होतारमपि जुह्वानं स्पृष्टो दहति पावकः ॥ ५७ ॥

सं० टी०-अत्यन्तक्रोधिनो नृपस्य कोऽपि प्रीत्यर्हो न भवतीति पावकदृष्टान्तेनाह नेति चण्डकोपानामुग्राणां भूभुजां राज्ञां कश्चिदात्मीयः प्रीत्यर्हो न भवति, यथा पावकोऽग्निर्होतारं कर्त्तारमपि जुह्वानं होमसमयेऽपि स्पृष्टः सन्दहति। अनुष्टुब्वृत्तम् ॥ ५७ ॥

भा० टी०-अत्यन्त क्रोधी राजाओंका कोईभी मित्र नहीं होता जैसे होमकर वालेकोभी अग्नि आहुति देतेसमय स्पर्शकरतेही जलादेताहै ॥ ५७ ॥

दोहा-जे अतिपापी भूप तें, काहूसों न कृपाल।
होमकरतहूं द्विजनकों, दहत अग्निकी ज्वाल ॥ ५७ ॥

मौनान्मूकः प्रवचनपटुश्चाटुलो जल्पको वा धृष्टः
पार्श्वे वसति च तदा दूरतश्चाप्रगल्भः ॥ क्षान्त्या
भीरुर्यदि न सहते प्रायशो नाभिजातः सेवा-
धर्मः परमगहनो योगिनामप्यगम्यः ॥ ५८ ॥

सं० टी०-इदानीं सेवाधर्मकाठिन्यमाह-मौनेति। यदि सेवकेन मौनं धृतं तर्हि मूकः। प्रवचन- श्चेद्वातुलो वार्तादितोऽथवा जल्पको वाचालः पार्श्वे स्थितः सन् धृष्टः, दूरतो भवति चेदप्रगल्भः। क्षान्ति क्षमा धृता चेत् भीरुर्भयशीलः। यदि न सहते तदा नाभिजातः मूर्खोऽप्रयोजकः, एवं प्रायशः सेवाधर्मः परमगहनः कठिनो योगिनामप्यगम्यः कर्तुमशक्यः। मन्दाक्रान्तावृत्तमिदम् ॥ ५८ ॥

भा० टी०-यदि सेवक मौन रहे तौ मूक गिनाजाताहै, यदि बोलनेमें चतुर तौ बातूनी अथवा बकवादी समझाजाताहै, यदि पास रहे तौ ढींठ और दूर रहे तौ मू कहाताहै, यदि सहनशील हो तौ डरपोक और असहनशील हो तौ कुलहीन कहाजा ताहै, सारांश यहहै कि सेवाधर्म अत्यन्त कठिनहै, योगियोंसेभी होना दुर्गमहै ॥ ५८

दोहा--चुप गूंगो लापर बचन, निकट ढीठ जड दूर।
क्षमाहीन परिहास खल, सेवा कष्टहि पूर ॥ ५८ ॥

उद्भासिताखिलखलस्य विशृङ्खलस्य प्राग्जातवि-
स्तृतनिजाधमकर्मवृत्तेः ॥ दैवादवाप्तविभवस्य गुण-
द्विषोऽस्य नीचस्य गोचरगतैः सुखमास्यते कैः ॥५९॥

सं० टी०—येऽधमजनान् सेवन्ते ते सुखिनो न भवन्तीत्याह । उद्भासितेति । नीचस्यक्षुद्रजनस्य गोचरगतैः समीपवर्तिभिः पुरुषैः कैः सुखमास्यत उपविश्यते । कथम्भूतस्य नीचस्य उद्भसिताखिलखलस्य उद्भासिताः प्रकटीकृता अखिलाः समस्ताः खला येन । पुनः प्राक् पूर्वजाता इदानीं विस्तृता निजा स्वकीया धर्मकर्मणां वृत्तिर्येन । एवं सति दैवाददृष्टवशात् प्राप्तो विभवो येन । पुनः कथम्भूतस्य गुणान् सद्गुणान । द्विषतीति गुणद्विट् तस्य गुणाद्विषः । एवम्भूतगुणस्य समीपे कैरपि सुखेन नैवं उपविष्टुं श-क्यतेऽथवा सुखं प्राप्यते । वसन्ततिलकावृत्तमिदम् ॥ ५९ ॥

भाषा टीका—जिसकी सम्पूर्ण दुष्टता भलीप्रकार प्रगट होगई है, जिसके पूर्वजन्मके अधमकर्म इसजन्ममें उदय हो रहेहैं, जो दैवात् धनी होगयाहै, और जो अच्छे गुणोंसे द्वेष रखताहै, ऐसे निरङ्कुश नीचके पास बैठनेसे कौन सुख पाताहै ॥ ५९ ॥

कुण्डलिया--संग न करिये दुष्टकौ जासों होय उपाध ॥ पूर्वजन्मके पाप सब उपज उठावैं व्याध ॥ उपज उठावैं व्याध दैवबल होय धनीसे ॥ शुभगुण राखै द्वेष कुबुधकों मित्र करैसो ॥ निपट निरंकुश नीच तासु चितरंग न धरिये ॥ दुखमय दुर्गुणखान तासुकौ संग न करिये ॥ ५९ ॥

आरम्भगुर्वी क्षयिणी क्रमेण लघ्वी पुरा वृद्धिमती
च पश्चात् ॥ दिनस्य पूर्वार्द्धपरार्द्धभिन्ना छायेव
मैत्री खलसज्जनानाम् ॥ ६० ॥

सं० टी०—अधुना खलसज्जनयोर्मित्रताया विभिन्नतां वर्णयति । आरम्भगुर्वी इति । आरम्भे प्रार गुर्वी महती । क्रमेण क्षयिणी प्रतिक्षणं क्षयशीला, पुरा पूर्वं लघ्वी पश्चात् वृद्धिरस्यास्ती वृद्धिमती, दिनस्य पूर्वार्द्धं च परार्द्धं च ताभ्यां भिन्ना छायेव खला दुर्जनाश्च सज्जनाः साधव तेषां मैत्री मित्रता भवति । यथा दिवसपूर्वार्द्धे छाया महती तदुत्तरे दिवसवृद्धया क्षयिणी तथा खला मैत्री आरम्भे गुर्वी परिणामें लघ्वी भवति । यथा दिनपरार्द्धे आरम्भे छाया लघ्वी पश्चात् दिनक्षये वृद्धिम भवति तथा सज्जनानां मित्रता आरम्भे लघ्वी परिणामे वृद्धिमती भवतीत्यर्थः । उपजाति वृत्तमिदम् ॥ ६०

भा० टी०—दुर्जनमनुष्यकी प्रीति प्रातःकालके अनन्तरकी छायाके समानहै, ज प्रारम्भमें लम्बी चौडी होतीहै और फिर क्रमसे घटती जातीहै, परन्तु सज्जनकी मित्र

मध्यान्हके उपरान्तकी छायाके समानहै, जो आरम्भ में कम होतीहै और बढतीही जाती है ॥ ६० ॥

कुण्डलिया-छाया जैसी प्रातकी तैसी दुर्जनप्रीति ॥ पहिलै होय पुनि घटनलगे तजरीति ॥ घटनलगै तजरीति प्रीतिकौ करै बहानौ पै सज्जनकी प्रीति विरुध याके मन मानौ ॥ पहिलै सूक्षमरूप दिनरात सवाया ॥ सुजन प्रीति नित बढै यथा संध्याकी छाया ॥ ६०॥

मृगमीनसज्जनानां तृणजलसंतोषविहितवृत्तीनाम् ॥
लुब्धकधीवरपिशुना निष्कारणवैरिणो जगति ॥ ६१ ॥

सं० टी०—"लुब्धकादयः प्रयोजनंविना वैरिणो भवन्ति" इति वदति । मृगमीनेति । अ जगति संसारे लुब्धको व्याधः "व्याधो मृगवधाजीवो मृगयुर्लुब्धकश्च सः" इत्यमरः । धीवरः कैवर्तः "वर्तें दाशधीवरौ" इत्यमरः । पिशुनो दुर्जनः "पिशुनो दुर्जनः खलः" इत्यमरः ॥ एते निष्कारण कारणं तृणं च जलं च सन्तोषश्च एतैर्विहिता वृत्तिर्जीवनं येषां तेषां मृगमीनसज्जनानां हरिणमत्स्यस वैरिणो भवन्ति । आर्यावृत्तमिदम् ॥ ६१ ॥

भा० टी०-हरिण घास खाकर रहताहै तबभी व्याध उससे वैर करताहै, मछ जलपीकर रहतीहैं तबभी कछुआ उससे बैर रखताहै, और सज्जन सन्तोषकरके जी तौभी दुर्जन उनके शत्रु होजातेहैं, इन तीनोंसे इन तीनोंका वैर इस संसारमें बिनाक रणही होताहै ॥ ६१ ॥

दोहा-मीन बारि मृग तृण सुजन, करि सन्तोषहि जीव ।
लुब्धक धीवर दुष्टजन, बिनकारण दुख कीव ॥ ६१ ॥

इति दुर्जननिन्दाप्रकरणम् ।

## ॥ अथ सुजनप्रशंसा ॥

वाञ्छा सज्जनसङ्गमे परगुणे प्रीतिर्गुरौ नम्रता
विद्यायां व्यसनं स्वयोषिति रतिर्लोकापवादाद्भयम् ॥
भक्तिःशूलिनि शक्तिरात्मदमने संसर्गमुक्तिःखलेष्वेते
येषु वसंन्ति निर्मलगुणास्तेभ्यो नरेभ्यो नमः ॥ ६२ ॥

सं० टी०-नम्रतादिगुणभूषिता नरा नमस्कारार्हा भवन्तीत्याह । वांछेति । सज्जनानां साधूनां संगमें समागमे वांछा इच्छा, परेषां गुणे प्रीतिरभिरुचिः, गुरौ नम्रता, विद्यायां व्यसनमासक्तिः

स्वस्यात्मनो योषिति स्त्रियां रतिः प्रीतिः, लोकापवादात् लोकनिन्दाया भयं, शूलिनि शिवे भक्तिः, आत्मनो मनसो दमने निग्रहे शक्तिः सामर्थ्यम्, खलेषु पिशुनेषु संसर्गः सम्बन्धस्तस्य मुक्तिस्त्यागः यत्ते ये निर्मला निर्दोषा गुणास्ते येषु वसन्ति तेभ्यो नरेभ्यो नमः नमस्कारोऽस्तु । शार्दूलविक्रीडितंवृत्तमिदम् ६२ ॥

भा० टी०—सज्जनोंकी संगतिकी इच्छा, दूसरेके गुणोंसे प्रसन्न होना बडेलोगोंके सामने झुकना, विद्या पढनेमें मन लगाना, अपनी स्त्रीसे प्रीति करना, लोक निन्दासे डरना, ईश्वरमें भक्ति, अपने मनको वशमें रखना, और दुष्टकी संगतिको त्यागना ये सब उत्तमगुण जिसमें विद्यमान् हैं उन महापुरुषोंको नमस्कारहै ॥ ६२ ॥

कुण्डलिया—जानै परके गुण सदा महत्पुरुषको संग । विद्या,अरु निज भारजा तिनमें मनकौ रंग ॥ तिनमें मनकौ रङ्ग भक्ति शिवकी दृढ राखै । गुरुआज्ञामें नम्र रहै खलसंग न भाषै ॥ ब्रह्मज्ञान चितमाँहि दमन इन्द्रिन् सुख मानै । लोकवादकी शंक पुरुष ते नृपसम जानै ॥ ६२ ॥

विपति धैर्यमथाभ्युदये क्षमा ।
सदसि वाक्पटुता युधि विक्रमः ॥
यशसि चाभिरुचिर्व्यसनं श्रुतौ ।
प्रकृतिसिद्धमिदंहि महात्मनाम् ॥ ६३ ॥

सं० टी०—धैर्यादीनि महात्मनां प्रकृतिसिद्धलक्षणानीत्याह । विपदि विपत्तौ धैर्यं धीरता अथाभ्युदये ऐश्वर्ये क्षमा शान्तिः सदसि सभायां वाक्पटुता वाक्पाटवं, युधि संग्रामे विक्रमः पराक्रमः यशसि कीर्त्तावभिरुचिः प्रीतिः, श्रुतौ वेदशास्त्रादिषु व्यसनमासक्तिः । इदं सर्वं हि निश्चयेन महात्मनां प्रकृतिंसिद्धं स्वभावोत्पन्नं । अन्येन शिक्षितं नेतिभावः । द्रुतविलम्बितं वृत्तमिदम् ॥ ६३ ॥

भा० टी०—विपत्तिमें धैर्य रखना, धन होनेपर क्षमा रखना, सभामें बोलनेकी चतुराई, युद्धमें पराक्रम प्रगटकरना, यशमें रुचि और शास्त्रोंमें चित्त लगाना, ये सबबातें महात्माओंमें स्वभावसेही सिद्ध होतीहैं ॥ ६३ ॥

दोहा—विपति धीर सम्पति क्षमा, सभामांहि सुभ वैन ।
युधि विक्रम यशमाहिं रुचि, ते नरवर गुण ऐन ॥ ६३ ॥

प्रदानं प्रच्छन्नं गृहमुपगते सम्भ्रमविधिः प्रियं कृत्वा मौनं सदसि कथनं चाप्युपकृतेः ॥ अनुत्सेको लक्ष्म्यां निरभिभवसाराः परकथाः सतां के नोद्दिष्टं विषममसिधाराव्रतमिदम् ॥ ६४ ॥

सं० टी०—इदानीं सत महत्ववैचित्र्यं वर्णयति । प्रदानमिति । प्रदानं प्रकर्षेण यद्दत्तं तच्छन्नमा दितं. गृहमुपगते प्राप्ते सम्भ्रमविधिरादराविधिः, प्रियं कृत्वा मौनमेकस्य प्रियं कृतं चेन्न वदति । सभायामुपकृतेरेकेनोपकारः कृतस्तस्य कथनं करोति । लक्ष्म्यां सत्यामनुत्सेकोऽगर्वः । परस्य सत्कथा रभिभवसाराः निन्दाराहिताः निरवधि कर्तव्याः । इदं व्रतमसिधारावत्काठिनं सतां केनोपदिष्टं न के अयं सतां स्वाभाविको गुणः । शिखरिणीवृत्तमिदम् ॥ ६४ ॥

भा० टी०—दानको गुप्तरखना,घरपर आएहुए महमानका आदर करना, पा भलाकर चुप रहना, दुसरोंके किएहुए उपकारका सभामें वर्णनकरना, धन पाका मण्ड न करना, और पराई चर्चा निन्दारहित करना, ये तलवारकी धारके समान ठिनव्रतका सज्जनोंकेलिये किसने उपदेश दियाहै. ॥ ६४ ॥

छप्पय—दियौ जनावत नाहिं गये घर कर सतआदर । हितकर धत मौन कहत उपचार वचन वर । काहूको दुख होय कथा वह क भाषत । सदा दानसों प्रीति नीतियुत सम्पति राखत ॥ यह खड्गधार धारकै जे नर साधत मन वचन । तिनकौसुनुहां इह लोकमें पूर यशही रचन ॥ ६४ ॥

करे श्लाघ्यस्त्यागः शिरसि गुरुपादप्रणयिता मुखे
सत्या वाणी विजयिभुजयोर्वीर्यमतुलम् ॥ हृदि-
स्वस्था वृत्तिः श्रुतमधिगतैकव्रतफलं विनाप्यैश्व-
र्येण प्रकृतिमहतां मण्डनमिदम् ॥ ६५ ॥

सं० टी०—दानादिकमेव सज्जनानां भूषणं नान्यदित्याह । कर इति । करे हस्ते त्यागः दानं श्लाघ्यः प्रशंसनीयस्तदेव हस्तभूषणम् । शिरसि मस्तके गुरोः गुरुजनस्य पादयोश्चरणयोः प्रण नम्रता । मुखे सत्या वाणी यथार्थकथनं तदेव मुखभूषणम् । विजयिभुजयोरतुलं निरुपमं वीर्यं पराक्रमः [ विक्रम एव भुजयोर्भूषणं कंकणं न ] हृदि हृदये स्वस्थानिर्मला वृत्तिर्वर्तनम् । निर्मल वृत्तिरेव हृदयस्य षणं नान्यः । अधिगतं प्राप्तं एकं मुख्यं व्रतमीश्वर प्राप्तिसाधनं तदेव तस्य फलं येन तत् श्रुतं ध्ययनम् । इदमैश्वर्येण वैभवेन विनाऽपि प्रकृत्या स्वभावेन ये महान्तस्तेषां मण्डनं भूषणम् । शि वृत्तमिदम् ॥ ६५ ॥

भा० टी०—हाथकी शोभा दानसेहै, शिरकी शोभा बडोंके प्रणाम करनेसे मुखकी शोभा सत्य बोलनेसे है, भुजाओंकी शोभा युद्धमें अतुल विक्रम करनेसे हृदय स्वच्छतासे शोभापाताहै, और कानकी शोभा शास्त्र श्रवण करनेसे है, और सब धनोंसे धन न होनेपरभी सज्जनोंके भूषण हैं ॥ ६५ ॥

छप्पय—करन करत ते दान शीस गुरुचरणन राखत । मुखसों बोल सांच भुजनसों जय अभिलाषत । चितकी निर्मल वृत्ति श्रवणमें क

श्रवणरति । निशदिन परउपकारसहित सुन्दर जिनकी मति । ते विना साजसम्पत तऊ सोहत सकल शिंगारतन । उनकौ जुसंग नित देहु प्रभु तौ यह सुधरै चपल मन ॥ ६५ ॥

सम्पत्सु महतां चित्तं भवत्युत्पलकोमलम् ॥
आपत्सु च महाशैलशिलासंघातकर्कशम् ॥ ६६ ॥

सं० टी०-सम्पत्काले आपत्काले च सतामन्तःकरणस्य या वृत्तिर्भवति तां वदति । महतां साधुजनानां चित्तं मनः सम्पत्सु वैभवे उत्पलं कमलं तद्वत् कोमलं मृदु भवति । किन्तु आपत्सु आपत्तिकाले महांश्चासौ शैलश्च तस्य शिलानां संघातः समूहस्तद्वत् कर्कशं कठोरं भवति । अनुष्टुब् वृत्तमिदम् ॥ ६६ ॥

भा० टी०—सज्जनमनुष्योंका चित्त धन होनेपर कमलसेभी अधिक कोमल होजाताहै, परन्तु आपत्तिमें उनका चित्त पत्थरसेभी कठिन होजाताहै ॥ ६६ ॥

सोरठा—सतपुरुषनकी रीति सम्पत्में कोमलहि मन ।
दुखहूमें यह नीति वज्रसमानहि होत तन ॥ ६६ ॥

संतप्तायसि संस्थितस्य पयसो नामापि न ज्ञायते
मुक्ताकारतया तदेव नलिनीपत्रस्थितं राजते ॥
स्वात्यां सागरशुक्तिमध्यपतितं तन्मौक्तिकं जायते
प्रायेणाधममध्यमोत्तमगुणाः संसर्गतो देहिनाम् ॥ ६७ ॥

सं० टी०--पुरुषस्योत्तममध्यमाधमगुणाः संसर्गात् जायन्तेइति जलदृष्टान्तेनाह । सन्तप्तेति एकमेवजलं तत्संसर्गतोऽनेक गुणं भवति । तद्यथा । सन्तप्तायसि सन्तप्ते लोहे क्षिप्तं चेत्पयसो नामापि न ज्ञायते अभाव एव । तदेव जलं नलिनीपत्रे स्थितं मुक्ताकारतया राजते । तदेव जलं स्वातीमहानक्षत्रे मेघात् सागरे पतितं तदपि शुक्तिकामध्यगतं चेत् मुक्ताफलं जायते । एवं प्रायेण प्रायशः पुरुषस्योत्तममध्यमाधमगुणाः संसर्गतो जायन्ते । तस्मात् मनुष्यदेह धारिभिरुत्तमा संगतिः कार्या न मध्यमाधमे इति भावः । शार्दूलविक्रीडितं वृत्तमिदम् ॥ ६७ ॥

भा० टी०—तप्तलोहेपर पडनेसे पानीकी बूंदका नामभी नहींरहता, परन्तु वही बूँद कमलके पत्तोंपर गिरनेसे मोतीकेसमान दीखता है, और वही बूँद स्वातीनक्षत्रमें समुद्रकी सीपोंमें पडनेसे मोती बनजाताहै, इससे यह जानपडताहै कि मनुष्यके उत्तम, मध्यम, और अधमगुण संसर्गसेही होतेहैं ॥ ६७ ॥

सोरठा—तबै बुन्द ह्वै क्षीण, कमळपत्र जे सरस हैं ।
मुक्ता सीपहि कीन, थान मान अपमान है ॥ ६७ ॥

यःप्रीणयेत्सुचरितैः पितरं स पुत्रो यद्भर्तुरेव हित-
मिच्छति तत्कलत्रम् ॥ तन्मित्रमापदि सुखे च
समक्रियं यदेतत्त्रयं जगति पुण्यकृतो लभन्ते ॥ ६८ ॥

सं० टी०—उत्तमपुत्रकलत्रमित्रान् सुकृतिन एव प्राप्नुवन्तीति द्योतयति । य इति । यः सुच सदाचरणैः पितरं स्वजनकं प्रीणयेत सन्तोषयेत् स एव पुत्रो नान्यः । यद्भर्तुरेव हितं कल्याणमि तदेव कलत्रं भार्या । नान्यं इति शेषः । यदापदि आपत्काले सुखे च ( समाना क्रिया यस्य त समानक्रियं तदेव मित्रं सुहृत् । एतत् त्रयं जगति लोके पुण्यकृतः सुकृतिनो लभन्ते प्राप्नुव वसन्ततिलकावृत्तमिदम् ॥ ६८ ॥

भा० टी०—जो अपने उत्तम चरित्रोंसे पिताको प्रसन्न रखताहै, यथार्थमें पुत्र है, जो अपने पतिका सदैव हित चाहतीहै यथार्थमें वही स्त्री है, और जो और दुःख दोनोंमें समान रहै वही सच्चा मित्र है, ये तीनों इस संसारमें पुण्यवान मिलते हैं ॥ ६८ ॥

दोहा—पुत्रचरित तियहितकरन, सुखदुखमित्रसमान ।
मनरंजन तीनों मिलैं पूरवपुण्यहि जान ॥ ६८ ॥

एको देवः केशवो वा शिवो वा एकं मित्रं भूप-
तिर्वा यतिर्वा ॥ एको वासः पत्तने वा वने वा
एका नारी सुन्दरी वा दरी वा ॥ ६९ ॥

सं० टी०—प्रवृत्तिनिवृत्तिमार्गप्रकारभेदमाह । एक इति । एको मुख्यो देवः ( प्रशस्ताः के यस्य स ) केशवः ' केशाद्वान्यतरस्यमिति व प्रत्ययः ' विष्णुर्वा शिवः शंकरो वा । एकं मुख्यं भूपतिः राजा वा यतिः सन्यासी वा । एको मुख्यो वासो वसतिस्थानं पत्तने नगरे वनेऽरण्ये वा मुख्या नारी भार्या सुन्दरी सुरूपा वा दरी पर्वतगुहा वा । शालिनीवृत्तमिदम् ॥ ६९ ॥

भा० टी०—एक देवकीही सेवा करनी चाहिये केशव हो अथवा शिव, एक मित्र करना उचित है, राजा हो वा तपस्वी, एक स्थानपरही रहना उचित है न हो, अथवा वन, और एकहीसे प्रीति करना उचित है सुन्दरी स्त्री हो अथवा पर्वत गुफा हो ॥ ६९ ॥

कुण्डलिया—सेवहु केशवदेवकों कै शिवकी कर सेव । मित्र एक नृपतिकों कै जोगेश्वर देव ॥ कै जोगेश्वर देव दुहुनमें एक हितू करि ॥ करि नगर निवास किधौं वनवास करहु ढरि । पुत्रवती तियसंग अंग अंग भटे वहु । कर गिरिगुहाप्रसंग प्रीतिसों नितप्रति सेवहु ॥ ६९ ॥

नम्रत्वेनोन्नमन्तः परगुणकथनैः स्वान् गुणान् ख्याप-
यन्तः स्वार्थान् सम्पादयन्तो विततप्रियतरारम्भय-
त्नाःपरार्थे ॥ क्षान्त्यैवाक्षेपरूक्षाक्षरमुखरमुखान् दुर्जे-
नान् दूषयन्तःसन्तःसाश्चर्यचर्या जगति बहुमताः
कस्य नाभ्यर्चनीयाः ॥ ७० ॥

सं० टी०-अस्मिन् संसारे नम्रत्वादिगुणसंयुक्ता बहुमान्याः साधवोऽर्चनीया भवन्तीत्याह । नम्रत्वेनेति । नम्रत्वेनोन्नमन्त उच्चा मान्या भवन्ति । स्वान् स्वकीयान् गुणान् परेषां गुणानां कथनैः सह ख्यापयन्तः कथयन्तः स्वान् गुणान् स्वयं न वदन्ति, परेषां गुणानुवादाः क्रियन्ते तैरेव प्रसंगेन स्वगुणानुवर्णनं क्रियते इति कृत्वा स्वार्थान् सम्पादयन्तः परस्यार्थे वितता विस्तृताः प्रियतराश्चारम्भाः कर्माणि यत्नाश्च येषां ते, आक्षेपाश्च ते रूक्षाक्षराश्च तैर्मुखराणि मुखानि येषां तान् दुर्जनान् क्षान्त्यैव क्षमयैव दूषयन्त आश्चर्येण सहिता साश्चर्या गतिर्येषां तथाभूता जगति बहुमता मान्याः सन्तः कस्य नाभ्यर्चनीयाः पूजनीया न भवन्ति । एवं भूताः सन्तः सर्वेषां पूज्या एवेतिभावः स्रग्धरावृत्तमिदम् ॥ ७० ॥

भा० टी०-जो नम्रतासे ऊंचे होतेहैं, जो औरोंके गुणोंका बखान करनेसे अपने गुणोंको प्रसिद्ध करतेहैं, जो औरोंका उपकार करते हुए अपना कार्यभी साधन करतेहैं, जो क्षमाहीसे दुर्जनोंकी निन्दा और कठोरबचनोंसे पूर्ण मुखको दूषित करतेहैं, ऐसे अद्भुत आचरणवाले सन्तोंको जगत्में कौन पूजनीय नहीं समझताहै ॥ ७० ॥

छप्पय-नीचै व्है कै चलत होत सबसे ऊंचे अति । परगुण कीरति करत आपगुण ढांकत यह मति । आपन अरथ बिचार करत निशिदिन परमारथ । दुष्ट वचन नहि कहत क्षमा कर साधत स्वारथ । नित रहत एकरस सबनसों बचन कोप कर कहत नहिं । ऐसे जु सन्त या जगतमें पूजित सबके स्वतन्त्रहि ॥ ७० ॥

## इति सज्जनप्रशंसा प्रकरणम् ।

---

भवन्ति नम्रास्तरवः फलोद्गमैर्नवाम्बुभिर्भूमि विल-
म्बिनो घनाः ॥ अनुद्धताः सत्पुरुषाः समृद्धिभिः
स्वभाव एवैष परोपकारिणाम् ॥ ७१ ॥

सं० टी०-अधुना वृक्षदृष्टान्तेन परोपकारिणां स्वभावं वर्णयति । भवन्तीति । यथा फलानामुद्गमैः प्रादुर्भावैस्तरवो वृक्षा नम्रा भवन्ति, घना मेघाः नवानि नूतनान्यम्बूनि जलानि तैर्भूमिं विलम्बन्त इति भूमिविलम्बिनो भवन्ति । तथा सत्पुरुषाः सज्जनाः समृद्धिभिरैश्वर्यैरनुद्धता भवन्ति उद्धता न परोपकारिणामेषः स्वभावोऽस्ति । वंशस्थं वृत्तमिदम् ॥ ७१ ॥

भा० टी०-जैसे फल आनेपर वृक्ष नमजातेहैं, जैसे नवीनजलसे पूर्ण होने मेघ पृथ्वीपर झुकजातेहैं, वैसेही सज्जनमनुष्यंभी धन पाकर नम्र हो जातेहैं, अभि नहीं करते कारण यहहै कि परोपकारी मनुष्योंका स्वभावही ऐसा होताहै ॥ ७१ ॥

दोहा-नम्र होत फलभार तरु, जलभर नम्र घटासु ।
त्यौं सम्पत् लहि सत्पुरुष, नवें सुभावछटासु ॥ ७१ ॥

श्रोत्रं श्रुतेनैव न कुण्डलेन दानेन पाणिर्न तु कङ्कणेन ॥
विभाति कायः करुणापराणां परोपकारै र्नतु चंदनेन ॥७२॥

सं० टी० श्रोत्रमिति । श्रोत्रं कर्णःश्रुतेन शास्त्रश्रवणेनैव विभाति शोभते नतु कुण्डलेन भूषणेन, तथा पाणिर्हस्तो दानेन विभाति कङ्कणेन नं, अपरं च करुणापराणां दयार्द्रीणां कायो देहः परोप कारैर्विभाति चन्दनादिना न विभाति । तस्मात् पुरुषैः शास्त्रश्रवणं दानादि कंचावश्यमेव मितिभावः । उपजातिवृत्तमिदम् ॥ ७२ ॥

भा० टी-कानकी शोभा शास्त्र श्रवणकरनेसे है, कुंडल पहिरनेसे नहीं, हाथ शोभा दान करनेसे हैं, कङ्कण पहिरनेसे नहीं, दयालुपुरुषोंके देह की शोभा परोप रसे हैं कुछ चन्दन लगानेसे नहींहै ॥ ७२ ॥

कुण्डलिया-कंकन ते सोहत न कर कुण्डलते नहिं कान । चन्द सोहत न तन जान लेहु यह जान ॥ जान लेहु यह जान दानते पा लसत है । कथाश्रवणतें कान परम शोभा सरसत है । परमारथसों दिपत चन्दन सों टंकन । येशुभ सुकृतहि राख पहरिये कुण्डल कंकन ७

पापान्निवारयति योजयते हिताय गुह्यं च गूहति
गुणान् प्रकटीकरोति । आपद्गतं च न जहाति
ददाति काले सन्मित्रलक्षणमिदं प्रवदन्ति सन्तः ॥ ७३ ॥

सं० टी०—अधुना सन्मित्रलक्षणं वर्णयति । पापादिति । पापात् पापकर्मात् निवारयति करोति अर्थात् संरक्षति । हिताय कल्याणाय योजयते, गुह्यं गोप्यं च गूहति गोपयाति, गुण प्रकटीकरोति, आपद्गतं विपद्गतं न जहाति न त्यजाति, किन्तु काले समये प्राप्ते सति ददाति द्रव्यादिकं शेषः । इदं सन्मित्रलक्षणमिति सन्तः प्रवदन्ति कथयन्ति । वसन्ततिलकावृत्तमिदम् ॥ ७३ ॥

भा० टी०-अपने मित्रको पापसे बचाना, हितकर्ममें लगाना, उसकी गुप्तबातें गुप्त रखना, मित्रके गुणोंको प्रगटकरना, दुःखमें मित्रका संग न छोडना, और समय सहायता करना, ये उत्तममित्रोंके लक्षण सन्तोंने कहेहैं ॥ ७३ ॥

दोहा-पाप निवारत हित करत, गुन गनि औगुन ढांकि ।
दुखमें राखत देत कछु, सन्मित्रन ये आंकि ॥ ७३ ॥

पद्माकरं दिनकरो विकचीकरोति चन्द्रो विकासयति कैरवचक्रवालम् ॥ नाभ्यर्थितो जलधरोऽपि जलं ददाति सन्तः स्वयं परहिते सुकृताभियोगाः ॥ ७४ ॥

सं० टी०—" सन्तः स्वयमेव परहितं कुर्वन्ति " इति दिनकरादिदृष्टान्तेन द्योतयति । पद्माकरमिति पद्माकरं सूर्यविकासिकमलानामाकरं समुदायं दिनकरः सूर्यः विकचीकरोति । प्रफुल्लं करोति । ' प्रफुल्लोत्फुल्लसंफुल्लव्याकोशविकचस्फुटाः ' इत्यमरः । तथैव चन्द्रो रात्रिविकासिकैरवानां कुमुदानां चक्रवालं समुदायं विकासयति विकसितं करोति । एवं जलधारो मेघोऽपि नाभ्यर्थितः सन् जलं ददाति । यतः सन्तः स्वयं परहिते सुकृताभियोगा अप्रार्थिताः सन्तः स्वयं परहितं कुर्वन्ति । तेषां स्वभाव एवायम् । वसन्ततिलकावृत्तमिदम् ॥ ७४ ॥

भा० टी०—सूर्य स्वयंही कमलोंको विकसितकरताहै, चन्द्रमा स्वयंही कुमुदिनीको प्रफुल्लितकरताहै, और मेघ बिनामांगेही जल बर्षाताहै, इसका यह कारण है कि सज्जनमनुष्य आपही बिनाकहे औरोंके भला करनेमें तत्पर रहतेहैं ॥ ७४ ॥

दोहा--कुमुदिनि प्रफुलित करत शशि, कमल विकासत भानु ।
बिन मांगे घन देत जल, त्योंही सन्त सुजानु ॥ ७४ ॥

एके सत्पुरुषाः परार्थघटकाः स्वार्थं परित्यज्य ये ॥
सामान्यास्तु परार्थमुद्यमभृतः स्वार्थाविरोधेन ये ॥
तेऽमी मानुषराक्षसाः परहितं स्वार्थाय निघ्नन्ति ये ॥
ये निघ्नन्ति निरर्थकं परहितं ते के न जानीमहे ॥७५॥

सं० टी०—एक इति । स्वार्थं परित्यज्य त्यक्त्वा ये परार्थघटकाः परकार्यं कुर्वन्ति ते सत्पुरुषाः स्वार्थस्याविरोधेनादौ स्वकार्यं कृत्वा पश्चात् परकार्यं ये कुर्वन्ति ते सामान्या मध्यमाः । ये स्वार्थाय परहितं निघ्नन्ति ते अमी मानुषेषु राक्षसाः कनिष्ठाः । तु पुनरिति निश्चयेन ये निरर्थकं परहितं निघ्नन्ति ते के न जानीमहे । तेषां लक्षणं न ज्ञायते । शार्दूलविक्रीडितं वृत्तमिदम् ॥ ७५ ॥

भाषा टीका—सत्पुरुष वे हैं जो अपना कार्य छोडकर दूसरेके कार्य करनेको उद्यत होजातेहैं, सामान्यमनुष्य वे हैं जो अपना कार्यभी करतेहैं और औरोंकाभी करतेहैं, किंतु जो अपने हितके लिये दूसरोंका कार्य बिगाड देते हैं वे मनुष्योंमें राक्षस हैं, और जो व्यर्थ पराये कार्यको बिगाड देते हैं उनको हम नहीं जानते हैं कि क्या कहना चाहिये ॥ ७५ ॥

छप्पय—उत्तम नर पर अरथ करत स्वारथको त्यागत । मध्यम परके अर्थ करत स्वारथ अनुरागत । दुष्ट जीव निजकाज करत परकाज बिगारत । वे नहि जाने जात रूपचौथो जे धारत । जिनको न होत

निजकाज कछु औरनके स्वारथ हरत। तिनको न दरश क्षण है
प्रभु बात सुनतही चित डरत ॥ ७५ ॥

क्षीरेणात्मगतोदकाय हि गुणा दत्ताः पुरा तेऽखिला ॥
क्षीरे तापमवेक्ष्य तेन पयसा ह्यात्मा कृशानौ हुतः ॥
गन्तुं पावकमुन्मनस्तदभवद्दृष्ट्वा तु मित्रापदं ॥ युक्तं
तेन जलेन शाम्यति सतां मैत्री पुनस्त्वीदृशी ॥ ७६ ॥

सं० टी०-सज्जनानां मैत्री आपत्कालेऽपि न नश्यतीति जलपयोदृष्टान्तेन वर्णयति। क्षीरेणेति
पुरा पूर्वं क्षीरेण दुग्धेनात्मगतायोदकाय जलायाखिलाः सर्वे गुणा हि निश्चयेन दत्ताः । अत उभ
मैत्री जाता। तदनन्तरं तेन पयसोदकेन क्षीरे दुग्धे तापमवेक्ष्य दृष्ट्वा आत्मा स्वदेहः कृशानावग्नौ हु
दुग्धे तत्तेऽन्तर्गतं जलं ज्वलाति । तदनन्तरं स्वमित्रेण जलेन मदर्थमात्मा कृशानौ हुतः। तर्ह्यहमपि प
ष्यामीति बुद्धया मित्रापदं दृष्ट्वा तत्क्षीरं पावकं गन्तुमुन्मनः उत्कंठितमभवत् । पुनरपि तत् क्षीरं ज
प्रोक्षितं सच्छाम्यति "उत्सिक्तं क्षीरं जलेन शाम्यति इतिलोके प्रसिद्धमेवेति भावः। "
युक्तमुचितम्। यतः सतां मैत्रीगुणास्तादृशा एव भवन्ति। शार्दूलविक्रीडितं वृत्तमिदम् ॥ ७६ ॥

भा० टी०-पहिले पानी जब दूधमें मिला तौ दूधने उसको अपने सब गुण
कर मित्र बनालिया, पानीने अपने मित्र दूधको जलते देख अपने आपकोहीं अग्नि
होमदिया, दूधभी अपने मित्र पानीके इस दुःखको न देखसका और आपभी अग्नि
कूदनाही चाहताथा कि पुनः शीतल जलके छींटे पाकर अपने मित्रको लौट आ
जान शान्त होगया, सचहै सज्जनोंकी मित्रता ऐसीहीं होतीहै ॥ ७६ ॥

कुण्डलिया-पानी पयसों मिलतही जान्यौ अपनौ मित्त। आप भ
फीकौ वहै जलकों कियौ सुचित्त। जलकों कियौ सुचित्त तप्तपयकों ज
जानी। तब अपनौ तन वारि वारि मन प्रीतहि आनी। उफन चल्यौ
पय तबै शान्ति जल छिरकत ठानी। सत्पुरुषोंकी प्रीति रीति ज्यों प
अरु पानी ॥ ७६ ॥

इत स्वपिति केशवः कुलमितस्तदीयद्विषामितश्च
शरणार्थिनः शिखरिणां गणाः शेरते ॥ इतोऽति
वड़वानलः सह समस्तसांवर्तकैरहो विततमूर्जितं
भरसहं च सिन्धोर्वपुः ॥ ७७ ॥

सं० टी०-सतां सहनशीलतां समुद्रदृष्टान्तेन दर्शयति। इत इति । अहो इत्याश्चर्ये । सिन्धो
समुद्रस्य वपुर्विततं विस्तृतमूर्जितमतिवलिष्ठं भरं भारं सहत इति भरसहमस्ति । तत् कथम्। इ

एकतो देशे केशवो विष्णुः स्वपिति निद्रां करोति । इतस्तदीयाद्विषां तद्वैरिणां कुलं समूहः शेते । इतश्च शरणार्थिनां शरणागतानां शिखरिणां पर्वतानां गणाः समूहाः शेरते । इतोऽपि वडवानलः समस्ता सांवर्तकः प्रलयकारिणोऽग्नयस्तैः सह शेते । एवं विलक्षणरूपं परस्य भरसहं वपुरित्याश्चर्यम् । सज्जनां समुद्रवदुपकारिणः सर्वाधाराश्रयभूताश्च भवन्ति । पृथ्वीवृत्तमिदम् ॥ ७७ ॥

भा० टी०–समुद्रमें एक ओर श्रीविष्णुभगवान् यशन करतेहैं, दूसरी ओर उनके शत्रु असुर पडेहैं, एक ओर शरणागत पर्वतोंके समूह पडेहैं, एक ओर बडवानल प्रलयके घोर अग्निसहित जलको औटारहाहै, देखो समुद्र विशाल बलवान् और सहनशील है जो कि इन सबसे बिलकुल नहीं घबडाता । सज्जन जनभी समुद्रके समान अत्यन्त सहनशील होते हैं ॥ ७७ ॥

छप्पय–इत सोवत श्रीकृष्ण इतें वैरी दानव गन । इतकों गिरवर वृन्द शरण सोवत निर्भयमन । इतकों वाडव अग्नि रहित जलमांहि निरन्तर । मच्छ कच्छ इत्यादि रहत सुखसों सब जलचर ॥ अतिही अगाध ऊचों अधिक सहनशीलताकी अवधि । विस्तार अमित कहिये कहा अद्भुत गति राखत उदधि ॥ ७७ ॥

तृष्णां छिन्धि भज क्षमां जहि मदं पापे रतिं मा
कृथाः सत्यं ब्रूह्यनुयाहि साधुपदवीं सेवस्व विद्वज्ज-
नम् ॥ मान्यान्मानय विद्विषोऽप्यनुनय प्रख्यापय
स्वान्गुणान्कीर्तिं पालय दुःखिते कुरु दयामेतत्सतां
लक्षणम् ॥ ७८ ॥

सं० टी०—अधुना सतां लक्षणं वर्णयति । तृष्णामिति । तृष्णां स्पृहां छिन्धि । क्षमां क्षान्ति भज सेवस्व । मदं दर्पं जहि त्यज । पापे पापकर्मणि रतिं प्रीतिं मा कृथाः मा कुरु । सत्यंब्रूहि यथार्थं भाषणं कुरु । साधूनां सज्जनानां पदवीं मार्गमनुयाहि अनुगच्छ । विद्वज्जनान् पण्डितजनान् सेवस्व । मान्यान् मानय । विद्विषोऽप्यनुनय सान्त्वय । स्वान् स्वकीयान् गुणान् प्रख्यापय । कीर्तिं यश पालय । दुःखिते दयां कुरु । एतत् सतां सज्जनानां लक्षणम् । शार्दूलविक्रीडितंवृत्तमिदं ॥ ७८ ॥

भा० टी०–तृष्णाका छेदनकरो, क्षमा धारण करो, अभिमानका परित्याग करो पापमें मन मत लगाओ, सत्य बोलो, साधुजनोंकी पदवीको प्राप्तकरो, विद्वानोंकी सेवाकरो, मान्यपुरुषोंका आदरकरो, शत्रुकोभी प्रसन्न रक्खो, अपने गुणोंको प्रसिद्ध करो, यशका पालन करो, और दुःखियोपर दया करो, यह सब सत्पुरुषोंके लक्षण हैं ॥ ७८ ॥

छप्पय–तृष्णाकों तजि देहु क्षमाकौ भजन करहु नित । दया हियेमें राखि पापसों दूर राखि चित । सत्य बचन मुख बोल धर्मपदवी जिय

धारहु । सत्पुरुषनकी सेव नम्रता अति विस्तारहु । सब गुणसु आ
गुप्त रखि कीरति पर पालन करहु । करि दया दुखित नर दे
सन्त रीति यह अनुसरहु ॥ ७८ ॥

मनसि वचसि काये पुण्यपीयूषपूर्णास्त्रिभुवनमुपका-
रश्रेणिभिः प्रीणयन्तः ॥ परगुणपरमाणून्पर्वतीकृत्य
नित्यं निजहृदि विकसंतः सन्ति सन्तः कियन्तः ॥७९॥

सं० टी०–अस्मिन् जगति स्वप्रकाशमानानां साधूनां दर्शनमतीव दुस्तरमित्याह । मनसी
मनसि हृदये बचसि, वाण्यां काये देहे पुण्यं सुकृतमेव पीयूषामृतं तेनपूर्णाः । उपकारश्रेणीभिरु
पंक्तिभिस्त्रिभुवनं प्रीणयन्तस्तर्पयन्तः । परेषां गुणास्तेषां परमाणून् पर्वती कृत्य पर्वतप्रमाणान्
नित्यं निजहृदि स्वान्तः करणे विकसन्तः प्रकाशमानाः सन्तः सज्जनानां कियन्तः विरलाः स
परोपकारिणः सन्तो दुर्लभः इति भावः ॥ ७९ ॥

भा० टी०–जिनके तन, मन, और बाणीमें पुण्यरूपी अमृत भराहुआहै,
नने अपने उपकारोंसे तीनों लोकोंको प्रसन्न कियाहै, और जो दूसरेके परमाणु बरा
गुणोंको पर्वतके समान बढाकर अपने हृदयमें सदा प्रसन्न रहतेहैं ऐसे सज्जन म
इस संसारमें बिरलेहीहैं ॥ ७९ ॥

दोहा–अमृत भरे तन मन वचन, निशिदिन जग उपकार ।
परगुण मानत मेरुसम, विरले जन संसार ॥ ७९ ॥

किं तेन हेमगिरिणा रजताद्रिणा वा यत्राश्रिताश्च
तरवस्तरवस्त एव ॥ मन्यामहे मलयमेव यदाश्र-
येण कङ्कोलनिंबकुटजा अपि चन्दनाःस्युः ॥ ८० ॥

सं० टी०–परोपकारिणः सज्जनाः स्वकीयोत्तमगुणानन्यष्वपि स्थापयन्तीति मलयान्योक्त्या
व्यनक्ति । किमिति । किं तेन हेमगिरिणा मेरुणा रजताद्रिणा कैलासेन वायतोऽस्याश्रितास्तरवस्त
एव नत्वात्मसदृशाः सुवर्णरूप्यरूपाः कृताः । अतस्ताभ्यां किं प्रयोजनम् । तस्मात् मलयाद्रिं
मन्यामहे यतोऽस्याश्रिताः कङ्कोलनिम्बकुटजा वृक्षाः अपि चन्दनाःस्युश्चन्दना एव भवन्ति चन्द
नद्रासन्त इति चन्दनवृक्षाणां परोपकारः । वसन्ततिलका वृत्तमिदम् ॥ ८० ॥

भा० टी०–वह सोनेका सुमेरुपर्वत, और चाँदीका कैलाशपर्वत किस कामका
जिसके आश्रित वृक्ष सदा वृक्षही बनेरहे ( सोने चाँदीके न हुए ) हम तौ मलयाच
पर्वतकीही बडाई करेंगे कि जहां कङ्कोल, नीम और कुटजके वृक्षभी चन्दनके सम
होजातेहैं ॥ ८० ॥

सोरठा–ऐ रे निलज सुमेर, तो साथी पाथर रहे ।
मलयागिरि कहँ हेर, कुटज नीम चन्दन किये ॥ ८० ॥

## ॥ अथ धैर्यप्रशंसा ॥

रत्नैर्महार्हैस्तुतुषुर्न देवा न भेजिरे भीमविषेण भी-
तिम् ॥ सुधां विना न प्रययुर्विरामं न निश्चिता-
र्थाद्विरमन्ति धीराः ॥ ८१ ॥

सं० टी०-"धीरपुरुषा निश्चितार्थप्राप्तिंविना उद्योगं न त्यजन्ति" इति समुद्र मथनोद्योग प्रवृत्तदेवदृष्टान्तेन दर्शयति । रत्नैरिति । धीरा निश्चितार्थात् न विरमन्ति न विश्रमन्ति किन्तु तस्य प्राप्तिपर्यन्तमुद्योगं कुर्वन्ति । अत्रदृष्टान्तः । देवाः महामूल्यै रत्नै र्न तुतुषुः सन्तोषं न प्रापुः । तथाच भीमेन भयंकरेण विषेण भीतिं भयं न भेजिरे न सिषेविरे, भयंकर विषेणापि भयं न प्रापुरित्यर्थः । तु सुधाममृतंविना विरामं विश्रामं न प्रययुः न प्रापुः । निश्चितार्थरूपसुधांविना देवा विरामं न प्राप्ता इति भावः । इन्द्रवज्रावृत्तमिदम् ॥ ८१ ॥

भा० टी०-अनमोल रत्न पाकर देवता सन्तुष्ट न हुए, भयंकर विषसे भी भयभीत होकर उनने समुद्रका मथना न छोडा, और अमृतको निकाले बिना विश्राम न किया, इससे यह सिद्ध हुआ कि धीर मनुष्य प्रारम्भकिएहुए कार्यको विना पूरा किये नहीं छोडते ॥ ८१ ॥

छप्पय-महा अमोलक रत्न नाहिं रीझे सुर तिनसों । महा हलाहल जान प्राण डरपत नहिं जिनसों ॥ रहत चित्तकी वृत्ति एक अमृतसों अ तिही । तैसेहीं नरधीर काज निश्चै कर मतिही ॥ सब दोषरहित अरु गुण सहित ऐसे कारन मन धरत । तिहिको सुअर्थ अमृत लहत कोऊ दुखको नहिं करत ॥ ८१ ॥

क्वचिद्भूमौ शय्या क्वचिदपि च पर्यङ्कशयनं क्वचि-
च्छाकाहारी क्वचिदपि च शाल्योदनरुचिः ॥ क्वचि
त्कन्थाधारी क्वचिदपि च दिव्याम्बरधरो मनस्वी
कार्यार्थी न गणयति दुःखं न च सुखम् ॥ ८२ ॥

सं० टी०-मनस्वी कार्यार्थी पुरुषः सुखं दुःखं च न गणयतीत्याह-क्वचिदिति । क्वचित् कदाचित् भूमौ शय्या शयनं । क्वचिदपिच पर्यंके शयनं करोति, कंचिच्छकाहारी शाकभोजी क्वचिदपिच शाल्योदने रुचिर्यस्य स शाल्योदनभोजी । क्वचिद् कंथां धारयतीति कन्थाधारी । क्वचिदपिच दिव्यं सुन्दरमम्बरं वस्त्रं धरतीति दिव्याम्बरधरः । स कार्यार्थी कार्येच्छुः मनस्वी विवेकी पुरुषो दुःखं सुखं च न गणयति । शिखरिणीवृत्तमिदम् ॥ ८२ ॥

भा० टी०-कभी पृथ्वीपर सोरहतेहैं, कभी उत्तम पलँगपर शयनकरतेहैं. कभी साग पात खाकर रहजातेहैं, और कभी चाँवलादिका उत्तम भोजन करतेहैं, कभी गूदडी

छोंडकर दिन बितातेहैं, और कभी दिव्यवस्त्र धारण करतेहैं धैर्यवान् पुरुषको जब
साधन करना होताहै तो सुख और दुःखको समानहीं गिनताहै ॥ ८२ ॥

दोहा–भूमिशयन कहुं पलँगपै, शाकहार कहुं मिष्ट ॥
कहुं कन्था सिरपाँव कहुं, अर्थी सुख दुख इष्ट ॥ ८२ ॥

ऐश्वर्यस्य विभूषणं सुजनता शौर्यस्य वाक्संयमो
ज्ञानस्योपशमः श्रुतस्य विनयो वित्तस्य पात्रे
व्ययः॥अक्रोधस्तपसःक्षमा प्रभवितुर्धर्मस्य निर्व्या-
जता सर्वेषामपि सर्वकारणमिदंशीलं परं भूषणम् ॥ ८३ ॥

सं० टी०—शीलमेव परमोत्तमभूषणमित्याह । ऐश्वर्येति । सुजनता सौजन्यमैश्वर्यस्य वै
विभूषणमलंकारो भवति । ऐश्वर्ये प्राप्ते सति सुजनतैव सम्पादनीयेति भावः । शौर्यस्य वीर्यस्य
संयमः वाङ्नियमः । शौर्ये सति वाण्या तस्यानुद्धाटनं कर्तव्यमितिभावः । ज्ञानस्य विभूषणमुपशम-
न्तिरस्ति । श्रुतस्य शास्त्रश्रवणस्य विनयो नम्रता विभूषणमस्ति । वित्तस्य धनस्य पात्रे सत्पात्रे
दानं धनवति सति दानमवश्यं करणीयम् । तपसोऽक्रोधः । प्रभवितुः । समर्थस्य क्षमा
समर्थेन क्षमाऽवश्यमेव कार्या । धर्मस्य विभूषणं निर्व्याजता कपटराहित्यम् । सर्वेषामपि
सर्वगुणकारणमिदं शीलं परमं श्रेष्ठं भूषणमस्ति । " सर्वे गुणः स्वभावतः सिद्धा भवन्ति " इति
शार्दूल विक्रीडितं वृत्तमिदम् ॥ ८३ ॥

भा० टी०–ऐश्वर्यका भूषण सज्जनताहै, अपनी बाणी को वशमें रखना
शूरताकी शोभाहै,ज्ञानकी शोभा शान्तिहै,शास्त्रका भूषण बिनयहै,धनकी शोभा स
त्रको दान करना है, तपकी शोभा क्रोध न करना है, प्रभुत्वकी शोभा क्षमा है, ध
भूषण निष्कपटताहै, और अन्य सबगुणोंका श्रेष्ठ भूषण और कारण शीलहै ॥ ८

कुण्डलिया–मण्डन है ऐश्वर्यको सज्जनता सनमान । वाणी स
शूरतामण्डन धनको दान । मण्डन धनको दान ज्ञानमण्डन इन्द्री
तपमण्डन अक्रोध विनयमण्डन सोहत सम । प्रभुतामंडन क्षमा धर्म
छलखंडन । सबहिनमें सदा शीलता सबको मण्डन ॥ ८३ ॥

निन्दन्तु नीतिनिपुणा यदिवा स्तुवन्तु लक्ष्मीः समाविशतु
गच्छतु वा यथेष्टम् ॥ अद्यैव वा मरणमस्तु युगान्तरे
वा न्याय्यात्पथः प्रविचलन्ति पदं न धीराः ॥ ८४ ॥

सं० टी०—धीरपुरुषा न्यायपथात् कदाचिदपि न प्रविचलन्तीति वर्णयति । निन्दन्तु
नीत्यं नये निपुणा विशारदाः कुशलाः पुरुषा निन्दन्तु निन्दां कुर्वन्तु, यदि वा स्तुवन्तु स्तुतिं कु
लक्ष्मीः सम्पत् यथेष्टं यथेच्छं समाविशत्वागच्छतु वा गच्छतु । अद्यैव मरणं मृत्युरस्तु वा युगे
ऽन्यस्मिन् युगेऽस्तु । परन्तु धीराः पुरुषा न्याय्यात् कदापि न प्रविचलन्ति । वसन्ततिलक वृत्तमिदम् ।

भा० टी०—नीतिविशारद मनुष्य चाहे निन्दा करें चाहे प्रशंसा करें, लक्ष्मी चाहे आवे चाहे चली जाय, मृत्यु अभी आजाय और चाहे युगके अन्तमें हो परन्तु धैर्यवान् पुरुष न्यायके मार्गसे एक पगभी नहीं हटते ॥ ८४ ॥

छप्पय—नीतिनिपुण नर धीर बीर कछु सुयश करौ किन । अथवा निंदा कोटि कहौ दुर्वचन छिनहिं छिन ॥ सम्पतहू चलि जाउ रहौ अथवा अगणित धन । अबहि मृतक किन होहु होउ अथवा निश्चल तन ॥ पर न्यायपंथको तजत नहिं बुधि विवेक गुण ज्ञान निधि । वै संग सहायक रहत नित देत लोक परलोक सिधि ॥ ८४ ॥

भग्नाशस्य करण्डपीडिततनोर्म्लानेन्द्रियस्य क्षुधा
कृत्वाखुर्विवरं स्वयं निपतितो नक्तं मुखे भोगिनः ॥
तृप्तस्तत्पिशितेन सत्वरमसौ तेनैव यातः पथा
लोकाः पश्यत दैवमेव हि नृणां वृद्धौ क्षये कारणम् ॥८५॥

सं० टी०-दैवमेव हि नृणां वृद्धिक्षययोः कारणमिति सर्पदृष्टान्तेन वर्णयति । भग्नाशस्येति । कश्चित् सर्पो व्यालग्राहिणा धृत्वा करण्डमध्ये निक्षिप्तस्तस्य स्थितिं वदति । कथंभूतस्य सर्पस्य भग्नाशस्य "अहमस्मान्नमुक्तः स्यामिति " भग्ना आशा यस्य । पुनः करण्डपीडिततनोः करण्डेन पीडिता तनुर्यस्य । पुनः क्षुधया म्लानेन्द्रियस्य । एवं जाते सति दैववशात् कश्चिदाखुर्मूषकस्तत्रागत्य तत्करण्डस्य विवरं छिद्रं कृत्वा नक्तं रात्रावन्तः प्रविष्टः सन् भोगिनो मुखे पतितः पश्चात्तस्याखोः पिशितेन स सर्पस्तृप्तस्तेनैव छिद्रमार्गेण बहिर्यातः । अतो भो जना यूयं स्वस्थास्तिष्ठत दैवमदृष्टमेव नृणां वृद्धौ क्षये च कारणमस्ति । सदृष्टवशात् यद्भविष्यति तद्भविष्यति । शार्दूलविक्रीडितवृत्तमिदम् ॥ ८५ ॥

भा० टी०—एक सर्प पिटारेमें बन्द होनेसे पीडित जीवनकी आशा छोडकर पड़ाहुआ भूखसे उसकी इन्द्रियां शिथिल होगईथी । इतनेहीमें रात्रिके समय एक मूषक पिटारेमें छेदकर भीतर घुसा और सर्पके मुखमें स्वयं गिरपड़ा । सर्पभी उसको खाकर सन्तुष्ट होके उसी छेदकी राहसे बाहर निकलगया, इसलिये हे लोगो ! देखो मनुष्यकी बढ़ती और घटतीका केवल दैवही मुख्य कारण है ॥ ८५ ॥

कुण्डलिया—जैसे काहू सरपको छबरैपकर धस्योसु । सबकी आसा छोड देसिर फूद पस्योसु । दै शिर कूद पस्योसु भयो पीडित अति कैदी । इंद्री विकल भूख पिटारी मूसें छेदी । वाहीकौ भखि मांस छेद ह्वै निकस्यौ कैसे, त्युंसे क्षय अरु वृद्धि दैवबस ऐसै जैसे ॥ ८५ ॥

पातितोऽपि कराघातैरुत्पतत्येव कन्दुकः ॥
प्रायेण साधुवृत्तानामस्थायिन्यो विपत्तयः ॥ ८६ ॥

सं० टी०—साधुवृत्तीनां विपत्तयःअस्थायिन्यो भवन्तीति कन्दुकदृष्टान्तेन दर्शयति । पातित । यथा करस्य हस्तस्याघातस्ताडनैः कन्दुकः पातितोऽपि पुनरूर्ध्वमुत्पतत्येव । तथा प्रायो बाहुल्येन साधु सज्जनानां विपत्तयः अस्थायिन्यो भवन्ति । अनुष्टुब्वृत्तमिदम् ॥ ८६ ॥

भा० टी०—जैसे गेंद हाथसे फेंकनेपरभी ऊपरहीको उठतीहै, इसीप्रकार साधुजनोंका दुःख थोडेही दिनोंका होताहै ॥ ८६ ॥

दोहा—करकौ मार्यो गेंद ज्यौं, लागि भूमि उठि जात ॥
साधुजननकी त्यों बिपति, छिनही माहिं नशात ॥ ८६ ॥

आलस्यं हि मनुष्याणां शरीरस्थो महान् रिपुः ॥
नास्त्युद्यमसमो बन्धुर्यं कृत्वा नावसीदति ॥ ८७ ॥

सं० टी०—इदानीमुद्यमप्राधान्यं वर्णयति । आलस्यमिति । आलस्यमुद्योगराहित्यम् । म शरीरे तिष्ठतीति शरीरस्थो महान् रिपुः शत्रुः हि इति निश्चयेनास्ति । उद्यमनोद्योगेन बन्धुर्न । यमुद्यमं कृत्वा मनुष्या नाऽवसीदति दारिद्र्यादिदुःखं न प्राप्नोति । उद्यमोऽवश्यं कर्तव्य इति अनुष्टुब्वृत्तमिदम् ॥ ८७ ॥

भा० टी०—आलस्य मनुष्योंके शरीरमे महाशत्रुहै, उद्योगके समान मनु दूसरा कोई बन्धु नहीं कि जिसके करनेसे मनुष्य कभी दुःखको नहीं पाता ॥८७

दोहा—आलस तनमे रिपु बडो, सब सुखको हरलेत ।
त्यौंही उद्यम बन्धुसम, किये सकल सुख देत ॥ ८७ ॥

छिन्नोऽपि रोहति तरुःक्षिणोप्युपचीयते पुनश्चन्द्रः ॥
इति विमृशंतः सन्तः संतप्यन्ते न विप्लुता लोके ॥ ८८ ॥

सं० टी०—"दुःखप्राप्तावपि सन्तो न सन्तप्यन्ते" इत्याह । छिन्न इति । तरुर्वृक्ष निष्कृतोऽपि पुनः रोहति । तथा क्षीणोऽपि कलाक्षीणो पि चन्द्रः पुनरुपचीयते वृद्धिं प्राप्नोति विमृशन्तो विचारयन्तः सन्तो विलुप्ता आपदा न सन्तप्यन्ते दुःखिनो न भवन्ति । आर्यावृत्तमिदम् ॥

भा० टी०—कलमकिया हुआ वृक्ष बढकर फिर फैलजाताहै चन्द्रमा घटक बढजाताहै, यह विचार कर सज्जन दुःख पानेपरभी सन्ताप नहीं करते ॥ ८८ ॥

दोहा—छीन पत्र पल्लवित तरु, छीन चन्द्र बढवार ।
यह लखि सज्जन दुःखहू पाय न लहहिं विकार ॥ ८८ ॥

इति धैर्यप्रशंसा ।

## ॥ अथ दैवप्रशंसा ॥

नेता यस्य बृहस्पतिः प्रहरणं वज्रं सुराः सैनिकाः
स्वर्गो दुर्गमनुग्रहः किल हरेरैरावतो वारणः । इत्यै
श्वर्यबलान्वितोऽपि बलभिद्भग्नः परैः संगरे तद्व्यक्तं
वरमेव दैवशरणं धिग्धिग्वृथा पौरुषम् ॥ ८९ ॥

सं० टी०—दैवे प्रतिकूले सर्वे यत्ना विफला भवन्तीति इन्द्रदृष्टान्तेन दर्शयति । नेतेति । यस्य न्द्रस्य बृहस्पतिर्नेता नायकोस्ति । वज्रं कुलिशं प्रहरणमायुधम् । सुरा देवाः सैनिकाः दुःखेन गम्यते तद्दुर्गं र्गः । हरेरनुग्रहः कृपा किलेति प्रसिद्धम् । वारणः गजः ऐरावतः । इत्यनेन प्रकारेणैश्वर्यं बलं च भ्यामन्वितो युक्तोऽपीन्द्रः बलिभिः परैः शत्रुभिः संगरे संग्रामे भग्नः पराजितः । तत्तस्मात् दैवशरणमेव मिति व्यक्तं स्पष्टम् । दैवहीनं पौरुषं वृथा धिग्धिगिति । दैवसहायतांविना पौरुषं निष्फलमितिभावः । र्दूलविक्रीडितं वृत्तमिदम् ॥ ८९ ॥

भा० टी०—बृहस्पति समान जिसके मंत्री हैं, वज्र जिसका अस्त्र है, देवतागण सकी सेना है, स्वर्ग जिसका गढहै, और ऐरावत जिसके चढनेका हाथी है, ऐसा ऐ- र्यबल सम्पन्न इन्द्र शत्रुओंसे संग्राममें हारताही रहा, इस लिये दैवही शरणके ग्यहै, और वृथा पुरुषार्थको धिक्कार है ॥ ८९ ॥

छप्पय—सुरगुरु सेनाधीश सुरनकी सेना जाके । शस्त्र हाथ लिये ज्र स्वर्ग सौ दृढगढ ताके ॥ ऐरावत असवार प्रभूकी परम अनुग्रह । सी सम्पति सौंज सहित सोहत बासव यह ॥ सो युद्ध मांहि दानवन लहत पराजय खोय पति । शोभा समाज सबही वृथा सबसों अ- त दैवगति ॥ ८९ ॥

कर्मायत्तं फलं पुंसां बुद्धिः कर्मानुसारिणी ॥
तथापि सुधिया भाव्यं सुविचार्यैव कुर्वता ॥ ९० ॥

सं० टी०—बुद्धिमता सुविचारपूर्वकमेव कार्यं कर्तव्यमित्याह । कर्मेति । यद्यपि पुंसां फलं दुःखादिकं कर्मायत्तं कर्माधीनमस्ति तथा बुद्धिः कर्मानुसारिणी कर्मानुगामिनी अस्ति तथापि सुधिया मता सुविचार्यैव कर्म कुर्वता भाव्यम् । अनुष्टुब्वृत्तमिदम् ॥ ९० ॥

भा० टी०—यद्यपि मनुष्योंको उनके कर्मानुसार फल मिलताहै, और द्धेभी कर्मके अनुसारही होजातीहै, तथापि बुद्धिमानोंको उचित है कि कार्य चारकर करें ॥ ९० ॥

दोहा—फलहू पावत कर्मतें, बुद्धिहु कर्म अधीन ।
तद्यपि बुद्धिबिचारकै, कारज करौ प्रवीन ॥ ९० ॥

खल्वाटो दिवसेश्वरस्य किरणैः सन्तापितो मस्तके
वाञ्छन् देशमनातपं विधिवशात्तालस्य मूलं गतः॥
तत्राप्यस्य महाफलेन पतता भग्नं सशब्दं शिरः
प्रायो गच्छति यत्र भाग्यरहितस्तत्रैव यांत्यापदः ९१ ॥

सं० टी०—भाग्यहीनो नरो यत्र गच्छति तत्र दुःखमेव लभत इति खल्वाट दृष्टान्तेन व खल्वाट इति। यथा खल्वाटः पुरुषो बहिरटन् दिवसेश्वरस्य दिनकरस्य सूर्यस्य किरणैर्मस्तके सन् सन्ननातपं घर्मशून्यं देशं वाञ्छन्निच्छन् विधिवशात् दैववशात् तालस्य तालवृक्षस्य मूलं गतः। तस्मिन् स्थलेऽपि दैववशादकस्मादेव पतता महाफलेनास्य खल्वाटस्य शिरः सशब्दं यथास्यात्तथ भूदिति शेषः। तथा प्रायो यत्र यस्मिन् स्थाने भाग्य रहितो भाग्यहीनो नरो गच्छति तत्रैव तं यान्ति॥ शार्दूल विक्रीडितं वृत्तमिदम्॥ ९१॥

भा. टी.—एक चँदुले मनुष्यका सिर जब सूर्यकी किरणोंसे जलनेलगा छायाकी इच्छा करके दैवयोगसे तालके पेडके नीचे गया। वहां जातेही शी बडा फल गिरा। जिससे उसका शिर फूटगया! इसका यह भावार्थ है कि भा पुरुष जहां२ जाताहै वहां२ बिपत्तिभी उसके पीछे जातीहै॥ ९१॥

छप्पय—टांट उघारे मूढ वारहू सिरपर नाहीं। तप्यौ जेठ तालकी पकरी छाहीं। तहां तालफल एक शीसपर परयो धडाके। गयो कारि शोर पीर बाढी तनुताके॥ सुखठौर जान विरम्यौ सुवस त दुखकों सहत। निर्भाग्य पुरुष जित जात तित वैर विपति पीछेहि रह

शशिदिवाकरयोर्ग्रहपीडनं गजभुजङ्गमयोरपि
बंधनम्॥ मतिमतां च विलोक्य दरिद्रतां वि-
धिरहो बलवानितिमे मतिः॥ ९२॥

सं० टी०—दैवगतिर्बलीयसीति सदृष्टान्तं वर्णयति। शशीति। शशी चन्द्रः दिवाकरः ग्रहेण राहुणा पीडनं। गजो द्विपः भुजंगमः सर्पः तयोरपि बंधनं। मतिमतां विदुषा दरि विलोक्य दृष्ट्वा विधिर्दैवं बलवान् बलिष्ठोऽस्तीति मे मम मतिरास्ति। अहो इत्याश्चर्ये द्रुतविलंबितवृत्तमि

भा० टी०—सूर्य और चन्द्रमामें ग्रहणकी पीडा देख, हस्ती और सर्पका देख, और बुद्धिमानोंको दरिद्रता देख, मुझको यही निश्चय होताहै कि दैव बलवान् है॥ ९२॥

छप्पय—रवि शशि निशदिन फिरें ग्रहणसों पीडा पावें। वृहद् गज तुरत तंतु लघुसों बँध जावें॥ महाभयंकर सर्प मंत्रवस रहै

ह ॥ योगी अटल अकाम होय कामी इक क्षण महँ ॥ मतिमान पुरुष दारिद्र वस या जग बिच घूमतरहैं । बलवान दैवगतिहै बडी यह आश्चर्य सुकबि कहैं ॥ ९२ ॥

सृजति तावदशेषगुणाकरं पुरुषरत्नमलंकरणं भुवः ॥
तदपि तत्क्षणभङ्गि करोति चेदहह कष्टमपण्डितता विधेः ॥ ९३ ॥

सं० टी०—विधेरपण्डिततामाह । सृजतीति । ब्रह्मा तावदादौ अशेषा ये गुणास्तेषा माकरं खानिं सर्वगुणानामुत्पत्तिस्थानं भुवः पृथिव्या अलंकरणमलंकारभूतमेतादृशं पुरुषरत्नं सृजति । तदपि पुरुषरत्नमपि तत्क्षणभंगि तत्क्षणनाशशीलमल्पायुः करोति चेदहहेति खेदे कष्टं यथा स्यात्तथेयं विधेर्ब्रह्मणो ऽपण्डितताऽज्ञातताऽस्ति । द्रुतविलम्बितं वृत्तमिदम् ॥ ९३ ॥

भा० टी०—बिधाता पुरुष रत्नको सर्वगुणोंकी खानि और पृथ्वीका भूषण बनाता परन्तु यह बडे कष्टकी बातहै कि उसका जीवन क्षणभंगुरही बनाताहै, इसमें बिधाताकी मूर्खताहीहै ॥ ९३ ॥

दोहा—पुरुष रत्न महि भूषणै, सर्व गुणाकर कीन्ह ।
पै लागत मोहि मन्द विधि, क्षण भंगुर तन दीन्ह ॥ ९३ ॥

पत्रं नैव यदा करीरविटपे दोषो वसन्तस्य किं
नोलूकोऽप्यवलोकते यदि दिवा सूर्यस्य किं दूषणम् ॥
धारा नैव पतन्ति चातकमुखे मेघस्य किं दूषणं
यत्पूर्वं विधिना ललाटलिखितं तन्मार्जितुं कःक्षमः ॥ ९४ ॥

सं० टी०—विधिलिखितं मार्जितुं कःशक्य इति करीरवृक्षादेर्दृष्टान्तेन वर्णयति । पत्रमिति करीरविटपे करीरवृक्षे यदा पत्रं नैव भवति तदा वसन्तस्य किं दोषः । यद्युलूको दिवाभीतो दिवाऽपि दिवसेऽपि नावलोकते तर्हि सूर्यस्य दूषणं किम् । यदि चातकमुखे धारा जलधारा नैव पतन्ति तर्हि मेघस्य दूषणं किम् । यत् यस्मात् विधिना ब्रह्मणा जन्मकाले ललाटे लिखितं तन्मार्जितुं कः क्षमः समर्थः न कोऽपि । प्रारब्धमेव बलीय इति भावः । शार्दूलविक्रीडितवृत्तमिदम् ॥ ९४ ॥

भा० टी०—यदि करीरके वृक्षमें पत्ते नहीं लगते तौ वसन्तका क्या दोषहै? यदि उल्लू दिनमें नहीं देख सकता तौ सूर्यका क्या दोषहै ? यदि चातकके मुखमें जलकी धारा नहीं पडती तौ मेघका क्या दोष है ? सत्यतो यहहै कि जो कुछ बिधाताने ललाटमें प्रथमही लिख दियाहै उसको कौन मेटसक्ताहै ॥ ९४ ॥

छप्पय—कहा बसन्तहि दोष करीरहि पात न आहीं । उल्लुहि लगै अँध्यार दिवस रबि दूषण नाहीं ॥ ज्यों चातक मुखमाहिं पडै नहिं जलकी

धारा ॥ दूषण दैवे जोग नहीं घन देख बिचारा ॥ यह सत्य जानुरे जो लिखे भालमें अंक विधि । कह हरिजन इहि जग ताहि कोउ नहार न कोइ विधि ॥ ९४ ॥

## इति दैवप्रशंसा ।

## ॥ अथ कर्मप्रशंसा ॥

नमस्यामो देवान्ननु हतविधेस्तेऽपि वशगा विधिर्वन्द्यः सोऽपि प्रतिनियतकर्मैकफलदः ॥ फलं कर्मायत्तं किमभरगणैः किं च विधिना नमस्तत्कर्मभ्यो विधिरपि न येभ्यः प्रभवति ॥ ९५ ॥

सं० टी०–इदानीं कर्म श्लाघते । नमस्याम इति । देवानिन्द्रादीन् वयं नमस्यामः नम्रूप तर्हि तेऽपि हतविधेर्वशगा अदृष्टाधीनाः स्वातन्त्र्येण फलं दातुमशक्ताः । अद्य विधिर्वन्द्यः सोऽपि प्रन्तु यत्कर्म तस्यैकस्य फलं ददाति । नत्वन्यत्फलं दातुं शक्तः । फलं तावत् कर्मायत्तं कर्माधीनं यदि अमरैः देवैरदृष्टेन विधिना च किमतस्तत्कर्मभ्यो नमः । येभ्यो विधिरापि न प्रभवतिं । शिखरिणीवृत्तमिद

भा० टी०–देवताओंको हम नमस्कार करतेहैं परन्तु वेभी विधिके आधी हम विधिको नमस्कार करतेहैं परन्तु बिधाताभी हमारे कर्मोंके अनुसारही फल दे इसलिये जब देवता और बिधि दोनोंही कर्मके आधीन है तब उनसे क्या प्रयो हम तो कर्मकोही नमस्कार करते हैं, जिसपर बिधाताकाभी वश नहीं चलसक्ता।

दोहा–वन्दहुं सुर ते जानिवस, विधिके वन्दों ताहि ।
देत विरिञ्चिहु कर्म फल, वन्दौं कर्म सदाहि ॥ ९५ ॥

ब्रह्मा येन कुलालवन्नियमितो ब्रह्माण्डभाण्डोदरे विष्णुर्येन दशावतारगहने क्षिप्तो महासङ्कटे ॥ रुद्रो येन कपालपाणिपुटके भिक्षाटनं कारितःसूर्यो भ्राम्यति नित्यमेव गगने तस्मै नमःकर्मणे॥ ९६ ॥

सं० टी०—ब्रह्मेति । येन कर्मणा ब्रह्माण्डमेव भाण्डं भाजनं तस्योदरे ब्रह्मा कुलालव यमितो नियंत्रितः सृष्टिरचनायामिति शेषः । यथा कुलालो बहुप्रकारभाण्डरचनां करोति तथैव ब्र नानाप्रकारसृष्टिरचनां करोतीत्यर्थः । येन कर्मणा बिष्णुर्हरिर्दशावतारा रामादयस्तन्मध्ये यद्गहनं दुः महत्सङ्कटं तस्मिन् क्षिप्तः पातितः । येन कर्मणा रुद्रो महादेवः कपालं नरकपालं तेन स

णिपुटकः करसंपुटकस्तस्मिन् या भिक्षा तदर्थमटनं भ्रमणं कारितः । तथा येन सूर्यो नित्यमेव गगने काशे भ्राम्यति भ्रमणं करोति तस्मै कर्मणेनमः । शार्दूलविक्रीडितं वृत्तमिदम् ॥ ९६ ॥

भा० टी०—जिस कर्मने ब्रह्माको कुह्मारके समान सृष्टि रचनेमें नियत किया, सने विष्णुको दशअवतार लेनेके सङ्कटमें डाला, जिसने रुद्रकोभी खोपड़ी हाथमें ले क्षा मांगनेका दुःख दिया, और जिसने सूर्यको नित्य आकाशमें भ्रमण करनेकी डा दी, उसकर्मको हम नमस्कार करतेहैं ॥ ९६ ॥

दोहा—विधिको कियौ कुम्हार जिन, हरिकों दश अवतार ।
भीख मंगावत ईशकों, ऐसौ कर्म उदार ॥ ९६ ॥

नैवाकृतिःफलति नैव कुलं न शीलं विद्यापि
नैव न च यत्नकृतापि सेवा ॥ भाग्यानि पूर्वतपसा
खलु सञ्चितानि काले फलंति पुरुषस्य यथैव वृक्षाः ॥ ९७ ॥

सं० टी०—सर्वत्र भाग्यमेव फलति नाकृतिरिति वृक्षदृष्टान्तेन दर्शयति । नैवेति । आकृतिः । रूपं नैव फलति । नैव कुलं सत्कुलं । नैव शीलं । विद्यापि नैव । यत्नेन कृता सेवापि नैव फलति रन्तु पूर्वमाचरितं यत्तपस्तेन संचितानि पुरुषस्य भाग्यानि काले समये वृक्ष इव फलन्ति ॥ ९७ ॥

भा० टी०—सुन्दररूप, उत्तमकुल, शील, विद्या और यत्नसे कीहुई सेवा ये सब नुष्यको कुछभी फल नहीं देतेहैं, केवल पूर्वजन्मकी तपस्याद्वारा सञ्चित किये हुये ग्यही मनुष्योंको समयपर वृक्षकी नाईं फल देते हैं ॥ ९७ ॥

दोहा—विद्या आकृति शील कुल, सेवा फल नहिं देत ।
फलत कर्महू समयमें ज्यौं तरु फलनसमेत ॥ ९७ ॥

बने रणे शत्रुजलाग्निमध्ये महार्णवे पर्वतमस्तके वा
सुप्तं प्रमत्तं विषमस्थितं वा रक्षंति पुण्यानि पुराकृतानि ॥ ९८ ॥

सं० टी०—सर्वत्र पूर्वकृतानि पुण्यान्येव रक्षन्तीत्याह । वन इति । पुरा पूर्वं कृतानि पुण्यानि कर्माणि । वनेऽरण्ये रणे युद्धे शत्रुश्च जलं च, अग्निश्च तेषां मध्ये महार्णवे समुद्रे वा पर्वतस्य मस्तके निद्रितं प्रमत्तमुन्मत्तं वा विषमे नतोन्नतभूमौ स्थितं पुरुषं रक्षन्ति । उपेन्द्रवज्रावृत्तमिदम् ॥ ९८ ॥

भा० टी०—वनमें, लडाईमें, शत्रु जल और अग्निके मध्यमें समुद्रमें अथवा पहा- की चोटीपर सोतेहुए बेहोशीमें और विषम अस्थानमें केवल पूर्व जन्मके कर्मही मनु- की रक्षा करतेहैं ॥ ९८ ॥

दोहा—वन रण जल अरु अग्निमें, गिरि समुद्रके मध्य ।
निद्रा मद अरु कठिन थल, पूरव पुण्यहि सध्य ॥ ९८ ॥

या साधूंश्च खलान्करोति विदुषो मूर्खान्हितान्द्वेषिणः
प्रत्यक्षं कुरुते परोक्षममृतं हालाहलं तत्क्षणात् ॥
तामाराधय सत्क्रियां भगवतीं भोक्तुं फलं वाञ्छितं
हे साधोव्यसनैर्गुणेषु विपुलेष्वास्थां वृथा मा कृथाः ॥ ९९ ॥

सं० टी०–इदानीं सत्क्रियाफलमाह । येति । या सत्क्रिया खलानपि साधून् करोति । मूर्खान् पण्डितान् करोति । द्वेषिणो वैरिणो हितान् करोति । परोक्षं प्रत्यक्षं करोति । हालाहलं विषममृतं करोति । तां सत्क्रियां भगवतीमाराधय यदि वाञ्छितं फलं भोक्तुमिच्छसि । हे साधो । विपुलेषु गुणेषु प्रीतिभिरास्थां वृथा मा कृथाः मा कुरु । सत्क्रियां भगवतीमाराधय, तां नास्मिन् युगे किञ्चिदपि भवतीति भावः । शार्दूलविक्रीडितं वृत्तमिदम् ॥ ९९ ॥

भा० टी०–जो सत्क्रिया दुर्जनोंको सज्जन बनाती है, जो मूर्खोंको पंडित शत्रुको मित्र बना देतीहै, जो परोक्षको प्रत्यक्ष और बिषको अमृत कर देतीहै, सत्क्रियाभगवतीकी आराधना करो, यदि मन मांगा फल चाहतेहो हे साधो! गुणोंके साधन करनेमें हठकर वृथा श्रम मत करो ॥ ९९ ॥

छप्पय–करत दुष्टको साधु मूढ पण्डित कहलावत । करत शत्रुको विषहिं अमृत ठहरावत ॥ नृपति सभाकौ नाँव सक्ति यादेवी कहिये । सेवा किये सकल सुख सम्पत लहिये । यह जो प्रसन्न ह्वै है नहीं तौ विद्या सब अफल । सुन बात चतुर नर तू यहै वाहीसों ह्वै है सफल ॥ ९९ ॥

गुणवदगुणवद्वा कुर्वता कार्यमादौ परिणतिरवधार्या
यत्नतः पण्डितेन ॥ अतिरभसकृतानां कर्मणामाविपत्ते-
र्भवति हृदयदाही शल्यतुल्यो विपाकः ॥ १०० ॥

सं० टी०–पण्डितेन परिणामं विचार्य कार्यं कर्तव्यमित्याह । गुणेति । गुणवद्गुणैर्युतं ऽगुणवत् कार्यं कुर्वता कर्तुमिच्छता पण्डितेन विवेकिनाऽदौ पूर्वमेव यत्नतः प्रयत्नात् कार्यस्य वा परिणतिः परिणामोऽवधार्या विचारणीया । सर्वं कार्यजातं शुभोदर्कं वीक्ष्यारम्भणीयमिति अन्यथा अतिरभसेन सहसा कृतानां कर्मणां विपाकः फलमाविपत्तेः मरणपर्य्यन्तं हृदयदाही शल्य शंकुतुल्यो भवति । मालिनीवृत्तमिदम् ॥ १०० ॥

भा० टी०–कोई कार्य अच्छा हो चाहे बुरा हो करनेवाले बुद्धिमान्को उचित कि प्रथम उस कामका परिणाम सोच ले, क्यों कि विना विचारे सहसा किए हुए कर्मका फल मनुष्यके हृदयमें मरण पर्य्यन्त कांटेके समान खटकताहै ॥ १०० ॥

दोहा–कारज अच्छो अरु बुरौ, कीजै बहुत बिचार ।
विना बिचारे करतही, होत रार अरु हार ॥ १०० ॥

स्थाल्यां वैदूर्यमय्यां पचति च लशुनं चन्दनैरिंधनाद्यैः
सौवर्णैर्लाङ्गलाग्रैर्विलिखति वसुधामर्कमूलस्यहेतोः ॥
कृत्वा कर्पूरखंडान्वृतिमिह कुरुते कोद्रवाणां समन्तात्प्रा-
प्येमां कर्मभूमिं न चरति मनुजो यस्तपो मन्दभाग्यः ॥१०१॥

सं० टी०—अस्यां पृथिव्यां जन्म प्राप्य यस्तपो नाचरति स पुरुषः कीदृशो भवतीत्यनेन श्लोकेनाह । स्थाल्यामिति । मनुजो मनुष्यः इमां कर्मभूमिं प्राप्य यस्तपः स्वधर्मनिष्ठां सत्क्रियां न चरति स मन्दभाग्यः स्वहितं न जानाति । अत्र दृष्टान्तः । यथा वैदूर्य्यमय्यां रत्नखचितायां सुवर्णस्थाल्यां लशुनं चन्दनकाष्ठैः पचति पाकं करोति : यथा सुवर्णमयैर्लाङ्गलाग्रैर्हलाग्रैर्वसुधां पृथ्वीं विलिखति भूमिं शुद्धां करोति किमर्थमर्कमूलस्य हेतोरर्कवृक्षाणां रोपणार्थं । कर्पूरखण्डान् कर्पूरवृक्षान् छित्वा तत्र समन्तात् कोद्रवाणां वृतिमावरणं कुरुते । तथेमां भूमिं प्राप्य तपस्त्यक्त्वा विषयभोगान् भुङ्क्ते इत्यर्थः ॥ शार्दूलविक्रीडितंवृत्तमिदम् ॥ १०१ ॥

भा. टी.—वह पुरुष मानों रत्नोंसे भूषित सोनेकी थालीमें चन्दनकी लकडी जला लहसन पकाना चाहताहै, और खेतमें सोनेका हल चलाकर आकके वृक्षोंको बोताहै, और कपूरके वृक्षोंको काटकर कोद्रोंके वृक्षोंकी चारोंओर उनकी बाढ लगाताहै, जो मन्दभागी इस कर्म भूमिमें जन्म पाकर तप नहीं करता ॥ १०१ ॥

दोहा—ज्यों हांडी वैडूर्यकी, तामे लहसुन धारि ।
पकवत ताको बैठिकै, चन्दन लकडी जारि ॥
जोतत महि लै हेम हल, आक बपनके हेत ।
काटत वृक्ष कपूर के, रूंधत कोदौ खेत ॥
तिमि मानुष तन पाइकै, त्यागत है तप जौन ।
बिषय भोग सेवत सदा, महामूढ है तौन ॥ १०१ ॥

मज्जत्वम्भसि यातु मेरुशिखरं शत्रूञ्जयत्वाहवे वाणिज्यं
कृषिसेवनादिसकला विद्याः कलाः शिक्षतु ॥ आकाशं
विपुलं प्रयातु खगवत्कृत्वा प्रयत्नं परं नाभाव्यं भवतीह
कर्मवशतो भाव्यस्य नाशःकुतः ॥ १०२ ॥

सं० टी०—यद्भाव्यं तदवश्यं भवत्येवेत्याह । मज्जेति । अम्भसि जले मज्जतु । मेरुशिखरं यातु । आहवे युद्धे शत्रून् जयतु । वाणिजः भावः वाणिज्यं कृषिसेवनादि सकला विद्याः कलाश्च शिक्षतु अभ्यस्तु । विपुलं पुष्कलमाकाशं खगवत् पाक्षिवत् यातु गच्छतु । एतादृशं नानाविधं परमुत्कृष्टं प्रयत्नं कृत्वाऽपि इहलोके कर्मवशतो यदभाव्यं तन्नभवति भवितव्यं भवत्येव भाव्यस्य नाशः कुतः प्रयत्नं विनापि भवति । शार्दूलविक्रीडितंवृत्तमिदम् ॥ १०२ ॥

भा० टी०-चाहे समुद्रमें डूबजाओ, चाहे मेरु पर्वतके शिखरपर चढ चाहे शत्रुओंको युद्धमें जीतलो, चाहे बनिज, खेती सेवा आदि सब विद्याओंमें होजाओ, और चाहे बडा यत्नकर पक्षीके समान आकाशमें उडजाओ परन्तु (नलो कि) जो अनहोनी है वह कभी न होगी और जो होनी है वह किसी टल नहीं सक्ती ॥ १०२ ॥

दोहा-जलधि डुबै चढ मेरु चढ, विद्या रिपु व्यौपार।
अनहोनी होवे न कहुं, होनी अमिट विचार ॥ १०२ ॥

भीमं वनं भवति तस्य पुरं प्रधानं सर्वो जनः सुजनतामुपयाति तस्य ॥ कृत्स्ना च भूर्भवति सन्निधिरत्नपूर्णा यस्यास्ति पूर्वसुकृतं विपुलं नरस्य ॥ १०३ ॥

सं० टी०-भीममिति । यस्य नरस्य पूर्वं सुकृतं विपुलं पुष्कलं भवति तस्य भीम वनमरण्यं प्रधानं श्रेष्ठं पुरं नगरं भवति । सर्वो जनः दुर्जनोऽपि सुजनस्य भावः सुजनतां कृत्स्ना समग्रा भूः सन्त उत्तमा निधयो रत्नानि च तैः पूर्णा भवति । वसन्ततिलकावृत्तमिदम् ॥ १

भा. टी.-जिस मनुष्यके पूर्वजन्मके पुण्य बहुत होतेहैं भयानक बन उस लिये सुन्दर नगर होजाताहै, सब दुष्टजन उसके मित्र होजातेहैं सब पृथ्वीभी रत्नोंसे पूर्ण होजातीहै ॥ १०३ ॥

दोहा-वन पुर ह्वै जग मित्र ह्वै, कष्ट भूमि ह्वै रत्न।
पूरवपुण्यहि पुरुषके, होत इते विन यत्न ॥ १०३ ॥

को लाभो गुणिसङ्गमः किमसुखं प्राज्ञेतरैः सङ्गतिः का हानिः समयच्युतिर्निपुणता का धर्मतत्वे रतिः ॥ कः शूरो विजितेन्द्रियः प्रियतमा कानुव्रता किं धनं विद्या किं सुखमप्रवासगमनं राज्यं किमाज्ञाफलं ॥ १०४ ॥

सं० टी०-क इति । लाभः को गुणिसङ्गमः गुणीनां पुरुषाणां समागमः । असुखं किं प्राज्ञेतरैः मूर्खास्तैः सह संगतिः । हानिः का समयच्युतिः यस्मिन् समये यदवश्यं कर्तव्यमेव तन्न कृतं स गतः सैव हानिरित्यर्थः । निपुणता ज्ञातृता का या धर्मतत्वे रतिः प्रीति । शूरः कः विजितानीन्द्रिय येनासौ । प्रियतमा का यानुव्रता पतिव्रता । धनं किं विद्या शास्त्राध्ययनम् । सुखं किमप्रवासगमनं राज्यं किं आज्ञाफलं । ययाज्ञया सर्वं शुभाशुभं भवति तदेव राज्यम् शार्दूलविक्रीडितंवृत्तमिदम् ॥ १०

भा. टी.-लाभ क्या है ? गुणियोंका समागम । दुःख क्या है ? मूर्खों सङ्गति करना, हानि क्या है ? समयपर चूक जाना । निपुणता क्या है ? धर्म प्रीति रखना, शूरता क्या है ? इन्द्रियोंको वशमें रखना, स्त्री कौन अच्छी है ?

पतिव्रताहै, धन क्या है ? विद्या, सुख क्या है ? परदेश न जाना, और राज्य क्या है ? आज्ञाका चलना ॥ १०४ ॥

छप्पय—कहा लाभ सत्संग कहा दुख मूरुख संगत । समय नाश बड हानि सुघड रँग धर्मकी रंगत ॥ सुख का रहै स्वदेश शूरको इन्द्री जित नर । धन का विद्या अमित नारिको आज्ञा तत्पर ॥ शुठि राज यही सुखमूल जो आज्ञाकारिन प्रजा जन । अरु जन्म सुफल सोइ जानिये जो गिरिधर महँ रहहि मन ॥ १०४ ॥

मालतीकुसुमस्येव द्वे गती स्तो मनस्विनः ॥
मूर्ध्नि वा सर्वलोकस्य शीर्यते वन एव वा ॥ १०५ ॥

सं० टी०—मनस्विनो द्वे गती भवत इति मालतीकुसुमदृष्टान्तेन वर्णयति । मालतीति । मालत्याः कुसुमं पुष्पं तस्येव मनस्विनो विवेकिनः पुरुषस्येह द्वे गती दशे स्तः । यथा कुसुमेन सर्वलोकस्य मूर्ध्नि मस्तके स्थीयतेऽथवा वन एव शीर्यते शीर्णीभूयते तद्वन्मनस्विनः पुरुषा लोकमान्या गृहे वा मुनिरण्यवासिनो भवन्तीत्यर्थः ॥ अनुष्टुब्वृत्तमिदम् ॥ १०५ ॥

भा. टी.—मनस्वीपुरुषोंकी मालतीके फूलके समान दोही गति होतीहै, या तो वे सबके मस्तकपर रहतेहैं या वनमेंही कुम्हलाजातेहैं ॥ १०५ ॥

सोरठा—जाती पुष्पसमान, उत्तमनरकी दोय गति ॥
कै शिर चढे सुजान, कै जंगलबिच झुर झरैं ॥ १०५ ॥

अप्रियवचनदरिद्रैः प्रियवचनाढ्यैः स्वदारपरितुष्टैः ॥
परपरिवादनिवृत्तैः क्वचित्क्वचिन्मण्डिता वसुधा ॥ १०६ ॥

सं० टी०—अस्मिन् संसारे प्रशंसनीयगुणैर्युक्ताः पुरुषा विरला इत्याह । अप्रियेति । अप्रियवचनदरिद्रैः अप्रियवचनेषु दरिद्रास्तैः, प्रियवचनेषु आढ्याः सम्पन्नास्तैः, स्वदारेषु परितुष्टैः सन्तुष्टैः, परापवादात् परनिन्दाया निवृताः एवमादिभिर्गुणैर्युक्तैः पुरुषैः क्वचित् क्वचित् स्थले वसुधा भूमिः मण्डिता-शोभितास्ति ॥ आर्यावृत्तमिदम् ॥ १०६ ॥

भा. टी.—अप्रियवचन न बोलनेवाले,मीठे वचनोंकी खानि, अपनीही स्त्रीसे तृप्त और परनिन्दा न करनेवाले पुरुषोंसे कहीं२ पृथ्वी शोभायमान् है, अर्थात् ऐसे मनुष्य सर्वत्र नहीं होते ॥ १०६ ॥

दोहा—अप्रियवचनदरिद्रतजि, प्रीति बचन धनपूर ।
निज तियरति निन्दारहित, वे महिमण्डल शूर ॥ १०६ ॥

कदर्थितस्यापि हि धैर्यवृत्तेर्न शक्यते धैर्यगुणः प्रमार्ष्टुम् ॥ अधोमुखस्यापि कृतस्य वह्नेर्नाधःशिखा याति कदाचिदेव ॥ १०७ ॥

सं० टी० धैर्यं वृतेर्धैर्यं कोऽपि मार्जितुं न शक्य इति सदृष्टान्तमाह । कदर्थितेति । कद कष्टं प्राप्तस्य धैर्यं वृत्तिर्वर्तनं यस्य तस्य पुरुषस्य धैर्यरूपो यो गुणस्तं प्रमार्ष्टुं नाशं प्रापयितुं के शक्यते । अत्र दृष्टान्तः । अधःकृतमुखस्य वह्नेः शिखा कदाचिदप्यधो न याति किन्तु सदा याति । धीरः आपत्प्राप्तावपि धैर्यं न त्यजतीति भावः ॥ उपजातिवृत्तमिदम् ॥ १०७ ॥

भा. टी.–कैसाही कष्ट क्यों न पड़े परन्तु धैर्यवान् मनुष्यका धीरज नष्ट होसक्ता, अग्निकी ज्वाला कैसी नीचेको क्यों न करदीजाय परन्तु फिर भी वह ऊ को जायगी नीचेको नहीं जाती ॥ १०७ ॥

दोहा–धैर्यवान नहिं धैर्य तज, यदपि दुःख विकराल ।
जैसे नीचौ अग्निमुख, ऊंची निकसत ज्वाल ॥ १०७ ॥

कान्ताकटाक्षविशिखा न दहन्ति यस्य चित्तं न निर्दहति कोपकृशानुतापः ॥ कर्षन्ति भूरिविषयाश्च न लोभपाशैर्लोकत्रयं जयति कृत्स्नमिदं स धीरः ॥१०८॥

सं० टी०–कान्ताकटाक्षेति । यस्य पुरुषस्य चित्तं कान्तानां स्त्रीणां कटाक्षः नेत्र प्रान्त विशिखा बाणास्ते न दहन्ति, तथा कोपः क्रोधएव कृशानुराग्निस्तस्य तापो न निर्दहति न भस्म तथा भूरि बहवो विषयाः लोभ एव पाशाः बन्धनानि तैर्यस्य चित्तं न कर्षन्ति, स धीरः पुरुष सम्पूर्णमिदं लोकत्रयं जगत्रयं जयति वशीकरोति ॥ वसन्ततिलकावृत्तमिदम् ॥ १०८ ॥

भा. टी.–स्त्रियोंके कटाक्षरूपी बाण जिसके हृदयको नहीं वेधते, क्रोध अग्निकी ज्वाला जिसके चित्तको दग्ध नहीं करतीहै, तथा विषय भोग जिसके त्तको लोभपाशमें बाँधकर नहीं खींचते, वही धीर पुरुष इन तीनों लोकोंको वशमें करलेताहै ॥ १०८ ॥

दोहा–तिय कटाक्ष शर विधत नहिं, दहत न कोप कृशानु ।
लोभपाश खेंचत न ते, तिहु पुरवस किय जानु ॥ १०८ ॥

एकेनापि हि शूरेण पादाक्रान्तं महीतलम् ॥
क्रियते भास्करेणैव परिस्फुरिततेजसा ॥ १०९ ॥

सं० टी०–एक एव शूरः सम्पूर्णं जगद् वशीकरोतीति सूर्यदृष्टान्तेन स्पष्टयति । एके यथा परित आसमन्तात् स्फुरितं दीप्तिमत्तेजो यस्य तेन भास्करेण दिवाकरेणैव महीतलं पृथ्वीतलं किरणैराक्रान्तं व्याप्तं क्रियते, तथा एकेनापि हि शूरेण महीतलं भूतलं पादाभ्यामाक्रान्तं क्रियते । अनुष्टुब् वृत्तमिदम् ॥ १०९ ॥

भा. टी.–एकही शूर सारी पृथ्वीको पाँवतले दबाकर ऐसे बश कर लेता है जैसे अकेलाही तेजस्वी सूर्य सारेजगत्को प्रकाशित करदेताहै ॥ १०९ ॥

दोहा--बडौ साहसी होत जो, काम करत झुकझूम ।
शूरवीर अरु सूर यह, लांघ जात रणभूम ॥ १०९ ॥

वह्निस्तस्य जलायते जलनिधिः कुल्यायते तत्क्ष
णान्मेरुःस्वल्पशिलायते मृगपतिः सद्यः कुरङ्गायते
व्यालो माल्यगुणायते विषरसः पीयूषवर्षायते
यस्याङ्गेऽखिललोकवल्लभतमं शीलं समुन्मीलति ॥११०॥

सं० टी०—लोकप्रियपुरुषस्याननुकूला अप्यनुकूला भवन्तीति दर्शयति । यस्य पुरुषस्याङ्गे अखिल लोकानां सम्पूर्णलोकानामतिशयेन वल्लभं वल्लभतमं प्रियतमं शीलं समुन्मीलत्युज्जृम्भते तस्य वन्हिर- ग्निरुष्णस्वभावोऽपि जलायते जलमिवाचरति जलमिव शीतलो भवतीति भावः । तथा जल निधिः समुद्रः कुल्यायते कुल्याल्पसरित्तद्वदाचरति सुतरो भवतीत्यर्थः । तत्क्षणात् क्षणमात्रात् मेरुपर्वतः स्वल्प- शिलायते स्वल्पशिलावदाचरति । महानपि मेरुः स्वल्पपाषाणवद्भवतीत्यर्थः मृगपतिः सिंहः सद्यः कुरंगायते कुरंगो हरिणस्तद्वदाचरति । अतिक्रूरोपि सिंहः कुरंगवत् भवतीत्यर्थः । व्यालः सर्पोऽपि माल्यगुणायते मालस्य गुणः रज्जुस्तद्वदाचरति । सर्पोऽपि क्रूरतां त्यजतीति भावः । विषरसः पीयूष वर्षायते पीयूष- ममृतं तस्यवर्षो वर्षणं तद्वदाचरति । विषमपि स्वस्वभावं त्यजतीति भावः । शार्दूलविक्रीडितं वृत्तमिदम् ११०

भा. टी.–जिस पुरुषके अंगमें सबजगत्को मोहनेवाला शील विराजमान है, उस पुरुषको अग्नि जलके समान जानपडताहै, समुद्र छोटीसी नदीके समान दीखपडता है, मेरुपर्वतभी छोटीसी शिलाके समान ज्ञातहोताहै, सिंहभी उसके आगे हिरण होजाताहै, सर्पभी पुष्पोंकी मालाके समान होजाताहै, और बिषभी अमृतकी वृष्टिकेसमान होजाताहै ॥ ११० ॥

छप्पय–अग्नि होत जलरूप सिन्धु लघु नदी दिखावत । होत सुमेरहु सेर सिंहकौ हिरण जनावत ॥ पुहुपमालसम ब्याल होत विषहू अमृत सम । बनहू नगरसमान होत सब भांति अनूपम ॥ सब शत्रु आय पायन परत मित्रहु करत प्रसन्न चित । जिनके सुपुण्य प्राचीन शुभ तिनके मंगल मोद नित ॥ ११० ॥

लज्जागुणौघजननीं जननीमिव स्वामत्यन्तशुद्धहृद-
यामनुवर्तमानाम् ॥ तेजस्विनः सुखमसूनपि संत्य-
जन्ति सत्यव्रतव्यसनिनो न पुनःप्रतिज्ञाम् ॥ १११ ॥

सं० टी०-तेजस्विनः पुरुषाः स्वप्रतिज्ञां न त्यजन्तीति स्वजननीदृष्टान्तेनाह । लज्जेति सत्य तदेव व्यसनं येषां ते तेजस्विनः पुरुषाः प्रतिज्ञां न त्यजन्ति पुनरन्यां न कुर्वन्ति । कथंभूतां स्तुति लज्जाया ये गुणास्तेषामोघः समुदायस्तस्य जननीम् । पुनः कथंभूतां स्वांस्वकीयां जननीमि शुद्धहृदयामनुवर्तमानां । अतस्तेजस्विनः सुखमसून् प्राणानपि त्यजन्ति परन्तु स्वप्रतिज्ञां न त्य वसन्ततिलकावृत्तमिदम् ॥ १११ ॥

भा० टी०-सत्यव्रतके धारण करनेवाले तेजस्वी मनुष्य लज्जा स्त्रिय गुणोंके उत्पन्न करनेवाली माताके समान शुद्ध हृदयवाली और स्वाधीन रहने अपनी प्रतिज्ञाको कभीही नहिं त्यागते परन्तु हां प्राणोंकोभी (उसके अर्थ) सु त्यागदेतेहैं ॥ १११ ॥

कुण्डलिया-मैय्या लज्जा गुणनकी निज मैयासम मान । तेज तनको तजत याको तजत न जान ॥ याको तजत न जान सत्य वारेहू नर । करत प्राणकौ त्याग तजत नहिं नैक वचन वर । शरत पनी राख रह्यौ वह दशरथ रैया । राखी बल हरचन्द टेक यह की मैया ॥ १११ ॥

इति श्रीमद्भर्तृहरिविरचितं भाषाटीकोपेतं नीतिशतकं संपूर्णम् ।

---

ओम् ।

॥ श्रीहरिम्वन्दे ॥

❋ श्रीवृन्दावनविहारिणे नमः ❋

# अथ भर्तृहरिविरचितं ।

## द्वितीयं शृंगारशतकं प्रारभ्यते ।

शम्भुस्वयंभुहरयो हरिणेक्षणानां येनाक्रियन्त सततं गृहकर्मदासाः ॥ वाचामगोचरचरित्रविचित्रिताय तस्मै नमो भगवते कुसुमायुधाय ॥ १ ॥

सं० टी०-इदानीं शृंगारशतकं व्याख्यायते । सम्यग्विचारितं चेत् परिणामे वैराग्यमेवास्ति निन्दास्तुतिः स्तुतिनिन्दा वा द्वौ प्रकारौ स्तः । अत्र तावत् स्तुतिनिन्दाप्रकारः । स्त्रीणां शृंगारश्च एतत्संकाशात् सुखं तन्नश्वरं परिणामे दुःखमेव । एवं सति विषयिभिरविचार्य बहुतरं स्तूयते

स्तुतिरादौ तां विलिखति । शम्भुरिति । शम्भुः शिवः स्वयम्भू ब्रह्मा हरिर्विष्णुरेते महान्त ईश्वराः येन मदनेन सततं निरन्तरं हरिणेक्षणानां गृहकर्मदासः कृतास्तस्मै कुसुमायुधाय कामदेवाय नमोऽस्तु । कथंभूताय वाचामगोचराणि चरित्राणि तैर्विचित्राय नानाप्रकाराय । वसन्ततिलकावृत्तमिदम् ॥ १ ॥

भा० टी०—जिसने शिव ब्रह्मा, और विष्णुकोभी हरिणके समान नेत्रोंवाली स्त्रियोंके गृहकार्य करनेकेलिये दास बनारक्खाहै और जिसके चरित्रवाणीसे वर्णन नहीं होसक्ते हैं, उस पुष्पायुध कामदेवको हम नमस्कार करतेहैं ॥ १ ॥

दोहा—विधि हरि हरहू करत हैं, मृगनैनीकी सेव ।
बचन अगोचर चरित गति, नमो कुसुमसर देव ॥ १ ॥

स्मितेन भावेन च लज्जया भिया पराङ्मुखैरर्द्धक-
टाक्षवीक्षणैः वचोभिरीर्ष्याकलहेन लीलया सम-
स्तभावैःखलु वन्धनं स्त्रियः ॥ २ ॥

सं० टी०—तत्रादौ स्त्रियः स्मितभावादिना पुरुषमवश्यं बध्नन्तीति द्योतयति । स्मितेनेति । स्मितेन हास्येन, भावेन चित्ताभिप्रायेण, लज्जया, भिया भयेन, पराङ्मुखैरर्द्धानि कटाक्षेण वीक्षितानि नेत्रावलोकनानि तैः वचोभिः परोत्कर्षासहिष्णुतेर्ष्या तयेर्ष्यया कलहेन, लीलयेति समस्तभावैः समस्तचेष्टाभिः खलु निश्चयेन स्त्रियः पुरुषस्य बन्धनं भवन्तीति । वंशस्थं वृत्तमिदम् ॥ २ ॥

भा. टी.—मन्द २ मुसकुराना, लज्जा करना,मुख फेरलेना,तिरछी दृष्टिसे देखना मीठी २ बातें करना, ईर्ष्या करना, कलह करना, और अनेक प्रकारके भाव प्रगट करना, इत्यादि सब बातोंसे स्त्री पुरुषका बन्धनस्वरूपहीहै ॥ २ ॥

दोहा—रसमें त्यौंही रोषमें, दरशत सहज अनूप ।
बोलनि चलनि चितौनिमें, वनिता बंधनरूप ॥ २ ॥

भ्रूचातुर्याकुञ्चिताक्षाः कटाक्षाः स्निग्धा वाचो लज्जि-
तान्ताश्च हासाः ॥ लीलामन्दं प्रस्थितं च स्मितं
च स्त्रीणामेतद्भूषणं चायुधं च ॥ ३ ॥

सं० टी०—भ्रूचातुर्य्यादीन्येव स्त्रीणां भूषणमित्याह । भ्रूचातुर्येति । भ्रूवो यच्चातुर्य्यं तेना कुंचितानि अक्षीणि नेत्राणि येषु, एवंभूताः कटाक्षाः । स्निग्धाः स्नेहयुक्ता वाचः । लज्जितान्ता लज्जायुक्तोऽन्तो मध्यो येषांते लज्जागर्भिता इत्यर्थः हासाः हास्यानि । लीलया स्वभावेन मन्दं शनैः प्रस्थितं प्रयाणं स्मित हास्यं च । स्त्रीणामेते पदार्था भूषणमलङ्कारः आयुधं शस्त्रं च भवन्ति शालिनी वृत्तमिदम् ॥ ३ ॥

भा० टी०—भौंह टेढी कर कटाक्ष करना, मधुर मधुर बात बोलना, लज्जित होकर मुसकुराना, लीलासे मन्द २ चलना, और पुनः ठहरजाना, इत्यादि भाव स्त्रियोंके भूषण और शस्त्रहैं, अर्थात् स्त्री इन्हीं भावोंसे पुरुषको बशमें करलेतीहैं ॥ ३ ॥

छप्पय—करत चातुरी भौंह नयनहू नचत चितै वौ। प्रगटत चाव चापसों मृदु मुसकैवो। दुरत मुरत सकुचात गात अरसात झावत ॥ उझकत इत उत देख चलत ठिठकत छबिछावत। ऐ षण तियनके अंगमाहिं शोभा धरन। अरु येही शस्त्रसमानहैं पुरुष मृग वस करन ॥ ३ ॥

क्वचित्सुभ्रूभंगैः क्वचिदपि च लज्जापरिणतैः क्वचिद्भीतित्रस्तैः क्वचिदपि च लीलाविलसितैः ॥ नवोढानामेभिर्वदनकमलैर्नेत्रचलितैः स्फुरन्नीलाब्जानां प्रकरपरिपूर्णा इव दिशः ॥ ४ ॥

सं० टी०—भ्रूभंगलज्जाभीत्यादिभावेन स्त्रियः पुरुषं मोहयन्तीति दर्शयति। क्वचिदिति। संगतानां नवोढानां वदनान्येव कमलानि तैः नेत्रचलितैः नेत्राणि चलितानि येषु तैः। स्फुरन्नीला प्रकारः समुदायस्तेन परिपूर्णा इव दिशो भवन्ति। वदनानि कमलानीव तेषु नेत्रचलितानि भ्रमरास्तैः पूर्णानि दृश्यन्ते। कथंभूतैर्वदनैः। क्वचित् सुभ्रूभङ्गैर्भ्रूभङ्गश्चलितानि येषु तैः। क्वचि रिणतैः नम्रीभूतैः। क्वचिच्च भीत्या भयेन त्रस्तैः। क्वचिच्च लीलया विलसितैः शोभितैः। शिखरिणीवृत्ति

भा० टी०—नवोढा स्त्रियां अपने मुखकमलमें स्थित चंचलनेत्रोंको इधर फेरतीहुई कभी भृकुटियोंको टेढी करलेतीहैं, कभी लाजसे सिर झुकालेती हैं, भयभीत होजातीहैं, और कभी लीलामय बिलास करनेलगतीहैं, इसतरह जि अपनी दृष्टि फेरतीहैं, उधरही नीलकमलोंके समूहोंका अनुभव होनेलगताहै ॥ ४ ॥

छप्पय—कबहु भौंहकौ भंग कबहुं लज्जायुत दरसत। कबहुक कत संकि कबहु लीला रस वरषत ॥ कबहुक मुख मृदुहास कबहु वचन उचारत। कबहुक लोचन फेर चपल चहुंओर निहारत ॥ सुचरित्र विचित्र करि भरे कमल जिमि दशहु दिशि। ऐसी अनूप निरख हरषत रहिये दिवस निशि ॥ ४ ॥

वक्त्रं चन्द्रविकासि पङ्कजपरीहासक्षमे लोचने वर्णः स्वर्णमपाकरिष्णुरलिनीजिष्णुः कचानाञ्चयः ॥ वक्षोजाविभकुम्भसंभ्रमहरौ गुर्वी नितंबस्थली वाचां हारि च मार्दवं युवतिषु स्वाभाविकं मंडनम् ॥ ५ ॥

सं० टी०—चान्द्रविकासि वक्त्रमित्यादीनि स्त्रीणां स्वाभाविकभूषणानि सन्तीत्याह। वक्त्रं वक्त्रं मुखं चन्द्रविकासि चन्द्रवद्वर्तुलं शोभायमानं च। पंकजानां कमलानां परीहासो विकसनं

मर्थे लोचने । वर्णः कान्तिः स्वर्णं सुवर्णमपाकरिष्णुः सुवर्णतोऽधिकः । कचानां केशानां चय मुदायोऽलिनीं भ्रमरीं जिष्णुः । वक्षोजौ स्तनौ इभस्य गजस्य कुम्भौ गण्डस्थलं तस्य संभ्रमः शोभा स्य हरौ । गुर्वी पृथुला नितम्बस्थली कटिपश्चात्प्रदेशः । मार्दवं वाचां वचनानां हारि अत्यन्तकोम- गिनिं वचनानि एते पदार्था युवतिषु स्वाभाविकं स्वभावेनैव मण्डनं भवन्ति । शार्दूलविक्रीडितंवृत्तमिदम् ॥५॥

भा. टी.—चन्द्रमाकेसमान उज्ज्वल मुख,कमलकीभी हँसी करनेवाले नेत्र, सुवर्ण की दमकको मंदकरनेवाली देहकी कांति, भ्रमरियोंके समूहोंकी शोभाको जीतनेवाले केश, हस्तीके कुम्भस्थलकी शोभा हरनेवाले दोनों स्तन, विशाल दोनों नितम्ब, और मन हरणकरनेवाली कोमल वाणी ये सब स्त्रियोंके स्वाभाविक भूषण हैं ॥ ५ ॥

छप्पय—करत चन्द्र इवविशद बदन अद्भुत छवि छाजत। कमलन वि- हसित नैन रैन दिन प्रफुलित राजत ॥ करत कनक द्युतिहीन अंग आभा अति उमगत। अलकन जीते भौंर कुचनकर कुम्भ किये हत। मृदुता गरोर मारे सुमनसुख सुवास मृगमद कदन। ऐसौ अनूप तियरूप लखि छांह धूप नहिं गिनत मन ॥ ५ ॥

स्मितं किञ्चिद्वक्त्रे सरलतरलो दृष्टिविभवः परिस्पन्दो वाचामभिनवविलासोक्तिसरसः ॥ गतीनामारम्भः किसलयितलीलापरिकरः स्पृशंत्यास्तारुण्यं किमिह नहि रम्यं मृगदृशः ॥ ६ ॥

सं० टी०—तारुण्यकाले स्त्रीणां दृष्टिपातादयः सर्वे भावा अत्यन्तरमणीया भवन्तीत्याह । स्मित मिति । तारुण्यं तरुणतां स्पृशन्त्या मृगदृशः किं रम्यं न अपि तु सर्वं रम्यमेवास्ति । तत्किं वक्त्रे मुखे किञ्चित् स्मितमल्पं हास्यं । सरलस्तरलश्चलो दृशोर्विभवः सामर्थ्यम् । विलासेन दर्शन शक्तिः । अभिनवा नवीना विलासोक्तिस्तया सरसो मधुरो वाचां वचनानां परिस्पन्दो रचना । गतीनां गमनानां आरम्भः किसलयितलीलापरिकरः किसलया नवपल्लवाः अत्यन्तमृदवस्तद्वन्मृदु शनैर्मृदुगमनमित्यर्थः ॥ ६ ॥

भा. टी.—मंद२ मुसकुराताहुआ मुख, सीधे और चञ्चल दृष्टिपात, नवीन विला- सकी उक्तिसे मधुर२ बात करना, और नवीन पल्लवके समान मंद २ गतिसे गमन करना, इत्यादि तरुणी स्त्रियोंके हावभाव क्या मनोहर नहीं होतेहैं ॥ ६ ॥

दोहा—मन्द हसन तीखे नयन, सरस वचन सविलास ।
गजगमनी रमणी निरख, को न करै अभिलाष ॥ ६ ॥

द्रष्टव्येषु किमुत्तमं मृगदृशां प्रेमप्रसन्नं मुखं घ्रात- व्येष्वपि किं तदास्यपवनः श्राव्येषु किं तद्वचः ॥

**किं स्वादेषु तदोष्ठपल्लवरसः स्पृश्येषु किं तत्तनु-**
**र्ध्येयं किं नवयौवनं सुहृदयैःसर्वत्र तद्विभ्रमः ॥ ७ ॥**

सं० टी०-द्रष्टव्येष्विति । सुहृदयैः आसक्तचित्तैः द्रष्टव्येषु दर्शनीयवस्तुषु किमुत्तमं मृगदृशां मृगलोचनीनां स्त्रीणां प्रेम्णा प्रीत्या प्रसन्नं मुखं । घ्रातव्येषु सुगन्धितद्रव्येषु किमुत्तमं पवनः तस्या मुखादागतो वायुः । श्राव्येषु श्रवणयोग्यपदार्थेषु किमुत्तमं तद्वचो वचनम् । स्वादेषु तस्या ओष्ठपल्लवस्य रसः । स्पृश्येषु स्पर्शयोग्यपदार्थेषु किं । तस्याः तनुः शरीरं । ध्येयं किं तस्या नवयौवनम् । सर्वत्र सर्वदा तद्विभ्रमो विलासः स्मरणीया । शार्दूलविक्रीडितं वृत्तमिदम् ॥

भा० टी०-रसिकोंके देखनेयोग्य उत्तम वस्तु क्याहै ? मृगनयनी स्त्रियोंका मुख,सुंघनेयोग्य उत्तमपदार्थ क्याहै? स्त्रियोंके मुखकी भाफ,सुननेयोग्य क्याहै मधुर बचन, स्वादिष्ट उत्तमपदार्थ क्याहै ? स्त्रियोंके ओष्ठ वल्लवकारस स्पर्सकरने क्याहै ? स्त्रियोंका शरीर । ध्यान करनेयोग्य क्याहै ? नवयुवतीका नव और उसके विलास ॥ ७ ॥

छप्पय-कहा देखिवे योग्य प्रियाकौ अति प्रसन्न मुख । कहा सू सोधि श्वास सौगंधि हरत दुख । कहा दीजिये कान प्राणप्यारीकी तन । कहा लीजिये स्वाद अधरके अमृत अघातन ॥ परसिये ताकौ सुवपु ध्यान कहा जोवन सु छवि । सब भांति सकल सुखकौ दन जान सुयश गावत सुकवि ॥ ७ ॥

**एताः स्खलद्वलयसंहतिमेखलोत्थझङ्कारनूपुररवाहृ**
**तराजहंस्यः ॥ कुर्वन्ति कस्य न मनो विवशं तरुण्यो**
**वित्रस्तमुग्धहरिणीसदृशैः कटाक्षैः ॥ ८ ॥**

सं० टी०-तरुण्यः स्वकटाक्षैः कस्य मनः स्वाधीनं न कुर्वन्ति अपि तु सर्वस्य कुर्वन्तीत्याह । इति । एतास्तरुण्यः कटाक्षैः कस्य पुरुषस्य मनो विवशं स्वाधीनंन कुर्वन्ति अपि तु सर्वस्य कुर्व कथंभूताः स्खलन्ति शब्दायमानानि वलयानि तेषां संहतिः मेखलाश्च ताभ्यांउत्थितो झंकारः झ स्तेन सहैतादृशानि नूपुराणि तेषां स्वाच्छब्दात् आहृता जिता राजहंसानां स्त्रियो याभिस्ताः । क कटाक्षैः वित्रस्ता भयभीता मुग्धा हरिण्यस्तासां यथा प्रेक्षणानि तत्सदृशैः । वसन्ततिलकावृत्तमिदम् ।

भा. टी.-जिन्होंने चञ्चलकङ्कणोंके शब्द, क्षुद्रघंटिकाओं ( कोंदनी ) की और नूपुरके झनकारसे राजहंसिनियोंकी चालको जीतलियाहै ऐसी नवयुवती भय रिणीके समान नेत्रपात कर किसके मनको विवश नहीं करदेतीहै ॥ ८ ॥

दोहा-नूपुर किंकिन किंकनी, बोलत अमृत बैन ।
काको मन वस नहिं करत, मृगनैनिनके नैन ॥ ८ ॥

कुंकुमपङ्ककलङ्कितदेहा गौरपयोधरकम्पितहारा ॥
नूपुरहंसरणत्पदपद्मा कं न वशीकुरुते भुवि रामा ॥ ९ ॥

सं० टी०-इह रामा स्त्री सर्वमेव वशीकुरुते इत्याह । कुंकुमेति । कुंकुमस्य पङ्कः कर्दमस्तेन कलङ्कितो देहो यस्याः सा, गौरौ पयोधरौ स्तनौ ताभ्यां कम्पितो हारो यस्याः सा, नूपुराण्येव हंसास्ते रणन्ति शब्दायमानानि पदान्येव पद्मानि यस्याः सा, एवंभूता रामा सुन्दरी स्त्री भुविकं पुरुषं न वशीकुरुते अपि तु सर्वानपि । दोधकवृत्तमिदम् ॥ ९ ॥

भा. टी --केशरकी खौरसे जिसका देह शोभित होरहाहै, जिसके गोरे२स्तनोंपर हार झूमरहाहै, और नूपुररूपी हंस जिसके चरणरूपी कमलोंमें शब्द कररहेहैं, ऐसी सुन्दरी स्त्री इस पृथ्वीपर किस पुरुषको अपने वशमें नहीं करलेतीहै ? ॥ ९ ॥

दोहा—हारहले कुचकनक लग, केसर रंजित देह ।
नूपुरध्वनि पदकमलकी, केहि न करें वस येह ॥ ९ ॥

नूनं हि ते कविवरा विपरीतबोधा ये नित्यमाहुर-
बला इति कामिनीनाम् ॥ याभिर्विलोलतरतारकदृ
ष्टिपातैः शक्रादयोऽपि विजितास्त्वबलाः कथं ताः ॥ १० ॥

सं० टी०-ये कामिनीनामबला इत्याहुः ते कविवरा विपरीतबोधा इत्याह । नूनमिति । ते कविवराः कविश्रेष्ठाः नूनं निश्चयेन विपरीतबोधाः विपरीतज्ञानवन्तः ये कामिनीनामबला इतिनित्यमाहुः वदन्ति । याभिः कामिनीभिरतिशयेन विलोलाः विलोलतराः तारकाश्चक्षुपुत्तलिकायेषु तैः दृष्टिपातैः प्रेक्षणैः शक्रादयोऽपि इन्द्रादयोऽपि विजिता वशीभूताः कृताः तु इति निश्चयेन । ता अबला कथं प्रोक्ताः । वसन्ततिलकावृत्तमिदम् ॥ १० ॥

भा० टी०-वे कविवर निस्सन्देह उलटी समझवाले हैं जो स्त्रियोंको अवलाक-हतेहैं, भला जो अपनी नेत्रोंकी पुतलियोंके चञ्चलकटाक्षोंसे इन्द्रादिकों को भी वश करलेतीहै वे अबला किस प्रकार होसक्तीहै ॥ १० ॥

दोहा—कामिनिको अबला कहत, ते नर मूढ अचेत ।
इन्द्रादिक जीते दृगन सो अबला किहिं हेत ॥ १० ॥

नूनमाज्ञाकरस्तस्याः सुभ्रुवो मकरध्वजः ॥
यतस्तन्नेत्रसंचारसूचितेषु प्रवर्तते ॥ ११ ॥

सं० टी०-कामदेवः स्त्रीणामाज्ञाकर इत्याह । नूनमिति । शोभनौ भ्रुवौ यस्यास्तस्याः स्त्रियो मकरध्वजः कामदेवः नूनमिति निश्चयेनाज्ञाकरः आज्ञावर्तिसेवकोऽस्ति । यतःयस्माद्धेतोः स्त्रियो नेत्रसंचारेण नेत्रचालनेन सूचितेषु पुरुषेषु प्रवर्तते प्रवृत्तो भवति । अनुष्टुब्वृत्तमिदम् ॥ ११ ॥

भा० टी०-निस्सन्देह कामदेव स्त्रियोंका आज्ञाकारी सेवकहै, क्योंकि जिसकी ओर वह सैन करदेती हैं, उसी पुरुषको वश करलेतीहै ॥ ११ ॥

दोहा–कामिनि हुकमी काम यह, नैन सैन प्रगटात।
तीनलोक जीत्यौ मदन, ताहि करत निज हात ॥११॥

केशाः संयमिनः श्रुतेरपि परं पारं गते लोचने अन्तर्व-
क्त्रमपि स्वभावशुचिभिः कीर्णं द्विजानां गणैः ॥
मुक्तानां सतताधिवासरुचिरं वक्षोजकुम्भद्वयमित्थं
तन्वि वपुः प्रशांतमपि ते क्षोभं करोत्येव नः ॥ १२ ॥

सं० टी०–केशा इति । केशाः संयमिनः आवृता बद्धाः । लोचने श्रुतेः कर्णस्यापि पारं गतः । आकर्णविशाले इत्यर्थः । स्वभावेनैव शुचिभिः शुद्धैर्द्विजानां दन्तानां गणैरपि वक्त्रं मुखं व्याप्तं । मुक्ताफलानां सततमधिवासो वसतिस्तया रुचिरं शोभायमानं वक्षोजौस्तनौ तावेव तयोर्द्वयं । हे तन्वि ! हे कृशाङ्गि ! इत्थमुक्तप्रकारेण ते तव वपुः शरीरं प्रशान्तमपि नोऽस्माकं करोत्येव । शार्दूलविक्रीडितंवृत्तमिदम् ॥ १२ ॥

भा. टी.–केश तेलयुत कंघीसे सँवारेहुएहैं, भीतरसे मुख स्वच्छ उज्ज्वल दाँ पंक्तिसे भराहुआहै स्तन निरन्तर मुक्ताफलके हारोंसे शोभायमान हैंहे कृशाङ्गि! ऐ आपका शरीर है वह शीतल होनेपरभी मेरे मनमे क्षोभही उत्पन्न करताहै ॥ १२

छप्पय–संयम राखत केश नयनहू काननचारी । मुखहू माँहि वित्र रहत द्विजगन सुखकारी ॥ उरपर मुक्ताहार रहत निशिदिन छायौ । आननचन्द उजास रूप उज्जल दरसायौ ॥ तेरौ तन मृदुल अति चलत चारु धीरजसहित । सब भांति सतो गुणकौ तऊ करत अनुराग चित ॥ १२ ॥

मुग्धे धानुष्कता केयमपूर्वा त्वयि दृश्यते ॥
यदाहरसि चेतांसि गुणैरेव न सायकैः ॥ १३ ॥

सं० टी०–मुग्धइति । हे सुन्दरि ! त्वयि केयमपूर्वा विलक्षणा धानुष्कता धनुः प्रहरणं यस्य धानुष्कः तस्य भावो धानुष्कता दृश्यते । यत् यस्मात्पुरुषाणां चेतांसि गुणैः प्रत्यंचाभिरथवा आहरसि सायकैर्बाणैर्न । धानुष्को दृश्यमानं लक्ष्यं बाणैर्हरति किन्तु त्वमदृश्यमपि पुरुषं चेतो गुणैरेव हरसि । अनुष्टुब्वृत्तमिदम् ॥ १३ ॥

भा० टी०–हे सुन्दरि ! तेरी यह धनुष विद्यामें कुशलता अत्यन्त वि ज्ञात होतीहै, जोकि प्रत्यञ्चा अथवा अपनी चतुराईसेही पुरुषके हृदयको बेधते बाणोंसे नहीं ॥ १३ ॥

दोहा–अति अद्भुत कमनैत तिय, करमे वाण न लेत।
देखौ यह विपरीत गति, गुणतें बांधे देत ॥ १३ ॥

सति प्रदीपे सत्यग्नौ सत्सु तारारवीन्दुषु ॥
विना मे मृगशावाक्ष्या तमोभूतमिदं जगत् ॥ १४ ॥

सं० टी०--सतीति । प्रदीपे सति अग्नौ सति तारा नक्षत्राणि रविः सूर्यः इन्दुश्चन्द्रश्च तेषु अपि मृगस्य हरिणस्य शावो बालस्तस्याक्षिणीवाक्षिणी यस्यास्तया स्त्रिया विना इदं सर्वं जगत् भूतमन्धकारावृतं भाति । अनुष्टुब्वृत्तमिदम् ॥ १४ ॥

भा० टी०–यद्यपि दीपक, अग्नि तारागण, सूर्य और चन्द्रमा ये सब प्रकाशमान् र्थ विद्यमान् हैं परन्तु मुझको तो मेरी मृगनयनी स्त्रीके बिना ये सब संसार अन्ध-रावृतही दीखताहै ॥ १४ ॥

दोहा–अनल दीप रवि शशि नखत, यद्यपि करत उज्यार ।
मृगनैनी विन मोहिं यह, लागत जगत अंध्यार ॥ १४ ॥

यद्वृत्तः स्तनभार एष तरले नेत्रे चले भ्रूलते
रागान्धेषु तदोष्ठपल्लवमिदं कुर्वन्तु नाम व्यथाम् ॥
सौभाग्याक्षरपङ्क्तिरेव लिखिता पुष्पायुधेन स्वयं मध्य
स्थापि करोति तापमधिकं रोमावली केन सा ॥१५॥

सं० टी०—यदिति । हे कामिनि । यद्यस्मात् कारणात् तव एष वृत्तो वर्तुलः स्तनयोः योर्भारः तरले चञ्चले नेत्रे चले चञ्चले शुभे भ्रूलते, इदमोष्ठपल्लवमेतानि सर्वाणि अस्मासु नामेति येन, रागः प्रीतिः तयान्धेषु व्यथां कुर्वन्ति तत् कुर्वन्तु । कुतः पुष्पायुधेन मदनेन स्वयं तव भाले ाग्याक्षरपंक्तिरेव लिखिता वर्तते । अतोऽस्माकं किमपि न चलति । परन्तु इयं तवोदरे रोमावली स्थापि अधिकं तापं करोति तत् केन कारणेन तन्न ज्ञायते । शार्दूलविक्रीडितं वृत्तमिदम् ॥ १५ ॥

भा० टी०–उन्नत ( उठेहुए ) कुचोंका भार, चञ्चल नेत्र चञ्चल भ्रुकुटी और नों अधरपल्लव ये रसिकोंके शरीरमें पीडा करें तो करैं क्यों कि तेरे मस्तकमें सौभा-के अक्षरोंकी पंक्ति कामदेवने स्वयं अपने हाथसे लिखीहै, परन्तु यह तेरी रोमावली यस्थ, होकरभी अधिकपीडा देतीही है, नहीं मालुम इसका क्या कारणहै, सारांश है कि उन्नत, चञ्चल और रागवान् तो प्रायःपीडा देतीहीहै, परन्तु मध्यस्थरूप यह मावली क्यों अधिक ताप उत्पन्न करतीहै अर्थात् क्यों विपरीत करतीहै ॥ १५ ॥

दोहा–अरुण अधर कुच कठिन, दृग भौंह चपल दुख देत ।
सुथिररूप रोमावली, ताप करत किहि हेत ॥ १५ ॥

गुरुणा स्तनभारेण मुखचन्द्रेण भास्वता ॥
शनैश्चराभ्यां पादाभ्यां रेजे ग्रहमयीव सा ॥ १६ ॥

सं० टी०–गुरुणेति । सा स्त्री गुरुणा महता स्तनयोः कुचयोः भारेण । भास्वता मुखमेव चन्द्रस्तेन, शनैर्मन्दं चरतस्ताभ्यां पादाभ्यां चरणाभ्यां ग्रहमयीव सूर्यादिग्रहप्रचुरेव रेजे शे पक्षे गुरुणा वृहस्पतिना, भास्वता सूर्येण चन्द्रेण वा शनैश्चराभ्यां पादाभ्यां शनैश्चरेण । अनुष्टुब्वृत्तमि

भा० टी०–वह स्त्री गुरु ( बृहत् ) स्तनोंके भारसे, भास्वान् ( प्रका मुखरूपी चन्द्मासे और मन्दगामी दोनों चरणोंसे ग्रहमयीसी दीखतीहै ॥ १६

छप्पय–केश राहुसम जान चन्द्रसौ सोहत आनन । द्वादशमें नैन केतुहि अलकानन । मन्दहास है शुक्र बुधै वानी कहि सुरगुरु जान उरोज कर्ण मंगलहि बखानौ ॥ अति मन्द चा शनैश्चर महा मनोहर युवति यह । तेहि सब फलदायक देखियत सेवत नवों ग्रह ॥ १६ ॥

तस्याः स्तनौ यदि घनौ,जघनं विहारि वक्त्रं च चारु तव चित्त किमाकुलत्वम् ॥ पुण्यं कुरुष्व यदि तेषु वतास्ति वाञ्छा पुण्यैर्विना न हि भवन्ति समीहितार्थाः ॥ १७ ॥

सं० टी०–पुण्यैर्विना मनोरमकामिनीप्राप्तिर्न भवतीत्याह । तस्या इति । हे चि तस्याः स्तनौ घनौ कठिनौ तथा च जघनं विहारि क्रीडायोग्यं, तथाच वक्त्रं मुखं चारु तव व्याकुलं किमर्थं । यदि तेषु स्तनादिषु तव वाञ्छाऽस्ति पुण्यं कुरुष्व । समीहितार्था तार्थाः पुण्यैर्विना न भवन्ति न सिद्ध्यन्तीत्यर्थः । वसन्ततिलकावृत्तमिदम् ॥ १७ ॥

भा० टी०–हे चित्त ! यदि उस स्त्रीके कुच कठोर हैं और जघन करने योग्य है और उसका मुख सुन्दर है तौ तूं उसको देखकर क्यों होताहै, यदि उनमें तेरी इच्छाहै तौ पुण्यकार्य कर क्योंकि बिना पुण्यके मनो नहीं होतेहैं ॥ १७ ॥

कुण्डलिया–रे चित जो चाहे रमण कुच कठोर नवनार । तौ कुछ सुकृत अब मिलैजु वह सुकुमार ॥ मिलैजु वह सुकुमार जघन विहारी । सुन्दर मुख मृदुहास कंजसी अंखियां कारी ॥ मद भरपूर प्रेम सों सदा प्रफुल्लित । मत अधीर धर धीर मि अवस अरे चित ॥ १७ ॥

मात्सर्यमुत्सार्य विचार्य कार्यमार्याः समर्यादमिदं वदन्तु ॥ सेव्या नितम्बाः किल भूधराणामुत स्मर-स्मेरविलासिनीनाम् ॥ १८ ॥

सं० टी०–भूधरस्त्रीनितम्बयोर्मध्ये कः सेवनीय इति पृच्छति । मात्सर्येति । भो आर्या श्रेष्ठाः र्यं उत्सार्य त्यक्त्वा अवश्यं कर्तव्यकार्यं विचार्य मर्यादयासह समर्यादं इदं कार्यं वदन्तु । तर्हि परमार्थश्चेत्तर्हि भूधराणां पर्वतानां नितम्बाः सेव्याः नो चेत् स्मरस्य मदनस्य स्मेरो भरस्तेन विलासिनीनां म्बाः सेव्या इति । उपजातिवृत्तम् ॥ १८ ॥

भा. टी.–हे श्रेष्ठपुरुषो ! मत्सरताको त्यगकर मर्यादासहित बिचार पूर्वक कहो कैतो पर्वतोंकेही नितंव सर्वनेयोग्यहै, और कै कामदेवकी उमङ्गसे भरीहुई योंकेही नितम्ब सेवन योग्य है ॥ पर्वतके मध्यभाग और स्त्रियोंके कटिपश्चात् गको नितम्ब कहतेहैं ॥ १८ ॥

दोहा--नीच वचन सुन अनख तज, करहु काज लहि भेव ।
कैतौ सेवो गिरवरन, कै कामिनि कुच सेव ॥ १८ ॥

संसारेऽस्मिन्नसारे परिणतितरले द्वे गती पण्डितानां
तत्वज्ञानामृताम्भःप्लुतललितधियां यातु कालः
कदाचित् ॥ नो चेन्मुग्धांगनानां स्तनजघनभरा-
भोगसंभोगिनीनां स्थूलोपस्थस्थलीषु स्थगितकर-
तलस्पर्शलोलोद्यतानाम् ॥ १९ ॥

सं० टी०–अस्मिन् संसारे पण्डिताः गतिद्वयेन कालयापनं कुर्वन्तीत्याह । संसार इति । अस्मिन्न- साररहिते परिणतितरले परिणामचञ्चले संसारे पण्डितानां द्वे गती स्तः । अतस्तत्वज्ञानेनैवामृतोदकेन स्नाता अतएव ललिता तीक्ष्णा धीर्येषामेवंभूतः कालः कदाचिद् यातु गच्छतु इति एका गतिः । चेत्तर्हि स्तनजघनयोर्भरस्तस्मिन् आभोगः पूर्णः सम्भोगो यासां तासां मुग्धाङ्गनानां स्थूलोपस्थस्थली- मिषु स्थगितः करतलस्पर्शस्तस्मिन् लोलानां सतृष्णानामुद्यतानां तासां संगेन कालो यात्वियं गतिः या । स्रग्धरावृत्तमिदम् ॥ १९ ॥

भा० टी०–इस असार संसारमें जिसकी अन्ता अवस्था अति चञ्चल है तिसमें ण्डतोंकी दोही उत्तम गति है, यातो तत्त्वज्ञानरूपी अमृतरसमें स्नान करनेवाली नकी निर्मल बुद्धि है उनहीका समय अच्छा व्यतीत होताहै अथवा अपने पुष्ट स्तन र जघनसे जो स्त्री भोगमें सुखदाई है उनके शरीरपर हाथ दिये चञ्चलतासे जो ोगमें तत्परहैं उनका काल भलीभांति व्यतीतहोताहै ॥ १९ ॥

छप्पय—अल्पसार संसार तहां द्वै वात शिरोमणि । ज्ञानअमृतके न्धु मगन व्है रहै बुद्धिवनि ॥ नित्यानित्यविचारसहित सब साधन धें । की यह प्रौढा नारि धारि उरमें आराधें । चैतन्य मदन अंकुशपरासि सकत मसकत करत रिश । रस मसत कसत विलसत हँसत इह विधि तवत दिवस निसि ॥ १९ ॥

**मुखेन चन्द्रकान्तेन महानीलैः शिरोरुहैः ॥**
**पाणिभ्यां पद्मरागाभ्यां रेजे रत्नमयीव सा ॥ २० ॥**

सं० टी०-मुखेनेति । सा स्त्री चन्द्रवत् कान्तं सुन्दरं तेन मुखेन तथा महान्तश्च कृष्णवर्णैः शिरोरुहैः केशैः तथा च पद्मं रक्तकमलं तद्वत् रंगो रक्तिमा ययोस्ताभ्यां पाणिभ्यां रत्नमयीव रेजे शुशुभे । अनुष्टुब्वृत्तमिदम् ॥ २० ॥

भा० टी०-चन्द्रकांतसे मुख, महानीलसे केश, और पद्मरागके समान दोनों हाथोंसे वह स्त्री रत्नोंकी खानके समान शोभायमान है ॥ २० ॥

दोहा-चन्द्रकान्त सम मुख लसत, नीलम केशहि पाश ।
पद्मरागसम कर लसैं, नारी रत्न प्रकाश ॥ २० ॥

**संमोहयन्ति मदयन्ति विडम्बयन्ति निर्भर्त्सयन्ति रमयन्ति विषादयन्ति ॥ एताःप्रविश्य सदयं हृदयं नराणां किं नाम वामनयना न समाचरन्ति ॥ २१ ॥**

सं० टी०-संमोहयन्तीति । एताः वामानि सुन्दराणिनयनानि यासां ताः वामनयनाः पुरुषाणां सदयं दयायुक्तं हृदयं प्रविश्य संमोहयन्ति मोहमुत्पादयन्ति, मदयन्ति, विडम्बयन्ति, निर्भर्त्सयन्ति, परंच रमयन्ति विषादयन्ति विषादमुत्पादयन्ति, तस्मात् एताः स्त्रियः किंनाम न आचरन्ति अपि तु सर्वमेव आचरन्ति । वसन्ततिलकावृत्तमिदम् ॥ २१ ॥

भा० टी०-ये सुन्दरनेत्रवाली स्त्री मनुष्यके कोमलहृदयमें प्रवेशकर मोहलेतीहै, मत्त करदेतीहै, उसकी विडम्बना करती है, उसको डाटती है, रममाण कराती है, और उसको अपने विरहसे दुःखी करतीहै, फिर क्या रहा जो यह नहीं करतीं, अर्थात् ये सब कुछ करनेको समर्थ है ॥ २१ ॥

सोरठा-मोह प्रलाप प्रमाद, ज्ञाननाश निर्लज्जता ।
शोक कलेश विषाद, कहा न कर हिय घुस त्रिया ॥२१॥

**विश्रम्य विश्रम्य वनद्रुमाणां छायासु तन्वी विचचार काचित् ॥ स्तनोत्तरीयेण करोद्धृतेन निवारयन्ती शशिनो मयूखान् ॥ २२ ॥**

सं० टी०-अथ भोगादिलक्षणमुच्यते । विश्रम्येति । काचित्तन्वी कृशाङ्गी विरहिणी वा वनस्थितवृक्षाणां छायासु विश्रम्य विश्रामं कृत्वा । आदरार्थे वीप्सा । स्तनोत्तरीयेण स्तनोपरिवस्त्रेण तेन शशिनश्चन्द्रस्य मयूखान् किरणान् निवारयन्ती विचचार गमनं कृतवती । उपजातिर्वृत्तम् ॥ २२ ॥

भा० टी०-कोईएक स्त्री वनके वृक्षोंकी छायामें वेरवेर विश्राम करती हुई चञ्चल ( स्तनोंके ऊपरका साडीका भाग ) हाथसे उठा उससे चन्द्रमाके किरण रोकती हुई जाती है । यह कृशाभिसारीका नायका है ॥ २२ ॥

दोहा—नारि बिरहिनी तरुतरैं, बैंठी शशिसों भाग।

चन्द्रकिरणकों चीरसों, दूर करत दुख पाग ॥ २२ ॥

अदर्शने दर्शनमात्रकामा दृष्ट्वा परिष्वंगरसैकलोलाः ॥ आलिंगितायां पुनरायताक्ष्यामाशास्महे विग्रहयोरभेदम् ॥ २३ ॥

सं० टी०—अदर्शन इति। आयताक्ष्याः प्रिययुवत्या अदर्शने दृष्टिगोचरत्वाभावे दर्शनमेव दर्शनमात्रं तस्मिन् कामो लालसा येषां तथाभूता वयं स्म इति शेषः। अस्ति भवति परोऽ प्रयुज्यमानोऽप्यस्तीति भाष्यात्। तां दृष्ट्वा परिष्वङ्गरसे आलिङ्गनरसे एकस्मिन्नेव लोलाः सतृष्णाः। आयताक्ष्यां दीर्घलोचनायां पुना रतिसमये अलिङ्गितायांसत्यामुभयोर्विग्रहयोर्देहयोरभेदः सातत्येनैकत्र स्थितिमाशास्महे इच्छामः। अभिलाषितावषयप्राप्तावपि विषयेच्छा न निवर्तते एवेतिभावः। वृत्तमुपजातिरिदम् ॥ २३ ॥

भा० टी०—जबतक हम स्त्रीको नहींदेखते तबतक तौ हमको उसके देखनेहीकी इच्छा रहतीहै, और जब देखलेतेहैं तब उससे आलिङ्गनरसका सुख चाहतेहैं, और जब उसका आलिङ्गनभी प्राप्तहोजाताहै तब यह इच्छा करतेहैं कि यह मृगनयनी हमारे शरीरसे अलग न हो ॥ २३ ॥

छप्पय—विन देखै मन होय वाय कैसे कर देखै। देखै ते चित होय अंग आलिङ्गन सेषै। आलिङ्गनते होत याहि तनमय कर राखै ॥ जैसे जल अरु दूध एक रस त्यौं अभिलाषै। मिलरहे तऊ मिलबौ चहत कहा नाम या विरहकौ। वरन्यौ न जात अद्भुत चरित प्रेम पाठकी गिरहकौ ॥ २३ ॥

मालती शिरसि जृम्भणोन्मुखी चन्दनं वपुषि कुंकुमान्वितम् ॥ वक्षसि प्रियतमा मनोहरा स्वर्ग एष परिशिष्ट आगतः ॥२४ ॥

सं० टी०—मालतीति। यस्य मालती पुष्पमाला शिरसि वर्तते कीदृशी जृम्भणोन्मुखी विकसन्मुखी विकासिता। तथा वपुषि शरीरे चंदनं कुंकुमेन अन्वितं युक्तं। तथा च वक्षसि हृदये प्रियतमा अतिशयेन प्रिया वर्तते। तस्य स्वर्गःपरिशिष्टोऽवशिष्टः उर्वरितः एषोऽत्र भूमौ आगतः अत्रापि स्वर्गभोगो भवतीति भावः। रथोद्धतावृत्तमिदम् ॥ २४ ॥

भा० टी०—खिलेहुए मालतीके पुष्पोंकी माला गलेमें पडीहो, केसरयुक्त चन्दन शरीरमें लगाहुआहो, और सुन्दर प्यारी स्त्री छातीसे लिपटीहो तौ जानलो कि स्वर्गका शेष सुख यही प्राप्तहुआहै ॥ २४ ॥

दोहा—केसरसों अँगिया सनी, बनी नयनकी नोक ॥

मिली प्राणप्यारी मनौ, घर आयौ सुरलोक ॥ २४ ॥

प्राङ्मामेति मनागमामितगुणं जाताभिलाषं ततः सव्रीडं तदनु श्लथोद्यतमनु प्रत्यस्तधैर्यं पुनः ॥ प्रेमार्द्र-

स्पृहणीयनिर्भररहःक्रीडाप्रगल्भं ततो निःशंकांगविकर्षणादिकसुखं रम्यं कुलस्त्रीरतम् ॥ २५ ॥

सं० टी०—प्राङ्मामेतीति । कुलस्त्रीरतं रम्यं कथं प्राक् पूर्वं मा मा इति मनागमेनितगुणं स्वयमेव आगमिष्यति इति कारणात् आदरौ नैव कृतः । ततो जाताभिलाषं इततः सव्रीडं लज्जया सह आगता । तदनु श्लथोद्यतं शिथिलतया उद्यता । अनुपश्चात् धैर्यं । पुनः प्रेम्णा आर्द्रः स्पृहणीयः निर्भरः आदरः तेन रहः एकान्ते क्रीडायां प्रगल्भं ततः निःशङ्कमङ्गस्य विकर्षणमाकर्षणं तेन अधिकं सुखं । एवं शनैः शनैः त्यक्तलज्जामिति रम्यमस्ति । शार्दूलविक्रीडितं वृत्तमिदम् ॥ २५ ॥

भा० टी०—पहिले तो नहीं२ करना, फिर अभिलाषा उत्पन्नहोना, और शरीरका ढीलाकरदेना, धीरता त्यागदेना, प्रेमरसमें भींगना, सराहनेयोग्य एकाडाका चातुर्य विस्तारकरना, और फिर निडर होकर अंग सेचनेका अधिक सुख करना इत्यादि मनोहर गुण उसमें हैं, इसलिये निश्चय जानलो कि कुल स्त्रीही करने योग्य है ॥ २५ ॥

छप्पय—ना ना कहि गुण प्रगट करति अभिलाषलाजजुत । हि ाय धर धीर प्रेमकी इच्छा करि उत । निर्भय रसकों लेत सेज रणमाहीं । क्रीडामांहि प्रवीण नारि सुखिया मनमाहीं । यह सुरत मांझ सुरत करत हरत चित गति करैं । कुलवधू कामिनी केलि कर कामकी सबहरैं ॥ २५ ॥

उरसि निपतितानां स्रस्तधम्मिल्लकानां मुकुलितनयनानां किंचिदुन्मीलितानाम् ॥ सुरतजनितखेदस्विन्नगंडस्थलीनामधरमधु वधूनां भाग्यवन्तःपिबन्ति ॥ २६ ॥

सं० टी०—उरसीति । उरसि हृदये निपतितानां पतितानामर्थात् विपरीतसुरते स्रस्तो विस्रस्तो धम्मिल्लः केशपाशो यासां तासां । मुकुलिते मीलिते नयने नेत्रे यासां ताः केञ्चिदीषदुन्मीलितानां पश्यन्तीनां । सुरते जनितो यः खेदः श्रमस्तेन स्विन्ने गण्डस्थले कपोलौ तासाम् । एवं विधानां वधूनां स्त्रीणामधरमधु ये पिबन्ति ते भाग्यवन्तः सन्ति । मालिनीवृत्तमिदम् ॥ २६ ॥

भा० टी०—छातीपर लेटीहुई है, केश जिनके खुलरहेहैं, आधे नेत्र जिनके देहैं, जो कुछ२ हिलरहीहैं और मैथुनके परिश्रमसे जिनके कपोलोंपर प्रस्वेद आ हैं, ऐसी स्त्रियोंके अधरा मृतको भाग्यवान्ही पुरुष पानकरतेहैं ॥ २६ ॥

छप्पय—खुले केश चहुँओर फैल फूलनकौ वरसत । सदमद छाके सुरत उघरतसे दरसत । सुरत खेदके स्वेद कलित सुन्दर कपोल गहि ॥ करत अधर रस पान परत अमृत समान लहि । ते धन्य धन है

सुकृती पुरुष जे ऐसे उरझे रहत । हितभरे रूप योवन भरे दम्पति सुख सम्पति लहत ॥ २६ ॥

आमीलितनयनानां यः सुरतरसोऽनुसंविदं कुरुते ॥
मिथुनैर्मिथोऽवधारितमवितथमिदमेवकामनिर्वहणं ॥२७॥

सं० टी०—कामनिर्वहणमाह । आमीलितेति । आ ईषन्मीलितानि नयनानि यासां तासां स्त्रीणां सुरतरसः अनुसंविदं सुखं कुरुते इदमेव अवितथं कामस्य निर्वहणं कर्तव्यं । मिथुनैर्द्वंद्वैर्मिथः परस्परमवधारितं ज्ञातमन्यो ह्येतन्नजानाति । गीतिर्वृत्तम् ॥ २७ ॥

भा. टी.—आलस्यभरे नेत्रवाली स्त्रियोंकी कामसे तृप्तिकरनाही कामका पूजन इसको स्त्री पुरुष दोनौ परस्पर जानतेहैं ॥ २७ ॥

दोहा—मृगनैनी आलसभरी, सुरत सेज सुखसाज ॥
पूजहिं दम्पति काम मिल, करहिं सुमङ्गल काज ॥ २७ ॥

इदमनुचितमक्रमश्च पुंसां यदिह जरास्वपि मान्मथा विकाराः ॥
यदपि च न कृतं नितम्बिनीनां स्तनपतनावधि जीवितंरतंवा २८॥

सं० टी०—इदमिति । पुंसां यत् यस्मात् जरासु वृद्धावस्थायामपि मन्मथस्येमे मान्मथाः विकाराः इदमनुचितं कृतं । अक्रमश्च क्रमोऽपिनैव । यदपि नितम्बिनीनां स्तनपतनावधि स्तनयोः पतन जीवितं रतं वा न कृतम् । इदमपि अनुचित कृतम् ॥ पुष्पिताग्रावृत्तमिदम् ॥ २८ ॥

भाषा टीका—यह बिधाताने बडा अनुचित कार्य कियाहै कि मनुष्योंके वृद्धावस्थामेंभी कामविकार प्रगट, होताहै, और ऐसेही स्त्रियोंकोभी ऐसा न बनाया जब तक उनके स्तन न गिरैं तभी तक जीवें अथवा तभी तक कामचेष्टा को उत्पन्नहो ॥ २८ ॥

दोहा--विधिना है अनुचित करी, वृद्धनरन तन काम ।
कुच ढरकतहू जगतमें, जीवत राखी वाम ॥ २८ ॥

एतत्कामफलं लोके यद्द्वयोरेकचित्तता ॥
अन्यचित्तकृते कामे शवयोरिवसंगमः ॥ २९ ॥

सं० टी०—लोके स्त्रीपुरुषयोरेकचित्तता एव कामफलमित्याह । एतदिति । लोके यत् द्वयोः पुरुषयोरेकचित्तता एकचित्तत्वमेतदेव कामस्य फलमस्ति । अन्यस्मिन् पुरुषे अन्यास्यां योषिति वा तेन कृते कामे सति शवयोः मृतयोः सङ्गम इव भवतीति शेषः । अनुष्टुब्वृत्तमिदम् ॥ २९ ॥

भाषा टीका—समागमके समय स्त्री पुरुषका एक चित्त होजानाही कामका है, यदि समागममें दोनोंका एक चित्त न होय तौ वह मृतकके समागमके समान है ॥ २९ ॥

दोहा--नारिसमागम कामफल, दुहुनहि चित इक होय ।
जो कहुं होय विभिन्नता, शवसङ्गम सम जोय ॥ २९ ॥

प्रणयमधुराः प्रेमोद्गाढा रसादलसास्तथा भणितमधुरा मुग्धप्रायाः प्रकाशितसंमदा ॥ प्रकृतिसुभगा विश्रंभार्हाः स्मरोदयदायिनो रहसि किमपि स्वैरालापा हरन्ति मृगीदृशाम् ॥ ३० ॥

सं० टी०—प्रणयेति । मृगीदृशां मृगनयनीनां रहसि एकान्ते स्वैरं यथेष्टमालापा वचनानि अनिर्वचनीयं हरन्ति सर्वस्वमित्यर्थः । कथंभूता आलापः । प्रणयेन प्रीत्या मधुराः । प्रेम्णा उद्गाढाः शृंगारादिरसादलसाः । तथा भणितेन रतिकूजितेन मधुराः । मुग्धप्रायाः अस्फुटाः प्रकाशितः संमदाः येस्तै प्रकाशित संमदाः । प्रकृत्या स्वभावेन सुभगाः सुन्दराः विश्रम्भार्हाः विश्वासयोग्याः स्मरस्य कामस्योदयं ददतीति ते स्मरोदयदायिनः । हरिणीवृत्तमिदम् ॥ ३० ॥

भाषा टीका—मृगनयनी स्त्रियोंके प्रणय प्रीतिसे मधुर प्रेमरसपूर्ण रससे आलस्ययुक्त सुननेमें सुन्दर, अव्यक्त आनन्द प्रकाश करनेवाले, स्वभावसे सुन्दर विश्वासयोग्य, और कामदेवका उत्पन्न करनेवाले वाक्य एकान्तमें हरलेते हैं, ॥ ३० ॥

दोहा--प्रणयमधुर आलस भरे, सरस सनेह समेत ।
मृगनैनिनके ये वचन, हरे चित्तकों लेत ॥ ३० ॥

आवासः क्रियतां गांगे पापवारिणि वारिणि ॥
स्तनमध्ये तरुण्या वा मनोहारिणि हारिणि ॥ ३१ ॥

सं० टी०—आवास इति । हे पुरुष । त्वया पापं वारयतीति पापवारि तत्स्वभावे गाङ्गे तस्मिन् वारिणि जले आवासः वसतिः क्रियताम् । गङ्गातीरे पुण्यसम्पादनार्थं वास क्रियतामिति भावः । वा अथवा हारोऽस्ति यस्मिंस्तस्मिन् मनोहारिणि तरुण्याः युवत्याः स्तनमध्ये कुचद्वयमध्ये वासः स्थितिः क्रियताम् । सांसारिकसुखसम्पादनार्थमितिभावः ॥ अनुष्टुब्वृत्तमिदम् ॥ ३१ ॥

भा० टी०—पापहरनेवाले गङ्गाके तटपर वासकरना उचितहै, अथवा हार युक्त तरुणी स्त्रीके स्तनोंके मध्यमें वासकरे ॥ ३१ ॥

दोहा—वास कीजिये गङ्गतट, पाप निवारत वारि ।
कै कामिनिकुचयुगलकौ, सेवन करहु बिचारि ॥ ३१ ॥

प्रियपुरतो युवतीनां तावत्पदमातनोतु हृदि मानः ॥
भवति न यावच्चंदनतरुसुरभिर्निर्मलः पवनः ॥ ३२ ॥

सं० टी०—प्रियेति । तावत् प्रियस्य पुरतोऽग्रभागे युवतीनां हृदि मानोऽहंकारः पदमातनोतु वि स्तारयतु । यावच्चन्दनतरुणा वृक्षेण सुरभिः सुगंधिः सुनिर्मलः स्वच्छः पवनोऽनिलो मलयानिल इत्यर्थः न भवति । इति भोगादिलक्षणम् । गीतिर्वृत्तमिदम् ॥ ३२ ॥

भा० टी०—मानिनी स्त्रियोंके हृदयमें मान तभी तक ठहरताहै जब तक कि चन्दनकी सुगन्धिसे पूर्ण मलयाचलका वायु नहीं चलताहै ॥ ३२ ॥

दोहा—तबहीं जों मन मान यह, तबही लौं भ्रूभङ्ग ।
जौलौं चन्दनसे मिल्यौ, पवन न परसत अङ्ग ॥ ३२ ॥

अथ ऋतुवर्णनम् । तत्रादौ वसन्तस्य । परिमलभृतो वाताः साखा नवांकुरकोटयो मधुरविरतोत्कण्ठा वाचः प्रियाः पिकपक्षिणाम् । विरलसुरतस्वेदोद्गारा वधूवदने- न्दवः प्रसरति मधौ रात्र्यां जातो न कस्य गुणोदयः ॥ ३३ ॥

सं० टी०—वसन्ततौं कामवर्द्धकसर्वपदार्थोनां प्रादुर्भावो भवतीति तत्रादौ वसन्तं वर्णयति परिमलेति । परिमलेन सुगन्धिना भृतः युक्ताः वाताः पवनाः वान्तीतिशेषः । वृक्षाणां शाखाः नवांकुरकोटयः नवांकुरयुक्ता अभवन् । पिकपक्षिणां कोकिलपक्षिणां प्रियाः मधुरविरतोत्कण्ठा वाचः उच्चैरुत्कंठितमधुरवाचः अभवन् । विरलः स्वल्पः सुरते सम्भोगे यः स्वेदस्तस्योद्गारः प्राकट्यं येषु । तथाभूता वधूनां वदनान्येवेन्दवश्चन्द्रा अभवन् । एवं मधौ वसन्ते प्रसरति प्रकटिते सति अभवत् । तस्य मधोः रात्र्यां कस्य पदार्थस्य गुणोदयः न जातः । हरिणीवृत्तमिदम् ॥ ३३ ॥

भा. टी.—सुगन्धियुक्त पवन चलरहाहै, वृक्षोंकी साखाओंमें नये अंकुर निकले हैं, कोकिल आदि पक्षियोंकी उत्कण्ठाभरी वाणी अत्यन्त मधुर मालूम होतीहै, और स्त्रियोंके मुखचन्द्र रतिश्रमसे निकलेहुए प्रस्वेदोंके कणोंसे शोभित होरहेहैं, ऐसी वसन्त- ऋतुकी रात्रिमें किस पदार्थके गुणोंका उदय नहीं होताहै ॥ ३३ ॥

छप्पय—चलैं सुगन्धित पवन फूल चहुँदिशमें फूले । बोलत पिक मृदु बचन कामशर उरमे शूले । मुकुलित मंजरि आम करै उत्कण्ठा भारी । रति श्रमस्वेदित वदन चन्द्रसम अद्भुत नारी । यह कहि पदार्थ के गुण नको उदय करत नहि जगत महँ । शुठि ऋतु वसन्तकी है निशा मङ्गल दायक सकल कहँ ॥ ३३ ॥

मधुरयं मधुरैरपि कोकिलाकलकलैर्मलयस्य च वायु- भिः ॥ विरहिणः प्रणिहन्ति शरीरिणो विपदि हन्त सुधापि विषायते ॥ ३४ ॥

सं० टी०—विपदि सुधापि विषायते इति विरहिदृष्टान्तेनाह । अयं मधुर्वसन्तः शरीरिणोऽपि विरहिणो मधुरैरपि कोकिलानां कलकलैः शब्दैः, तथा मलयस्य वायुभिश्च प्रणिहन्ति मारयति । ननु कोकि-

ऽकलकला मधुराः, तथा मलयवायुरपि प्रियकरः, एभिर्मरणं न घटते इत्यतआह। विपदि आपदि सुधा अमृतमपि विषायते विषमिवाचरति हन्त इति खेदे। द्रुतविलम्बिन्तं वृत्तमिदम् ॥ ३४॥

भा॰ टी.-यह वसन्तऋतु कोकिलोंके मधुर२ शब्दोंसे और मलयाचलके वायुसे विरही पुरुषोंका वध करताहै, इससे यह सिद्ध होताहै कि विपत्तिकालमें अमृतभी विष होजाताहै ॥ ३४॥

दोहा-ऋतु वसन्त कोकिल कुहुक, त्यौंही पवन अनूप।
बिरहविपतिके परतही, सुधा होय विषरूप ॥ ३४ ॥

आवासः किल किंचिदेव दयितापार्श्वे विलासालसः कर्णेकोकिल काकलीकलरवः स्मेरोलतामण्डपः॥ गोष्ठी सत्कविभिः समंकतिपयैः सेव्याः सितांशोः कराः केषां चित्सुखयन्ति नेत्रहृदये चैत्रे विचित्राः क्षपाः ॥ ३५ ॥

सं॰ टी-आवास इति। आवासः वसतिः किल इति श्रूयते किंचिदेव स्वल्पकालमात्रमपि दयि प्रियायाः पार्श्वे समीपे विलासेन अलसः प्रियो भवति। कर्णे कोकिलानां काकली सूक्ष्मध्व तथा कलरवः गम्भीरो रवः शब्दः प्रियो भवति। लतामण्डपश्च स्मेरः प्रफुल्लितो भवति। कतिपै सत्कविभिः गोष्ठी प्रिया भवति। सितांशोश्चन्द्रस्य कराः किरणाः सेव्याः भवन्ति। एते पदार्थाः के चिन्नेत्रहृदये सुखयन्ति। ये प्रवासिनस्तेषां दुःखरूपा भवन्ति। एवं चैत्रमासादौ क्षपाः निशाःविचि भवन्ति। शार्दूलविक्रीडितं वृत्तमिदम् ॥ ३५॥

भा॰ टी॰-विलास भोगसे शिथिलहोके स्त्रीके पास रहना, कानसे कोकिल शब्दोंकी कलकलाहट सुनना, लताओंके मण्डपोंका प्रफुल्लित होना, अच्छे कवि जनोंके संग गोष्ठी करना, और चन्द्रमाके किरणोंका सेवन करना, इतनी सुख सामग्रियोंसे उपयुक्त चैत्रमासकी विचित्ररात्रियां किसी किसी सुकृतीमनुष्यके हृद और नेत्रोंको आमोदित करतीहैं ॥३५॥

दोहा-कोकिल रव फूली लता, चैत्र चांदनी रैन।
प्रियासहित निजमहलमें, सुकृती करत सुचैन ॥ ५ ॥

पान्थस्त्रीविरहानलाहुतिकथामातन्वती मञ्जरी माकन्देषु पिका नाभिरधुना सोत्कण्ठमालोक्यते ॥ अप्येतेनवपाटलापरिमलाः प्राग्भा पाटचरा वांति क्लांतिवितानतानवकृतः श्रीखण्डशैलानिलाः ॥ ३६॥

सं॰ टी॰-पान्थेति। अन्यत् किं वसन्ते भवति। अधुना माकन्देषु आम्रवृक्षेषु पान्थस्य कस्य स्त्री तस्या विरह एवानिलोऽग्निस्तस्मिन्नाहुतिर्हवनं तस्याः कथा तामातन्वती विस्तारयन्ती मञ्जरी पिकाङ्गनाभिः उत्कण्ठयासह सोत्कण्ठं यथास्यात्तथा आलोक्यते। अथच श्रीखण्डस्य चन्दन शैलः पर्वतःतत्सम्बंधिनोऽनिलाः मारुताः वान्ति। कथंभूताः नवाचासौ पाटला च तस्याः परिमल

सुगन्धीनां प्राग्भारपाटच्चराः उत्कर्षस्य चौराः । पुनश्च क्लान्तेःक्लमस्य विताने विस्तारस्तस्य तानं तनुत्वं कुर्वन्तीति तथाभूताः । एतादृशे वसन्ते कस्योत्कण्ठा नभवेत् । शार्दूलविक्रीडितंवृत्तमिदम् ॥ ३६ ॥

भा. टी.–इस बसन्तऋतुमें पथिकोंको विरहिणी स्त्रियोंके विरहाग्निमें आहुति देनेवाली आमकी मंजरीको कोकिला बडी अभिलाषासे देखतीहैं और नवीन पाटलके पुष्पोंकी सुगन्धिको चुरानेवाले और खेदको घटानेवाले मलयाचलके वायु गमन करतेहैं ॥ ३६ ॥

छप्पय–विरहीजन मनताप करन बन अंबा मौरे । पिकहू पञ्चम टेर हेर विहरी किये वौरे । भौंर रहे मननाय पुहुप पांडलके महकत । प्रफुलित भये पलास दशौंदिशि दौसी दहकत। मलयागिरिवासी पवनहू कामअग्नि प्रज्वल करत । बिन कन्त बसन्त असन्त ज्यों घेर रह्यौ यह नहिं टरत ॥ ३६ ॥

सहकारकुसुमकेसरनिकरभरामोदमूर्च्छितदिगन्ते ॥
मधुरमधुविधुरमधुपे मधौ भवेत्कस्य नोत्कण्ठा ॥ ३७ ॥

सं० टी०—सहकारेति । सहकारस्याम्रवृक्षस्य "आम्रश्चूतो रसालोऽसौ सहकारोऽतिसौरभः" इत्यमरः ॥ कुसुमानां केसराणि तेषां निकरः समुदायस्तस्य भारस्तस्यामोदो गन्धस्तेन मूर्च्छिताः व्याप्ताः दिशामन्ता दिगन्ताः यस्मिन् । पुनः कथंभूते मधुरं मधु पुष्परसस्तस्मिन् विधुरा आसक्ता मधुपा भ्रमरा यस्मिन् । एतादृशे मधौ वसन्ते कस्य पुरुषस्य मनसि उत्कण्ठा न भवेत् । आर्यावृत्तमिदम् ॥ ३७ ॥

भा. टी.–जिसमें आमके बौरोंकी केसरकी सुगन्धिसे दिशायें व्याप्त होरहीहैं, और मधुर मकरन्दका पानकर भ्रमर उन्मत्त होरहेहैं, ऐसे ऋतुराज वसन्तमें किसके मनमे उत्कण्ठा नहीं होती ॥ ३७ ॥

सोरठा–फूले चहुंदिशि आम, भई सुगन्धित ठौर सब ।
मधु मधुपी अलिग्राम, मत्तभये झूमत फिरैं ॥ ३७ ॥

## ॥ अथ ग्रीष्मवर्णनम् ॥

अच्छाच्छचन्दनरसार्द्रकरा मृगाक्ष्यो धारागृहाणि कुसुमानि च कौमुदी च ॥ मन्दो मरुत्सुमनसः शुचि हर्म्यपृष्ठं ग्रीष्मे मदं च मदनं च विवर्द्धयन्ति ॥ ३८ ॥

सं० टी–ग्रीष्मे ये पदार्थाः मदनं वर्द्धयन्ति तेऽधुना श्लोकत्रयेण वर्ण्यन्ते । अच्छाच्छेति । अच्छाच्छः विमलतमो यश्चन्दनरसस्तेनार्द्राःकरा यासां ताः मृगाक्ष्यो मृगनयनाः स्त्रियः, तथाच धारागृहाणि

जलयन्त्रगृहाणि, कुसुमानि, कौमुदी चन्द्रकला च, मन्दः सुखस्पर्शो मरुद्वायुः, सुमनसो मालती हर्म्यपृष्ठं शुचि शुभ्रं। एते पदार्था ग्रीष्मे मदं च मदनं च विवर्द्धयन्ति। वसन्ततिलकावृत्तमिदम्॥

भा० टी०—अति स्वच्छ चन्दन जिनके हाथोंमें लगरहाहै ऐसी स्त्रियां, तथा फुहारेयुक्त घर, सुगन्धित पुष्प, विकसित चाँदनी, मन्द२ पवन, और महलकी स्वच्छ ये सब ग्रीष्मऋतुमें मद और मदनको बढातेहैं॥ ३८॥

छप्पय—मृगनैनीके हाथ अरगजा चन्दन लावत। छुटत फु देख पुष्पशय्या विरमावत। चारु चांदनी चन्द मन्द मारुतकौ ऐ बाजत बीन प्रवीण संग गायनकौ गैवो। चांदनि उजरे मह निरखत चितगति हित ढरत। पुरुषनकों ग्रीषम विषममें ये मदनहि विस्तरत॥ ३८॥

स्रजो हृद्यामोदा व्यजनपवनश्चन्द्रकिरणाः परागः कासारो मलयजरजः सीधु विशदम्॥शुचिः सौधोत्सङ्गः प्रतनु वसनं पङ्कजदृशोनिदाघे तूर्णं तत्सुखमुपलभन्ते सुकृतिनः॥ ३९॥

सं० टी०—स्रज इति। स्रजः। पुष्पमालाः हृद्यो मनोहारी आमोदः परिमलो यासां व्यजनस्य तालवृन्तस्य पवनो वायुः। चन्द्रस्य किरणाः। परागः पुष्परजः। कासारः सरो मलयजं चन्दनं तस्य रजः। सीधुं मद्यं विशदं। शुचिरुज्ज्वलः सौधो राजसदनं तस्योत्सङ्गः। उ भागः। प्रतनु कोमलं सूक्ष्मं वसनम्। पङ्कजदृशः कमलनयनाः स्त्रियः। एतेषां पदार्थानां ग्रीष्मे तूर्णं शीघ्रं सुकृतितो लभन्ते। शिखरिणीवृत्तमिदम्॥ ३९॥

भा० टी०—मनोहर सुगन्धियुक्त माला, पङ्खाका वायु, चन्द्रमाकी चाँदनी पुष्पोंका पराग, सरोवर, चन्दनकी रज, उत्तम मद्य, बडेमहलकी उत्तम स्वच्छछत, महीन और कमल नयनी सुन्दर स्त्री इत्यादि उत्तमोत्तम पदार्थोंसे पुण्यवान् पुरुष ग्रीष्ममें सुख उठातेहैं॥ ३९॥

दोहा—पुष्पमाल पंखापवन, चन्दन चन्द सुनारि।
बैठ चांदनी जललहर, जेठमास पटधारि॥ ३९॥

सुधाशुभ्रं धाम स्फुरदमलरश्मिः शशधरः प्रियावक्त्राम्भोजं मलयजरजश्चातिसुरभि॥ स्रजो हृद्यामोदास्तदिदमखिलं रागिणि जने करोत्यन्तःक्षोभं न तु विषयसंसर्गविमुखे॥ ४०॥

सं० टी०-सुधेति । सुधया शुभ्रं धाम गृहं । स्फुरन्तः अमला रश्मयः किरणाः यस्य सशशधर चन्द्रः । प्रियायाः वक्त्राम्भोजं मुखकमलं । अतिसुरभि सुगन्धि मलयजं रजः । स्रजो माल्यानि हृद्यः मनोहरः आमोदो गन्धो यासां ताः । तदिदमखिलं सर्वं रागिणि जने एतेषु पदार्थेषु विषयेषु रागो यस्य तस्मिन् जने अन्तःक्षोभं करोति । नतु विषयस्य संसर्गस्तस्मात् विमुखे जने क्षोभं करोति । शिखरिणीवृत्तमिदम् ॥ ४० ॥

भा. टी.-चूनेसे पुताहुआ उज्ज्वल गृह, निर्मल चाँदनीयुक्त चन्द्रमा, प्यारीका मुख कमल सुगन्धित चन्दन, अत्यन्त सुगन्धित पुष्पोंकी माला, ये सब वस्तु, अनुरागी पुरुषोंके हृदयमें अत्यन्त खेदकरतेहैं, परन्तु जो विषयके संसर्गसे विमुखहैं उनके हृदयमें क्षोभ नहीं करते ॥ ४० ॥

दोहा-शशिवदनी अरु शरदशशि, चन्दन पुष्पसुगन्ध ।
ये रसिकनके चित हरत, सन्तनके चितबन्ध ॥ ४० ॥

## इति ग्रीष्मऋतुवर्णनम्

---

# ॥ अथ वर्षावर्णनम् ॥

तरुणी वैषा दीपितकामा विकसतजातीपुण्यसुगन्धिः ॥
उन्नतपीनपयोधरभारा प्रावृट् कुरुते कस्य न हर्षम् ॥४१॥

सं० टी०-तरुणी इति । एषा प्रावृट् तरुणीव कस्य पुरुषस्य हर्षं न कुरुते अपि तु सर्वेषामपि कुरुते । कथंभूता प्रावृट तरुणीच । दीपितः उद्दीपितः कामो ययापक्षे यस्यांच, विकासिता प्रफुल्लिता जातिर्मालतीलता यस्यां, पक्षे केशादौ धारणत्वेन विकसिता जातयो जातिपुष्पाणि यस्यामतएव पुण्यो मनोज्ञः सुगन्धो यस्यां, पक्षे अङ्गादिसौगन्ध्यं, तरुणीपक्षेऽपि तथैव बोध्यम् । पुनःकथंभूता । उन्नता उच्चाः पीनाः पुष्टाः धरन्तीति धराः पचाद्यच् । पयसां धराः पयोधरा, मेघास्तेषां भर एव भारः अतिशयो यस्यां तथाभूता । पक्षे उन्नतौ पीनौ पुष्टौ यौ पयोधरौ स्तनौ तयोः भारो यस्यां इति । उपचित्रावृत्तमिदम् ॥ ४१ ॥

भा० टी०-तरुणीके वेषवाली, कामदेवका उदयकरनेवाली, खिलेहुए जातीपुष्पोंकी सुगन्धिको धारण करनेवाली, और उन्नत पुष्ट पयोधरोंके भारसें युक्त यह वर्षाऋतु किसके हृदयमें हर्ष नहीं उत्पन्न करतीहै । यहांपर श्लेष है, जितने विशेषण प्रावृट्के हैं वेही सब तरुणीमेंभी घटेंगे, और उन सबके भिन्न अर्थ होंगे । तथा जाती जुही लता और जावित्रीको तथा पयोधर मेघ और स्तनसे कहतेहै ॥ ४१ ॥

दोहा-पीनपयोधरकों धरत, प्रगट धरत हैं काम ।
पावस अरु प्यारी निरख, हर्षित होत तमाम ॥ ४१ ॥

वियदुपचितमेघं भूमयः कन्दलिन्यो नवकुटजकदम्बा मोदिनो गन्धवाहाः शिखिकुलकलकेकारावरम्या वानान्ताः सुखिनमसुखिनं वा सर्वमुत्कण्ठयन्ति ॥ ४२ ॥

सं० टी०-वियदिति । वियद्गगनमुपचिता मेघा यस्मिन् तत् उपचितमेघ । कन्दला जाताः कन्दलिन्यो भूमयः । नवा नूतनाः कुटजाः कदम्बाश्च तेषामामोदो गन्धो येषु तथाभूता वायवः । शिखि कुलस्य मयूरकुलस्य कलाः अव्यक्तमधुराः केकारवाः वाणीशब्दास्तै रम्याः वनप्रदेशाः । एते प्रावृषि वर्षाकाले सुखिनमसुखिनं वा सर्वमुत्कण्ठयन्ति मदनाविर्भावेन उत्कण्ठितं मालिनीवृत्तमिदम् ॥ ४२ ॥

भा० टी०-मेघोंसे आच्छादित आकाश, नवीन२ अंकुरोंसे पूर्ण पृथ्वी, कुटज और कदम्बके पुष्पोंसे सुगन्धित वायु, और मयूरोंके झुण्डोंकी सुन्दर रमणीय वनके प्रान्त ये, सब पदार्थ वर्षाऋतुमें सुखी और दुःखी दोनों पुरुषोंको उत्कण्ठित करतेहैं ॥ ४२ ॥

दोहा-अम्बरघन अवनी हरित, कुटज कदम्ब सुगन्ध ।
मोर शोर रमणीक बन, सबकौ सुखसम्बंध ॥ ४२ ॥

उपरि घनं घनपटलं तिर्यग्गिरयोऽपि नर्तितमयूराः ॥ वसुधा कंदलधवला तुष्टिं पथिकः क यातु संत्रस्तः ॥ ४३ ॥

सं० टी०-उपरीति । कश्चन पथिको मार्गे गच्छति । यस्योपरि घनं निबिडं घनानां मेघपटलं, तिर्यगागमनप्रदेशे नर्तिताः मयूराः येषु ते गिरयः । वसुधा भूमिः कन्दलैर्नवाङ्कुरैर्धवला । पथिको विरहेण संत्रस्तः सन्तापितः क तुष्टिं सन्तोषं यातु प्राप्नोतु । आर्यावृत्तमिदम् ॥ ४३ ॥

भा. टी.-ऊपर घनघोर घटा छारहीहै, दाहिने बायें पर्वतोंपर मयूर नाच और नीचे भूमि नवीन अंकुरोंसे हरीभरी होरहीहै, ऐसेसमयमें जब चारों कामोद्दीपन करनेवाले पदार्थ विद्यमान हैं तौ विरहसे व्याकुल पथिक कैसे सन्तोष आवे ॥ ४३ ॥

दोहा-घटाघोर चढ मोर गिरि, शोह हरित सब भूमि ।
विरही व्याकुल पथिकको, कहां तोष लखि घूमि ॥ ४३ ॥

इतो विद्युद्वल्लीविलसितमितः केतकितरोः स्फुरद्गन्धः प्रोद्यज्जलदनिनदस्फूर्जितमितः ॥ इतः केकिक्रीडाकलकलरवः पक्ष्मलदृशां कथं यास्यन्त्येते विरहदिवसाः संभृतरसाः ॥ ४४ ॥

सं० टी०—प्रावृषि स्त्रीणां विरहव्यथामाह । इत इति । इतो विद्युद्वल्ली विद्युल्लता तस्या विलसितं विलासः । इतः केतकितरोः स्फुरन्तीवगन्धः । इतः प्रकर्षेण उद्यजलदानिनदस्य मेघशब्दस्य स्फूर्जितं स्फुरणम् । इतः केकीनां मयूराणां क्रीडासु कलकलरवः कोलाहलः । एवंसति पक्ष्मलदृशां स्त्रीणां संभृतरसा रसवन्तो विरहदिवसाः एते कथं यास्यन्ति गमिष्यन्तिः । शिखरिणीवृत्तमिदम् ॥ ४४ ॥

भा. टी.—एक ओर विद्युत् छटाका विलास, दूसरी ओर केतकीके पुष्पोंकी उत्कृष्ट सुगन्धि, और एक ओर मेघकी गर्जना, और दूसरी ओर मोरोंका शोर, ये सब जहां एकत्रहैं, ऐसे ये रसभरे दिन विरहिणी स्त्रियां कैसे व्यतीत करेंगी ॥ ४४ ॥

दोहा—दमकत दामिनि मेघ इत, केतकि पुष्पविकास ।
मोर शोर निशिदिन करत, विरहीजनमनत्रास ॥ ४४ ॥

असूचीसंसारे तमसि नभसि प्रौढजलदध्वनिप्राये तस्मिन् पतति दृषदां नीरनिचये ॥ इदं सौदामिन्याः कनककमनीयं विलसितं मुदं च म्लानिं च प्रथयति पथिष्वेव सुदृशाम् ॥ ४५ ॥

सं० टी०—असूचीति । असूचीसंसारे नास्ति सूच्याः संसारः संसरणं यस्मिन् तस्मिन् तमसि अंधकारे वंभूते नभसि श्रावणे "नभः खं श्रावणो नभाः" इत्यमरः । कथंभूते श्रावणे मासे प्रौढाश्च ते जलदाश्च षां ध्वनिप्राये दृषदां पाषाणानां नीरेणसह निचये समूहे पतति । एवमिदं सौदामिन्या विद्युतो विलसितं फुरणं कनकं सुवर्णं तद्वत् कमनीयं सुन्दरं । शोभनादृक् यासां तासां स्त्रीणां मार्गेष्वेव पथिष्वेव मुदं हर्षं विरहिणां म्लानिं म्लानतां च प्रथयति प्रकटीकरोति । शिखरिणीवृत्तमिदम् ॥ ४५ ॥

भा० टी०—जिसमें कोई पदार्थ नहीं देखसका ऐसे गाढ़ अन्धकार युक्त श्रावण मासमें बडे बडे मेघोंकी गर्जना और पत्थर सहित जलवृष्टि तथा सुवर्णके समान सुन्दर बिजलीका बारम्बार चमकना स्त्रियोंको मार्गमेंही सुख और दुःख दोनों करतेहैं ॥ ४५ ॥

दोहा—महा अंधतम नभ जलद, दामिनि दमक दुरात ॥
हर्ष शोक दोऊ करत, तियको पियढिग जात ॥ ४५ ॥

आसारेण न हर्म्यतः प्रियतमैर्यातुं बहिः शक्यते शीतोत्कम्पनिमित्तमायतदृशा गाढं समालिंग्यते ॥ जाताः शीतलशीकराश्च मरुतो वांत्यन्तखेदच्छिदो धन्यानां बत दुर्दिनं सुदिनतां याति प्रियासंगमे ॥ ४६ ॥

सं० टी०—आसारेणेति । मेघच्छन्ने दुर्दिने दिनोदये जातेऽपि प्रियतमैः पतिभिः निद्रारसेन आसारेण पर्जन्यधारया यदा बहिर्हर्म्यतो गृहात् यातुं गन्तुं न शक्यते । तदा शीतोत्कम्पनिमित्तमायतदृशा विस्तीर्णनेत्रया स्त्रिया गाढमत्यन्तं आलिंग्यते । अथ च मरुतो वायवः शीतलाः शीकराः अम्बुकणाः येषु ते

खेदं छिन्दन्तिते खेदच्छिदो जाता वान्ति । एवं धन्यानां पुण्यवतां प्रियासंगमे रतिविलासे दुर्दिनमपि सुदिनतां याति सुखकरं भवति । वतेति हर्षे । शार्दूलविक्रीडितं वृत्तमिदम् ॥ ४६ ॥

भा० टी०—वर्षाकी झडीमें दिन निकल आने परभी पुरुष ग्रहसे बाहर निकल सकतेहैं, और बडा जाडा लगताहै, देह कांपती है, इसीसे स्त्रियां गाढ आलिङ्गन करती हैं तथा शीतल जलके कणोंसे पूर्ण मैथुनके अन्तमें हरनेवाला वायु वहता है । अहो ऐसे पुण्यवान् पुरुषोंकें बुरेदिनभी प्रियाके अच्छे दिन होजातेहैं ॥ ४६ ॥

छप्पय—प्राविटूबर्षत मेह चढ्यो दिन शीत अधिकतर । बाहर कारि सकत नेहसों पग कोऊनर ॥ कम्पहोत जब गात तबहि प्यारी सोवत । उठत अनंग तरंग अंगमेंअंग समोवत, रतिखेदस्वेद छेदन जालरंध्र आवत पवन । इहि विधि दुर्दिवसहु मोद प्रद होवहिं संगवसि भवन ॥ ४६ ॥

## इति वर्षाऋतुवर्णनम् ।

## ॥ अथ शरद्वर्णनम् ॥

अर्द्धं नीत्वा निशायाःसरभससुरतायासखिन्नश्लथांगः
प्रोद्भूतासह्यतृष्णो मधुमदनिरतो हर्म्यपृष्ठे विविक्ते ॥
संभोगक्लान्तकान्ताशिथिलभुजलतावर्जितं कर्करीतो
ज्योत्स्नाभिन्नाच्छधारं पिबति न सलिलं शारदं मंदभाग्यः ॥ ४७ ॥

सं० टी०—अर्द्धमिति निशाया अर्द्धं नीत्वा सरभसं सुरते मैथुने आयासः कष्टस्तेन खिन्नः अतएव श्लथाङ्गः सन् हर्म्यपृष्ठे विविक्ते एकान्ते प्रकर्षेणोद्भूता असह्या तृष्णा तया मधुमद... शारदं सलिलं जलं न पिबति स मन्दभाग्यः । कथंभूतं सलिलं सम्भोगक्लान्ता कष्टीभूता कान्ता शिथिला भुजलता तया आवर्जितं आनीतं शारदं शरत्कालिकं सलिलं कर्करीतः कर्कर्या यो न स मन्दभाग्य इत्यर्थः । स्रग्धरावृत्तमिदम् ॥ ४७ ॥

भा० टी०—कोई कामी पुरुष जिसके अंग अर्द्धरात्रि पर्य्यन्त मैथुन क... शिथिल होगयेहैं, जिसको तृष्णा अत्यन्तसे लगरहीहै,और जो मदमें मत्त होरहाहै उस समय सम्भोगके श्रमसे वह एकान्त महलकी छतपर थकी हुई स्त्रीकी भुजाओं

दिये हुए चाँदनीके समान स्वच्छ शीतल जलको झारीसे नहीं पीताहै वह पुरुष अवश्य मन्द भाग्य है ॥ ४७ ॥

छप्पय—छके मदनकी छाक मुदित मदिराके छाके । करत सुरत रण रंग जंग कर कछु इक थाके । पौढरहे लिपटाय अंग अंगनमें उरझे । बहुत लगी जब प्यास तबहि चित चाहत सुरझे । उठ पियत रात आधी गये सीतल जल या शरदको । नर पुण्यवन्त फल लेतहैं निज सुकृतहि की फरदको ॥ ४७ ॥

## ॥ अथ हेमन्तवर्णनम् ॥

हेमन्ते दधिदुग्धसर्पिरशना माञ्जिष्ठवासोभृतः ॥
काश्मीरद्रवसान्द्रदिग्धवपुषः खिन्ना विचित्रै रतैः ॥
पीनोरःस्थलकामिनीजनकृताश्लेषा गृहाभ्यन्तरे ॥
तांबूलीदलपूगपूरितमुखा धन्याः सुखं शेरते ॥ ४८ ॥

सं॰ टी॰—हेमन्त इति । हेमन्ते ऋतौ केचित् पुरुषाः दधि च दुग्धं च सर्पिः घृतं च एतानि अशनं येषां ते । मांजिष्ठं मञ्जिष्ठया रंजितं वासो वस्त्रं बिभ्रति ते । काश्मीरं कुंकुमकेसरं तस्य द्रवो रसस्तेन सान्द्रं निविडं दिग्धमुपलिप्तमेवंभूतं वपुर्येषां तैर्विचित्रैः रतैः खिन्नाः खेदं प्राप्ताः । पीनं मांसलं उरःस्थलं यस्य एवंभूतो कामिनीजनस्तेन कृताः आश्लेषा आलिङ्गनानि येषां ताम्बूलीदलैः पूगैः पूरितानि मुखानि येषां ते । एवंभूता धन्याः गृहाभ्यन्तरे गृहमध्ये सुखं शेरते निद्रां कुर्वन्ति । शार्दूलविक्रीडितंवृत्तमिदम् ॥ ४८ ॥

भा. टी.—हेमन्तऋतुमें जो दही दुग्ध और घीका भोजन करतेहैं मजीठके रँगेहुए वस्त्र पहरतेहैं, केशर और कस्तूरीका सघन लेप अपने सब शरीरमें करतेहैं, पुष्ट स्तनवाली स्त्री जिनका आलिङ्गन करती हैं, और जो पान और सुपारियोंसे अपने मुखको शोभित करतेहैं, और सुखपूर्वक अपने गृहमें शयन करतेहैं वेही धन्य हैं ॥ ४८ ॥

दोहा—दही दूध घृतपान, वसन मजीठहि रंगके ।
आलिंगन रतिदान, केशर चर्चि हिमन्तमे ॥ ४८ ॥

## ॥ अथ शिशिरः ॥

चुम्बन्तो गंगभित्तीरलकवति मुखे सीत्कृतान्यादधाना
वक्षः सूत्कंचुकेषु स्तनभरपुलकोद्भेदमापादयन्तः ॥

ऊरूनाकंपयंतः पृथुजघनतटात्स्रंसयंतोंऽशुकानि व्यक्तं कांताजनानां विटचरितकृतः शैशिरा वांति वाताः ४९

सं० टी०—चुम्बन्त इति । शिशिरे कामिनो भोगकाले यथा कुर्वन्ति तथा वायवोऽतिकुर्वन्ति ेषः । अलकवति केशवति मुखे गण्डभित्तीः अति प्रबला वायवः मुखे केशान् इतस्ततो नयन्ति मेषेण चुम्बन्ति । पुनः कथं भूता सीत्कृतानि आदधानाः, शीतातिशयेन सर्वेऽपि सीत्कृतानि कुर्वन्ति ायुभिः कृतानि । उत्कंचुकेषु वक्षःसु स्तनभरे पुलकोद्भेदमापादयन्तः । ऊरूनाकम्पयन्तः पृथुजघनतटात् ुकानि वस्त्राणि स्रंसयन्तः । निष्कासयन्तः । एवं कान्ताजनानां विटचरितकृतः विटाः भाण्डास्तेषां चरितं कुर्वन्ति ते शैशिराः शिशिरे भवाः वाताः वान्ति वहन्ति । स्रग्धरावृत्तमिदम् ॥ ४९ ॥

भा. टी.—कामी पुरुष भोगकालमें जो आचरण करतेहैं वही शिशिरऋतुका पवन भी करताहै, स्त्रियोंके केशयुक्त कपोलोंका चुम्बन करताहै शीतके कारण सीत्कार शब्द करताहै, कंचुकी रहित स्तनोंको रोमांचित करताहै, जँघाओंको कम्पाताहै बडे पुष्ट जघनोंसे वस्त्रको उडाताहै, इसप्रकार कामी पुरुषके समान आचरण वाला शिशिर ऋतुका पवन वह रहाहै ॥ ४९ ॥

छप्पय—चुम्बन करत कपोल मुखहि सीत्कार करावत । हृदय माँ सजात कुचनपर रोम बरावत । जंघनको थहरात बसनहू दूरकरत झु लग्यौ रहत संगमांहि द्वारकों रोंक रह्यौ ढुक । यह शिशिर पवन विट धर गलिन गलिन भटकत फिरत । मिलरहे नारि नर घरनमें या भट भेरन भिरत ॥ ४९ ॥

केशानाकलयन्दृशो मुकुलयन्वासो बलादाक्षिपन्नातन्वन्पुलकोद्गमं प्रकटयन्नालिंग्य कम्पञ्छनैः वारंवारमुदारसीत्कृतकृतो दन्तच्छदान्पीडयन्प्रायः शैशिर एष संप्रति मरुत्कांतासु कांतायते ॥ ५० ॥

सं० टी०—केशानिति । अथ शैशिरो मरुत् संप्रति इदानीं कान्तासु स्त्रीषु प्रायो बाहुल्येन न्तायते कान्त इव आचरति । तत्कथम् केशानाकलयन् । दृशो दृष्टीः मुकुलयन् । वासोवस्त्रं बलादाक्षिपन् निष्कासयन् । पुलकाः रोमांचास्तेषामुद्गममातन्वन् विस्तारयन् । आलिंग्य शनैः कम्पं प्रकटयन् । वारम्वार राणि बहूनि सीत्कृतानि कारयन् । दन्तच्छदान् ओष्ठान् पीडयन् । एवंप्रायः कान्त एव भवति । र्णनमिति कामिनां विषयिणां मनोरथास्तथा इति भावः । कथं । तेषां कर्तव्यानि ज्ञात्वा त्यक्तव्यानि कारणादुक्तानि । अधुना पक्षद्वयनिरूपणम् ॥ स्रग्धरावृत्तम् ॥ ५० ॥

भा. टी.—बालोंको विखेरता, आंखोंको किञ्चित्२ मूँदता, साडीको वलपूर्वक उडाता हुआ देहको रोमाञ्चित करता हुआ, धीरे२ आलिङ्गन करके कम्पन प्रगट करता

हुआ, और बारम्बार सीसी शब्द कराकर ओष्ठोंको पीडित करताहुआ ये शिशिरऋतु
पवन प्रायः स्त्रियोंके विषय पतिकासा आचरण करताहै ॥ ५० ॥

छप्पय—विलुलित करत सुकेश नयनहूं छिन छिन मूंदत । वसन
ऐंचे लेत देह रोमाञ्चन रूंदत । करत हृदयकों कम्प कहत मुख
सों सीसी । पीडा करतहि ओठ वयारहु मार सिरीसी । यह शीतकाल
जानिये अद्भुत गतिधारत पवन । निशिद्योस दुर दुबके रहौ निजनारी सं
निज भवन ॥ ५० ॥

असाराः सन्त्वेते विरतिविरसायासविषया जुगुप्स-
न्तांयद्वा ननु सकलदोषास्पदमिति ॥ तथाप्यन्तस्तत्वे
प्रणिहितधिया मप्यतिबलस्तदीयोऽनाख्येयः स्फुरति
हृदये कोऽपि महिमा ॥ ५१ ॥

सं० टी०—असारा इति । यत् यस्मात् कारणात् । वा इति विकल्पे ननुइति वितर्के । इदं स
दोषास्पदं इति जुगुप्सतां निन्दां कुर्वतां । एते विरतिविरसाः विरतौ बैराग्ये बिरसाः विगतो
येभ्यः एवंभूताः विषयाः असाराः निःसाराः सन्तु । तथापि तत्वे प्रणिहितधियां बशीकृतबुद्धिनां
तदीयस्तस्याः स्त्रियाः अयं तदीयः कोऽपि महिमा अतिबलः बलवान् न आख्येयः वक्तुं न शक्यः ।
भूतः स्फुरति इदमेवाश्चर्यम् । शिखरिणीवृत्तमिदम् ॥ ५१ ॥

भा. टी.—यह सब भोग विषय असार और बैराग्यमें बिरस करनेवाले हैं, य
इन विषयोंको सम्पूर्णदोषोंका घर समझकर कोई मनुष्य इनकी निंदा करे तौभी इन
महिमा अत्यन्त बलवान् है, वर्णन नहीं होसक्ता, क्योंकि ब्रह्मके बिचारमें लीन त
वेत्ताओंके हृदयमेंभी ये प्रकाशित होतेहैं ॥ ५१ ॥

छप्पय—यदपि भोग निस्सार विरतिमें विघ्न करैं नित । सबदोषन
खान जीवकौ साधें अनहित । करैं निलज मतिहीन ज्ञानकूं धोय बहावैं
सर्वसंदेहि नसाय बुरौ जगवीच कहावैं । यदि निन्दा याकीकरै कोउ तद्य
महिमा बहुत ॥ हिय वसत ब्रह्मज्ञानीहुंके तहँ पामरकी गिनतीहि कुत ॥ ५

भवन्तो वेदान्तप्रणिहितधियामाप्तगुरवो विदग्धाला-
पानां वयमपि कवीनामनुचराः ॥ तथाप्येतद्भूमौ नहि
परिहितात्पुण्यमधिकं न चास्मिन् संसारे कुवलयदृशो
रम्यमपरम् ॥ ५२ ॥

सं० टी०-भवन्त इति। भवन्तो यूयं वेदान्ते प्रकर्षेण निहिता बुद्धिर्यैस्तेषामाप्ताश्च ते गुरवश्च। वयम् उदग्राः आलापाः शब्दा येषां तथाभूतानां कवीनामनुचराः सेवकास्तथापि नहि परहितात् पुण्यमधिकं जन्मौ चास्मिन् संसारे कुवलयदृशः अपरं रम्यं नास्तीति जानीमः। शिखरिणीवृत्तमिदम् ॥ ५२ ॥

भा० टी०-तुम वेदान्तवेत्ताओंके मान्य गुरु हो, और हमभी उत्तम काव्य रचयेता कवियोंके दास हैं, तथापि मैं यह जानताहूं कि इस संसारमें परोपकार करनेसे अधिक पुण्य और कुछ नहीं है और कमल नयनी स्त्रियोंसे अधिक सुन्दर दूसरी कोई वस्तु नहीं है ॥ ५२ ॥

छप्पय-पढे वेदवेदान्त भये विद्योदधिपारा। तिनहूके तुम गुरू बुद्धि बल पाय अपारा॥ हम कछु जानत नाहि पढे नहिं विद्याभारी। रहे कविनके दास कहैं ये बात बिचारी। यहि जग बिच परउपकार सम अपर कछूहै पुण्य नहिं। अरु पंकज नयनी त्रियनसों बस्तु अधिक नहिं सुखद कहिं ॥५२॥

किमिह बहुभिरुक्तैर्युक्तिशून्यैः प्रलापैर्द्वयमिह पुरुषाणां सर्वदा सेवनीयम्॥ अभिनवमदलीलालालसं सुन्दरीणां स्तनभरपरिखिन्नं यौवनं वा वनं वा ॥ ५३ ॥

सं० टी०-पुरुषैर्द्वयं सर्वदा सेवनीयमित्याह। किमिति। इह लोके बहुभिरुक्तैर्वचनैः किं प्रयोजनम्। संभूतैः। युक्तिशून्यैः प्रलापैरर्थविरहितैः। तर्हि मयोच्यते तच्छ्रूयताम्। इह पुरुषाणां पुरुषैर्द्वयं सर्वदा सेवनीयम्। अभिनवाः नूतनाः अपूर्वाः मदस्य लीलास्ताभिः लालसं स्तनभरेण परिखिन्नं सुन्दरीणां यौवनं सेवनीयमथवा सेवनीयम्॥ मालिनीवृत्तमिदम् ॥ ५३ ॥

भा. टी.-इस संसारमें युक्तिशून्य वृथा प्रलापोंसे क्या प्रयोजन है, यहां तो पुरुषोंको दोही वस्तु सर्वदा सेवनेयोग्यहै, नवीन मदकी लीला भिलाषी स्तनोंके भारसे युक्त सुन्दरी स्त्रियोंका यौवन अथवा वन ॥ ५३ ॥

दोहा-सुनी औरहू बातपै, मुख्य बात ये दोय।
कै तिय जोवनमें रमै, कै वनवासी होय ॥ ५३ ॥

सत्यं जना वच्मि न पक्षपाताल्लोकेषु सर्वेषु च तथ्यमेतत् ॥ नान्यन्मनोहारि नितम्बिनीभ्यो दुःखैकहेतुर्न च कश्चिदन्यः ॥ ५४ ॥

सं० टी०-भो जनाः। अहं सत्यं वच्मि वदामि न पक्षपातात् सर्वेषु। लोकेषु एतत्तथ्यं। तत् किं नितम्बिनीभ्यः स्त्रीभ्यो मनोहारि मनस्तुष्टिकरमन्यत् द्वितीयं नास्ति। विषयिणां परमार्थिनां तु स्त्रीभ्यो दुःखैकहेतुः स्य कारणं अन्यन्नास्ति ॥ इन्द्रवज्रावृत्तमिदम् ॥ ५४ ॥

भा. टी.-हे मनुष्यो! यह हम सत्य कहतेहैं इसमें कुछभी पक्षपात नहीं करते कि इस संसारमें स्त्रियोंसे बढकर न कोई मनको हरनेवाली वस्तु है और न कोई दुःखदाई वस्तु है ॥ ५४ ॥

दोहा-कहहिं सत्य तजि पक्ष हम, लोक विमोहन नारि।
अरु यासों दुःखद अपर, नहिं कछु लेहु बिचारि ॥ ५४ ॥

तावदेव कृतिनामपि स्फुरत्येष निर्मलविवेकदीपकः ॥
यावदेव न कुरंगचक्षुषां ताड्यते चपललोचनाञ्चलैः॥५५॥

सं० टी०-तावदिति। कृतिनां अन्तःकरणे एष निर्मलः कामादिमलरहितो विवेकदीपकस्तावदेव स्फुरति यावत् कुरंगस्येव चक्षूंषि यासां स्त्रीणां चपलानि लोचनानि नेत्राणि तान्येवांचलास्तैर्न ताड्यते। स्त्रीणां कटाक्षा विवेकिनामपि विवेकं ध्वंसयन्ति इति भावः। रथोद्धतावृत्तमिदम् ॥ ५५ ॥

भा० टी०-विवेकियोंके हृदयमें यह विवेकरूपी निर्मल दीपक तभीतक प्रकाशित रहता है, जब तक कि मृगनयनी स्त्रियोंके चञ्चल नेत्ररूपी अञ्चलसे नहीं बुझायाजाता ॥ ५५ ॥

दोहा-दीपक जरत विवकको, तौलौं या चित मांहि।
जौलों तार कटाक्षपट, पवनसु परसत नांहि ॥ ५५ ॥

वचसि भवति संगत्यागमुद्दिश्य वार्ता श्रुतिमुखरमुखानां केवलं पण्डितानाम् ॥ जघनमरुणरत्नग्रन्थिकाञ्चीकलापं कुवलयनयनानां को विहातुं समर्थः ॥ ५६ ॥

सं० टी०-स्त्रीसंगं त्यक्तुं न कोऽपि समर्थ इत्याह। वचसीति। श्रुतिमुखरमुखानां बहुवक्तॄणां पण्डितानां संगत्यागमुद्दिश्य वचस्येव केवलं वार्ता भवति नतु त्यागं कुर्वन्ति। किमिति कुवलयनयनानां कमलनयनानां स्त्रीणां अरुणानां रत्नानां ग्रन्थयो यस्यां तस्याः काञ्च्याः कलापो यस्मिन् तत् जघनं विहातुं त्यक्तुं कः समर्थः नकोऽपीत्यर्थः। मालिनीवृत्तमिदम् ॥ ५६ ॥

भा० टी०-पण्डितोंकी बात स्त्रियोंके सङ्ग त्यगनेकी केवल कथनमात्र है, नहीं तौ लालरत्न जटित कटिमेखला पहिनेहुई स्त्रियोंके जघन स्थलको त्यागने कौन समर्थ है ॥ ५६ ॥

कुण्डलिया-पंडितजन जब कहतहैं तिय तजिबेकी बात। कर वृथा बकबाद वह तजी नेक नहिं जात। तजी नेक नहिं जात गात छवि कनकवरन वर। कमलपत्रसम नैन वैन बोलत अमृतझर। सोहत मुख मृदु हास अंग आभूषण मंडित। ऐसीतियकोतजैकौनसोहै वह पंडित ५

स्वपरप्रतारकोऽसौ निन्दति यो ऽलीकपण्डितो युवतीः॥
यस्मात्तपसोऽपि फलं स्वर्गस्तस्यापि फलं तथाप्सरसः ५७

सं० टी०-स्वपरेति। अलीकपण्डितो यो युवतीः निन्दति असौ स्वस्यापि परस्यापि प्रतारकः तारणमात्रं अलीकं वृथा करोति। किमिति यस्मात् कारणात्तपसोऽपि फलं स्वर्गस्तस्यापि फलमप्सरसः पथ्यत्वृत्तमिदम् ॥ ५७ ॥

भा० टी०-जो मनुष्य स्त्रियोंकी निन्दा करताहै वह झूंठा पण्डितहै, आप ठगाही गया औरोंकोभी ठगाताहै क्योंकि तपस्याका फल स्वर्ग और स्वर्ग प्राप्तिका फल अप्सराओंका भोगहै ॥ ५७ ॥

दोहा-नारिनकी निन्दा करत, ते पण्डित मतिहीन।
स्वर्ग गये तिनकों सुने, सदा अप्सरा लीन ॥ ५७ ॥

मत्तेभकुम्भदलने भुवि सन्ति शूराः केचित्प्रचण्ड
मृगराज वधेऽपि दक्षाः॥ किं तु ब्रवीमि बलिनां पुरतः
प्रसह्य कन्दर्पदर्पदलने विरला मनुष्याः ॥ ५८ ॥

सं० टी०-कन्दर्पदर्पदलने समर्थाः मनुष्यः विरलाः सन्ति इत्याह। मत्तेति। मत्तोमदोन्मत्तो यो इभः हस्ती तस्य कुम्भो गण्डस्थलं तस्य दलने विदारणे भूवि शूराः सन्ति। केचित् प्रचण्डोऽतिक्रोधनो यो मृगराजः सिंहस्तस्य वधेऽपि हननेऽपि दक्षाः कुशलाः। किन्तु अहं बलिनां शूराणां पुरतोऽग्रे प्रसह्य हठात् ब्रवीमि कन्दर्पः कामस्तस्य यो दर्पो गर्वस्तस्य दलने विदारणे शूराः मनुष्याः विरलाः सन्ति। वसन्ततिलकावृत्तमिदम् ॥ ५८ ॥

भा. टी.-मत्तहाथीके मस्तकको विदारनेवाले शूर इस पृथ्वी पर अनेक हैं और प्रचण्डसिंहके मारनेवाले दक्ष योद्धाभी कितनेहीहैं, परन्तु मैं बलवानोंके आगे हठपूर्वक कहताहूं कि कामदेवके मदका नाशकरनेवालातो कोईविरलाहीमनुष्यहोताहै।

छप्पय-हाथी मारन हार होत ऐसेहू सूरे। मृगपति बध करस बकें नहि नेकहु पूरे। बडे २ बलवन्त वीर सब तिनके आगे। महाबली काम जाहि देखत सब भागे। अभिमान भरे या मदनको मान भार मैं अवधि। नर धरमधुरंधर वीरवै बिरले या संसारमधि ॥ ५८ ॥

सन्मार्गे तावदास्ते प्रभवति पुरुषस्तावदेवेन्द्रियाणां
लज्जां तावद्विधत्ते विनयमपि समालम्बते तावदेव॥
भ्रूचापाकृष्टमुक्ताः श्रवणपथगता नीलपक्ष्माण एते
यावल्लीलावतीनां न हृदि धृतिमुषो दृष्टिबाणाः पतन्ति५९

सं० टी०—युवतिदृष्टिबाणाः यावत् पुरुषं न विध्यन्ति तावदेवं स सन्मार्गे तिष्ठतीत्याह । सन्मार्गेति । पुरुषस्तावद् सन्मार्गे आस्ते । इन्द्रियाणां जेता तावदेव प्रभवति इन्द्रियविजये तावदेव समर्थो भवति । तावल्लज्जां विधत्ते । विनयमपि तावदेव समालम्बते । यावल्लीलावतीनां एते दृष्टिबाणाः हृदि हृदये न पतन्ति । कथंभूता बाणाः । भ्रूरेव चापोधनुः तेनाकृष्टाश्च ते मुक्ताश्च । तु पुनः श्रवणपथ गताः कर्णपर्यन्तं गताः । पुनः कथंभूताः । नीलानि नेत्रपक्ष्माणि त एव पुंखाः पक्षा येषां ते । पुनः कथंभूताः । धृतिं धैर्य्यं मुष्णन्ति चोरयन्ति ते धृतिमुषः । स्रग्धरावृत्तमिदम् ॥ ५९ ॥

भा. टी.—मनुष्य सन्मार्गपर तभीतक रहताहै, इन्द्रियोंकोभी उसी समयतक वशमें रखसकताहै, और लज्जा और विनयभी तभीतक रहतेहैं, जबतक कि नील-पलकरूपी पंख धारण किये भृकुटिरूपी धनुषसे कानतक खेंचकर चलाये हुए, धैर्यको चुरानेवाले युवतियोंके नेत्रवाण हृदयमें प्रवेश करते नहींहै ॥ ५९ ॥

दोहा—इन्द्रीमद लज्जा विनय, तौलों सब शुभ कर्म्म ।

जौलों नारीनयनशर, छेदत नाहीं मर्म्म ॥ ५९ ॥

उन्मत्तप्रेमसंरम्भादारभन्ते यदंगनाः ॥

तत्र प्रत्यूहमाधातुं ब्रह्मापि खलु कातरः ॥ ६० ॥

सं० टी०—उन्मत्तेति । उन्मत्तमविचारितं यत् प्रेम तस्य संरंभादादरात् यत् कार्यं अङ्गनाः स्त्रियः आरभन्ते तत्र प्रत्यूहं विघ्नं कर्तुं ब्रह्मापि खलु निश्चयेन कातरोऽसमर्थः । अनुष्टुब्वृत्तमिदम् ॥ ६० ॥

भा. टी.—प्रेमके उमंगसे उन्मत्त होकर स्त्रीजन जिसकार्यका आरम्भ करदेती है उसकार्यको रोकनेका ब्रह्मामेंभी सामर्थ्य नहींहै ॥ ६० ॥

दोहा—महामत्त या प्रेमकौ, जब तिय करत उदोत ।

तब वाके छल बल निरखि, विधिहू कायर होत ॥ ६० ॥

तावन्महत्त्वं पाण्डित्यं कुलीनत्वं विवेकिता ॥

यावज्ज्वलति नाङ्गेषु हंत पञ्चेषुपावकः ॥ ६१ ॥

सं० टी०—तावदिति । यावत् मनुष्यस्याङ्गेषु पंच इषवः यस्य स पंचेषुः मदनः सएव पावकोऽग्निर्न ज्वलति तावदेव महत्वं पूज्यत्वं, पाण्डित्यं बुद्धिमत्ता, कुलीनत्वं, सदाचाराः, विवेकता च तिष्ठति । अनुष्टुब्वृत्तमिदम् ॥ ६१ ॥

भा० टी०—बडाई, बुद्धिमानी, विवेक और कुलीनत्व ये मनुष्यमे तभी तक स्थिर रहतेहैं, जबतककि उसके शरीरमें कामाग्नि नहीं प्रदीप्त होता ॥ ६१ ॥

दोहा—बुद्धि विवेक कुलीनता, तौलोहीं मन मांहि ।

कामबाणकी अग्नि तन, जौलों धधकत नाहिं ॥ ६१ ॥

शास्त्रज्ञोऽपि प्रथितविनयोऽप्यात्मबोधोऽपि बाढं संसारे-ऽस्मिन् भवति विरलो भाजनं सद्गतीनाम् ॥ येनैतस्मि-

निरयनगरद्वारमुद्घाटयन्ती वामाक्षीणां भवति कुटिल-
भ्रूलताकुञ्चिकेव ॥ ६२ ॥

सं० टी०—शास्त्रेति। शास्त्रज्ञः प्रथितविनयश्च बाढमत्यन्तमात्मबोधः ज्ञानी सद्गतीनामु[illegible] भाजनं पात्रं। एतादृशः पुरुषोऽस्मिन् संसारे विरलः कदाचित् कश्चिद्भवति। तर्हि सर्वेऽपि [illegible] न भवन्ति। तत्र कारणमस्ति। येन कारणेन एतस्मिन् संसारे वामाक्षीणां सुनयनानां स्त्रीणां कुटिल भ्रूलता आकुंचिका इव भवति। कथंभूता भ्रूलता। निरयः नरकस्तस्य नगरस्य द्वारमुद्घाटय-यन्ती। मन्दाक्रान्तावृत्तमिदम् ॥ ६२ ॥

भा. टी.–शास्त्रके जाननेवाले, प्रसिद्ध विनयवान् और आत्मज्ञानी हो होतेहैं, परन्तु उनमेंसे कोई विरलाही इस संसारमें उत्तमगतिका भागी है कारण यहहै कि यहां सुन्दरनेत्रवाली स्त्रियोंकी टेढी भ्रूलता नरक नगरके घूमती हुई कुंचीके समान खोलतीहै ॥ ६२ ॥

छप्पय–सब ग्रन्थनके ज्ञानवान अरु नीतिवाननर। तिनमें को मुक्तमारगें तत्पर। सबको देत बहाय बंक नयनी यह नारी। जाकी भौंह नचत अतिही अनियारी। यह कूंची करमकपाटकी खोलनको फिरत। जिनके न लगत मन दृगनमें ते भवसागरको तरत ॥ ६२ ॥

कृशः काणः खंजः श्रवणरहितः पुच्छविकलो व्रणी
पूयक्लिन्नः क्रमिकुलशतैरावृततनुः ॥ क्षुधाक्षामो जीर्णः
पिठरककपालार्पितगलः शुनीमन्वेति श्वा हतमपि निह-
न्त्येव मदनः ॥ ६३ ॥

सं० टी०—कृश इति। कृशः क्षीणः, काणः एकनेत्ररहितः, खञ्जः पादेन हीनः, श्रवण[illegible] हीनः, पुच्छेन विकलो रहितः, व्रणी सर्वांगे व्रणो यस्य, पूयेन क्लिन्नः लिप्तः, कृमीणां कुलं [illegible] शतैरावृत तनुः यस्य सः; क्षुधया क्षामः क्षीणः, जीर्णः वृद्धः पिठरकस्य मृण्मयघटस्य कपालं [illegible] ऽर्पितो गले येन एतादृशः श्वा शुनीमनुपृष्ठत एति। अतो मदनः हतमपि चादौ शरीरावस्थया निहन्ति मारयन्ति। विवेको नास्तीत्यर्थः। शिखरिणीवृत्तमिदम् ॥ ६३ ॥

भा. टी.–जो दुबला, काना, लंगडा, कनकटा, और दुमकटाहै, जिसके में घाव होरहेहैं, जिनमेंसे राध बह रहीहै, और सहस्रों कीड़े किलबिला रहेहैं, भूखसे पीडितहैं, और हांडीका मुख जिसके गलेमें अटक रहाहै, ऐसा कुत्ताभी पीछे दौडताहै। बडे खेदकी बातहै कि यह कामदेव मरेहुओं कोभी मारताहै।

छप्पय–दुबरौ कानौ हीन श्रवणविन पूंछ नवाये। बूढौ बिकल वारविन छार लगाये॥ झरत शीसतें राध रुधिर कृमि डारत डोलत

हीण अतिदीन गले घट कण्ठकलोलत । यहदशाश्वानपाई तऊ कुतियन
े उरझतगिरत । देखौ अनीति यामदनकी मृतकनको मारत फिरत ॥६३॥

स्त्रीमुद्रां झषकेतनस्यजननीं सर्वार्थसम्पत्करीं ये मूढाः
प्रविहाय यांति कुधियो मिथ्याफलान्वेषिणः॥ते तेनैवनि
हत्य निर्दयतरं नग्नीकृता मुण्डिताः केचित्पञ्चशिखी
कृताश्च जटिलाः कापालिकाश्चापरे ॥ ६४ ॥

सं॰ टी॰–स्त्रीति । राज्ञो मुद्रया सर्वं कार्यं भवति । अतो झषकेतनस्य मदनस्य स्त्री मुद्रा भवति ।
तया सर्वं भवति । अतस्तां स्त्रीमुद्रां विहाय त्यक्त्वा ये मूढाः कुधियः कुत्सितबुद्धयः यानि मिथ्याफलानि
र्गादिकानि अप्रत्यक्षाणि तानि अन्वेषयन्ति तच्छीला भवन्ति च ते मूढाः । कथंभूतां स्त्रीमुद्रां । मदनस्य
ननीमुत्पादयित्री सर्वार्थानां सम्पादनं करोतीति तथाभूतां । यस्याधीना मुद्रा तस्य सर्वाः सम्पदो भवन्ति ।
मुद्राया उल्लंघनं करोति तस्य राजा दण्डकरो भवति मारयति च । अतो मदनेन ते मूढास्तेनैव कर्मणा
र्यतरं यथास्यात्तथा निहत्य नग्नीकृताः मुण्डिताश्च । केचित् पंचशिखीकृताः । केचित् जटा येषामस्तीति
टिलाः । केचिदपरे कापालिका पात्रं करे धृत्वा भिक्षाटनं कारिताः । राजाप्यनयकारिणमेव दण्डयतीत्यर्थः ।
र्दूलविक्रीडितवृत्तमिदम् ॥ ६४ ॥

भा॰ टी॰–यह स्त्रियां सम्पूर्ण अर्थोंको देनेवाली कामदेवकी मुद्रा हैं, जो
कुबुद्धि मनुष्य इनको त्यागकर स्वर्गादिककी इच्छासे विरक्त होजातेहैं उनको
एक मत समझो किन्तु उनको कामदेवने बडी निर्दयताके साथ दण्ड दियाहै ।
से राजा अनीति वालोंको करता है, अर्थात् किसीको नंगा किया, किसीका सिर
ड़वाया, किसीके पांच चोटी रखवाईं, किसीको जटाधारी किया, और किसीके
थमें ठीकड़ा देकर भीख मँगवाई ॥ ६४ ॥

कुण्डलिया–कामिनि मुद्रा कामकी सकलअर्थको देत । मूरख याकों
तजतहैं झूंठे फलके हेत । झूंठे फलके हेत तजत तिनहींको डांडे । गहि
है मूंडे मूंड बसनविन कर २ छांडे । भगवा करि २ वेष जटिल व्है जागत
कामिनि । भीख मांगके खात कहत हम छोडी कामिनि ॥ ६४ ॥

विश्वामित्रपराशरप्रभृतयो वाताम्बुपर्णाशनास्तेऽपि स्त्री-
मुखपंकजं सुललितं दृष्ट्वैव मोहं गताः ॥ शाल्यन्नं स
घृतं पयोदधियुतं भुञ्जन्ति ये मानवास्तेषामिंद्रियनि-
ग्रहो यदि भवेद्विंध्यस्तरेत्सागरं ॥ ६५ ॥

सं॰ टी॰–इन्द्रियनिग्रहोऽतिकठिन इति विश्वामित्रादिदृष्टान्तेन वर्णयति । वातं वायुं च
उदकं च शुष्कपर्णानि च अश्नन्ति भक्षयन्ति ते वाताम्बुपर्णाशनाः । एवंभूता विश्वामित्रपराशरप्रभृतयः
सुललितं अतिसुन्दरं स्त्रीमुखपङ्कजं दृष्ट्वैव दर्शनमात्रेणैव मोहं गताः प्राप्ताः । किमुत वतं

शाल्यन्नं तण्डुलौदनं तदपि सघृतं पुनः पयोदधियुतं ये मानवा मनुष्या भुञ्जते तेषामि न्द्रियनिग्रहः कथं भवेत्। अत्र दृष्टान्तः। यदि विंध्याद्रिः सागरं तरेत् तदाऽपूर्वोऽयमिन्द्रियनिग्रहः। शार्दूलविक्रीडितं वृत्तमिदम्॥ ६५॥

भा० टी०—जब विश्वामित्र पाराशर इत्यादि बडे २ ऋषिभी जो जल और पत्ते खाकर रहतेथे, स्त्रीके मुखकमलको देखतेही मोहित होगये, तो मनुष्य घी दूध दहीसहित उत्तम अन्न खातेहैं उनकी इन्द्रियां कैसे वश। यदि उनकी इन्द्रियें वशमें होजांय तो विन्ध्याचल पर्वत समुद्रपर तरनेलगे, वशमें करना बडा कठिन कार्यहै यह भावार्थहै॥ ६५॥

छप्पय—कौशिकादि मुनि भये वातपयपर्णाहारी। तेहू तिय देख सब बुद्धि बिसारी। दधि घृत ओदन दूध मधुर पकवान म प्रति सेवनकरें रहेबहुमोद बढाई। बहुबिधि ज्ञानीनर जगभए करि सके बस। यदि होवहितौ गिरिविंध्यजनु उदधि मध्य उतरा

## इति दुर्विरक्तप्रशंसा समाप्ता।

---

संसारेऽस्मिन्नसारे कुनृपतिभुवनद्वारसेवावलम्बव्यासं व्यस्तधैर्यं कथममलधियो मानसं संविदध्युः॥ यद्येता प्रोद्यदिंदुद्युतिनिचयभृतो न स्युरम्भोजनेत्राः प्रेंखत्का चीकलापाः स्तनभरविनमन्मध्यभागास्तरुण्यः॥६६

सं० टी०—संसार इति प्रकर्षेणोद्यदिन्दोर्द्युतीनां तेजसां निचयं समुदायं बिभ्रति ताः। प्रेंख कांचीकलापो यासां ताः। स्तनानां भरेण विनमन् विनम्रः मध्यभागो यासां ताः। एवंभूता ए कमलनयनाः तरुण्य स्त्रियोः यदि न स्युः न आसन्। तर्हि अमला धीर्येषां तथाभूता मानवा संसारे कुनृपतयः कुत्सिताः नृपतयस्तेषां भवनद्वाराणां सेवावलम्बने व्यासंगस्तेन व्यस्तं नष्टप्रायं एवंभूतं मानसं मनः कथं विदध्युः कुर्युः। एतस्य भावः यदि स्त्रियो न आसन् तदा बुद्धिमन्तः स्त्रीनिमित्तं राजसेवां कुर्मे इति व्यासङ्गेन मनश्चंचलमधैर्यं भवतीति। स्त्रग्धरावृत्तमिदम्॥ ६६॥

भा० टी०—उदित चन्द्रमाकीसी कान्ति धारणकरनेवाली, शब्दाय मेखला धारिणी, और स्तनोंके भारसे जिनकी कमर झुकगईहै ऐसी युवती स्त्री यदि न होतीं तौ इस असार संसारमें निर्मल बुद्धिवाले मनुष्य के द्वारोंकी सेवामें नानाप्रकारके कलंकोंसे चित्तको अधीर क्यों करते। यह स्त्रियां न होती तौ पण्डितजन राजद्वारकी सेवा कभी न करते यह भावा

छप्पय—तौ असार संसार जान सन्तोष न तजते। भीर भूपको भूल न भजते। बुद्धि बिवेक निधान मान अपने नहिं

रानौ राख दुःखसम्पद नहिं लेते। जो यह नहिं होती शशिमुखी मृग-
नीके हरिकटी। छबि जटी छटा निकसी छटी रस लपटी छूटीलटी ६६॥

सिद्धाध्यासितकन्दरे हरवृषस्कन्धावगाढद्रुमे गङ्गाधौत
शिलातले हिमवतः स्थानेस्थिते श्रेयसि॥ कः कुर्वीत
शिरः प्रणाममलिनं म्लानं मनस्वीजनो यद्वित्रस्तकुरंग
शावनयना न स्युः स्मरास्त्रं स्त्रियः॥ ६७॥

सं० टी०–सिद्धेति। यदि स्मरास्त्रं स्त्रियो नस्युः नासन् तदा हिमवतो हिमालयस्य स्थाने स्थित्वा
मेन कः मनस्वीजनः शिरः प्रणाममलिनं कुर्वीत। कथंभूताः स्त्रियः। वित्रस्ता भयचकिता ये कुरङ्गशावा-
षां नयनानीव नयनानि यासां ताः। कथंभूते हिमवतःस्थाने। सिद्धैरध्यासिता अधिष्ठिताः कन्दरा यस्य
स्मिन्। हरवृषो नन्दी तेन स्कन्धेन अवगाढा अवरुद्धा द्रुमा यस्मिन्। पुनः गंगाधौतानि शिलात-
नि यस्मिन्। श्रेयसि पुण्यरूपे। अयं भावः। प्रशस्तं शुद्धं मनो यस्य स मनस्वीजनः यस्य मनः शुद्धं तस्य
साधने अनपेक्षा। यदा मलिनं मनस्तदा मनसः शुद्ध्यर्थं साधनान्तराणि कर्तव्यानि। सम्प्रति मनो म-
नं स्त्रीभिरेव क्रियते। अतःस्त्रीणां प्रभावा एव यदि उत्पन्ना नस्युस्तदा मनोऽपि मलिनं नैव भवेत्।
दा मनस्वीजनो हिमवतः स्थाने गत्वा शिरःप्रणामेन मलिनं अतएव म्लानं किमर्थं करिष्यति। मलिन
याः कारणं स्त्री एव। स्त्री मदनस्य अस्त्र यस्याङ्गं संगच्छति स मूर्च्छितो भवति। शार्दूलवि-
क्रीडितं वृत्तमिदम्॥ ६७॥

भा० टी०–यदि भयशून्य, मृगनयनी, कामके अस्त्ररूप, यह स्त्रियां न होतीं तौ
कौन मनस्वी पुरुष सिद्धगण जिसकी कन्दरामें बैठेहैं, महादेवजीका वृषभ जहां वृक्षोंसे
कंधा रगडताहै, और जहांके पाषाण गङ्गाजलसे धोयेजातेहैं, ऐसे पुण्यधाम हिमालयपर्व-
तको त्यागकर औरोंके सन्मुख मस्तक झुका अपने मनको मलिन करता॥ ६७॥

कुण्डलिया–अभय हरिणशावकनयन कामबाणसमनार। जो घरमें
होती नहीं तौ सहजहिं होतौ पार। सहजहिं होतौ पार बैठ गिरिगुहा
सिद्धवन। जहां तरुनसों अंग खुजात फिरै हरवाहन। स्वच्छ फटिक हिम शैल
तले जहँ वहै गंगपय। निशिदिन धरि हरि ध्यान चित्तकूं राखहिनिर्भय ६७

संसार तव निस्तारपदवी न दवीयसी॥
अन्तरा दुस्तरा न स्युर्यदि रे मदिरेक्षणाः॥ ६८॥

सं० टी०—संसारेति। रे इति नीचसम्बोधने। रे संसार। यदि अन्तरा त्वन्मध्ये मदिरेक्षणा
स्त्रियो दुस्तरा नस्युस्तदा तव निस्तारपदवी स्थितिः न दवीयसी अतिदीर्घा नैवं। अनुष्टुब्वृत्तमिदम्॥ ६८॥

भा. टी.-रे संसार यदि सुन्दरनेत्रवाली दुस्तरा स्त्रियां तेरे बीचमें न होतीं तो तुझसे पार होना कठिन नहिथा ॥ ६८ ॥

सोरठा-जो नहि होती नार, तौ तरिबौ जगमें सुगम ।
यह लांबी तरवार, मार लेत अध बीचही ॥ ६८ ॥

## इति स्त्रीपरित्यागप्रकरणम् ।

राजन्तृष्णांबुराशेर्नहि जगति गतः कश्चिदे-
वावसानं को वार्थोऽर्थैः प्रभूतैः स्ववपुषि गलिते
यौवने सानुरागः ॥ गच्छामः सद्म तावद्विकसि
तनयनेंदीवरालोकननां यावच्चाक्रम्य रूपं
झटिति न जरया लुप्यते प्रेयसीनां ॥ ६९ ॥

सं० टी०-राजन्निति । भो राजन् ! इह जगति संसारे कश्चिदपि तृष्णाम्बुराशेस्तृष्णा । समुद्रस्य अवसनं पारं नहि गतः । स्ववपुषि स्वशरीरे सानुरागे अतिप्रिये यौवने गलिते सति प्रभूतैः पुष्कलैः अर्थैः कोवार्थः प्रयोजनम् । तावत् विकसितानि नयनान्येव इन्दीवराणि कमलानि तैरालोकितुं द्रष्टुं शीलं यासां तासां प्रेयसीनां प्रियाणां सद्मगृहं प्रति गच्छामः । यावत् जरया वृद्धावस्थया तासां रूपं सौंदर्यं झटिति शीघ्रं न लुप्यते स्रग्धरावृत्तमिदम् ॥ ६९ ॥

भा. टी.-हे राजन् ! इस तृष्णारूपी समुद्रके पार कोई नहींगया, और जब अनुरागभरी युवा अवस्था देहमेंही नष्टहोगई तब अधिक द्रव्योपार्जन करनेसे हमको क्या प्रयोजन है, हम उससे पहिलेही प्रफुल्लितकमलसमान नेत्रोंवाली स्त्रियोंके घर जांय जब तक कि वृद्धा वस्था उसके रूपको जल्दीसे न बिगाडे ॥ ६९ ॥

कुण्डलिया--नरवर ! तृष्णासिन्धुके पार न कोई जाय । कहा संचय किये कालसर्प वय खाय । कालसर्प वयखाय नेह अरु प्रेम नशावै । कहाहोय घरगये तबै कछु हाथ न आवै ॥ तासौं तबलों बेग भाग चलि द्वारैघर । कमलनयन तियरूप जरा जबलों नहि नरवर ॥ ६९ ॥

रोगस्यागारमेकं नरकशतमहादुःखसंप्राप्तिहेतुर्मोहस्यो-
त्पत्तिबीजं जलधरपटलं ज्ञानताराधिपस्य कन्दर्पस्यैक
मित्रं प्रकटितविविधस्पष्टदोषप्रबन्धं लोकेऽस्मिन्नह्यनर्थं
निजकुलदहनं यौवनादन्यदस्ति ॥ ७० ॥

सं० टी०-यौवनं हि सर्वानर्थानां मूलमित्याह । अस्मिन् लोके यौवनात्तारुण्यात् किंचि मनर्थकरं नास्ति । कथंभूतं यौवनं । रागस्य इच्छाया एकमागारं गृहं । नरकाणां शतानि तेषु दुःखानि तेषां सम्प्राप्तिस्तस्या हेतुः कारणं । मोहस्योत्पत्तिस्तस्या बीजम् । ज्ञानलक्षणस्य ताराधि

चन्द्रस्य जलधरपटलं मेघपटलमाच्छादकम् । कन्दर्पो मदनस्तस्य एकं मित्रं । प्रकटिताः विविधा नानाप्रकाराः स्पष्टा दोषास्तेषां प्रबन्धो रचना येन । निजं स्वकीयं कुलं तस्य दहनं दाहकम् । एवं यौवनं निन्द्यमिति भावः ॥ स्रग्धरावृत्तमिदम् ॥ ७० ॥

भा. टी.–अनुरागका एक मात्र गृह, सैकडों नरकोंके दुःख प्राप्तहोनेका हेतु, मोहकी उत्पत्तिका बीज ज्ञानरूपी चन्द्रमाके ढकनेको मेघरूप, कामदेवका एक मात्र प्रियमित्र, नानाप्रकारके दोषोंको प्रकटकरनेवाला, और अपने कुलको दग्धकरनेवाला जो यौवन है इससे बढकर संसारमें कोई दूसरा अनर्थ नहीं है ॥ ७० ॥

छप्पय–इन्द्रिनको हित धाम कामकौ मित्र महावर । नरक दुःखको हेतु मोहको बीज मनोहर । ज्ञानसुधाकर सीस सजल सावनको वादर । नानाविधि बकवाद करनकें बडौ बहादुर । सबही अघकौ है मूल यह यौवन अकृतहिकौ कवच । याविना औरको करसकै सुन्दर मुखपर श्यामकच ॥ ७० ॥

शृंगारद्रुमनीरदे प्रचुरतः क्रीडारसस्रोतसि प्रद्युम्नप्रिय बान्धवे चतुरतामुक्ताफलोदन्वति ॥ तन्वीनेत्रचकोर पारणविधौ सौभाग्यलक्ष्मीनिधौ धन्यः कोऽपि न विक्रियां कलयति प्राप्ते नवे यौवने ॥ ७१ ॥

सं० टी०–यौवनं प्राप्य यो विकारं न व्रजति स एव धन्य इत्याह । शृङ्गारेति । नवे नूतने यौवने तारुण्ये प्राप्ते सति यो विक्रियां विकारं न कलयति न करोति स धन्यः कथंभूते यौवने । शृंगारा एव द्रुमा वृक्षास्तेषां नीरं ददातीति नीरदो मेघस्तस्मिन् । यथा जलप्राप्तौ वृक्षाः शोभन्ते तथा यौवनेन शृंगाराः शोभन्ते । प्रचुरतो बाहुल्येन क्रीडानां रसस्तेषां स्रोतसि । प्रद्युम्नो मदनस्तस्य प्रियबान्धवे बन्धौ । चतुरतालक्षणानि मुक्ताफलानि तेषामुदन्वति समुद्रे । तन्वी सुन्दरी स्त्री तस्यां नेत्रे तौ एव चकोरौ तयोः पारणं तस्य विधौ चन्द्रे । सौभाग्यलक्ष्मीनिधौ स्थामानापत्रे । शार्दूलविक्रीडितं वृत्तमिदम् ॥ ७१ ॥

भा. टी.–शृङ्गाररूपी वृक्षोंका सीचनेवाला मेघ, बिस्तरित क्रीडारसका प्रवाह, कामदेवका प्रियबन्धु, चतुरतारूपी मोतियोंका समुद्र, स्त्रियोंके नेत्ररूपी चकोरको पूर्णचन्द्र, और सौभाग्यलक्ष्मीका भण्डार, जो यह नवयौवन है इसको पाकर जो पुरुष विकारको नहीं प्राप्तहोताहै वही धन्य है ॥ ७१ ॥

छप्पय–यह जोवन घनरूप सदा सींचत शृँगारतर । क्रीडा रसको सोत चतुरतारत्न देतकर । नारीनयन चकोर चोपको चन्द्र विराजत । कुसुमायुधको बन्धुसिन्धु शोभाको भ्राजत । ऐसौयह यौवन पायके जे नहि धरत विकार मन । ते धरम धुरंधर धीरमणि शूर शिरोमणि सन्तजन ॥ ७१ ॥

## इति यौवनप्रशंसा प्रकरणम् ।

## ॥ अथ कामिनीगर्हणप्रशंसा ॥

कान्तेत्युत्पललोचनेति विपुलश्रोणीभरेत्युत्सुकः पीनो
तुंगपयोधरेति सुमुखाम्भोजेति सुभ्रूरिति॥ दृष्ट्वा माद्य
तिमोदतेऽभिरमते प्रस्तौति जानन्नपि प्रत्यक्षाशुचिपुत्ति
कास्त्रियमहो मोहस्य दुश्चेष्टितं ॥ ७२ ॥

सं० टी०-विद्वानपि स्त्रियं दृष्ट्वा मोहं प्राप्नोतीत्याह। पुरुषः स्त्रियं प्रत्यक्षमशुचीनां पुत्तिकां जा उत्सुको मयादो विमर्यादो भवति, मोदते च हर्षं प्राप्नोति, अत्यतिशयेन रमते रमणं करोति चेति इतीति कथं। तस्या अभिधानं गृह्णाति सा कान्ता सुन्दरी उत्पललोचना कमललोचना। विपुलो श्रोणीभरः कटिप्रदेशो यस्याः सा तथाभूता। पीनौ मांसलौ उत्तुङ्गौ ऊर्ध्वौ पयोधरौ स्तनौ यस्याः सा मुखाम्भोजं यस्याः सा। शोभनौ भ्रुवौ यस्याः सा। एवमभिधानानि गृहीत्वा स्तौति माद्यति च। आश्चर्यमिदं। मोहस्य दुश्चेष्टितं दुर्व्यापारोऽस्ति। शार्दूलविक्रीडितं वृत्तमिदम्॥ ७२ ॥

भा. टी.-विद्वान्मनुष्यभी प्रत्यक्षही अपवित्रताकी पुतलीरूपी स्त्रीको देख ण्ठित होकर "यह स्त्री कैसी सुन्दरहै, यह कमलनयनी है, इसके नितम्ब बहुत इसके स्तन बडे स्थूल और दृढ है, इसका मुखकमल बहुत सुन्दर इसकी भौंहें अच्छ ऐसा कहकर मोहित होजाताहै, हर्षको प्राप्त होताहै, रमण करताहै, और उनको करताहै, देखो! यह मोहकी कैसी बुरी चेष्टाहै ॥ ७२ ॥

कुण्डलिया-कान्ता उत्पल लोचना प्रिया कृशोदरि बाल। घट पंकजमुखी कामिनि अधर प्रवाल। कामिनि अधर प्रवाल सुभ्रु कहि बोलें। आनंद अधिक उछाह मत्तबन पण्डित डोलें। अशुचि पूतरी ताहि मन जानै शान्ता। महानरककी खान मोहवस मानै कान्ता॥ ७

स्मृता भवति तापाय दृष्टा चोन्मादवर्द्धिनी ॥
स्पृष्टा भवति मोहाय सा नाम दयिता कथम् ॥ ७३ ॥

सं० टी०—स्मृतेति या स्त्री स्मृता सती तापाय भवति स्मरणमात्रेण तापं करोति। तथा उन्मादवर्द्धनं करोति तच्छीला एवंविधा भवति दर्शनमात्रेण उन्मादं वर्धयति। तथा स्पृष्टा सती भवति स्पर्शमात्रेण मोहमुत्पादयति। सा दयिता प्रिया कथं नामेति सम्भावना अनुष्टुब्वृत्तमिदम्।

भा० टी०—जो स्मरण मात्रसे सन्ताप करतीहै, देखतेही उन्मादको बढा और स्पर्श करतेही मोह उत्पन्न करतीहै, ऐसी स्त्रीको प्रिया कैसे कह सकेहैं ॥ ७३

दोहा-सुधि आये सुधिबुधि हरत, दरसत करत अचेत।
परसत मन मोहित करत, यह प्यारी किंहि हेत ॥ ७३ ॥

तावदेवामृतमयी यावल्लोचनगोचरा ॥
चक्षुःपथादपगता विषादप्यतिरिच्यते ॥ ७४ ॥

सं० टी०—तावादिति । यावत् स्त्री लोचनगोचरा नेत्रप्रत्यक्षभूता तावदेव अमृतमयी अमृतप्रचुरा भवति । चक्षुःपथात् नेत्रमार्गात् अपगता दूरीभूता सती विषादतिरिच्यते अधिका भवति । अनुष्टुब्वृत्तमिदम् ॥ ७० ॥

भा० टी०—जब तक स्त्री नेत्रोंके संमुख रहतीहै तभी तक वह अमृतमयी है, नेत्रोंके सामनेसे हटतेही वह विषसेभी अधिक होजातीहै ॥ ७४ ॥

दोहा—जोलों सन्मुख नयनके, अबला अमृतरूप।
दूर भये ते सहजही, होत वही विष कूप ॥ ७४ ॥

नामृतं न विषं किंचि देकां मुक्ता नितम्बिनीम् ॥
सैवामृतलता रक्ता विरक्ता विषवल्लरी ॥ ७५ ॥

सं० टी०—नेति । एकां नितम्बिनीं कामिनीं मुक्त्वा त्यक्त्वा किंचिदपि अमृत नास्ति । उतापि विषं नास्ति । किन्तु सैव स्त्री रक्ता अनुरागवती सती अमृतलता अमृतवल्ली भवति तथाच विरक्ता अनुकूला सती विषवल्लरी विषलता भवति । पूर्वोक्तं वृत्तमिदम् ॥ ७५ ॥

भा० टी०—स्त्रीके अतिरिक्त इस संसारमें न कोई अमृत है और न कोई विष है, कारणकि यदि स्त्री प्रीति करे तौ वही अमृतलता है, और यदि प्रीतिको तोड दे तौ वही अमृतलता विषकी वेल होजातीहै ॥ ७५ ॥

दोहा—नहि विष नहिं अमृत कहूँ, एक तिया तू जान।
मिलवेमें अमृत नदी, बिछुरे विषकी खान ॥ ७५ ॥

आवर्तः संशयानामविनयभवनं पत्तनं साहसानां दोषाणां सन्निधानं कपटशतमयं क्षेत्रमप्रत्ययानाम् ॥ स्वर्गद्वारस्य विघ्नो नरकपुरमुखं सर्वमायाकरण्डं स्त्रीयन्त्रं केन सृष्टं विषममृतमयं प्राणिनां मोहपाशः ॥ ७६ ॥

सं० टी०—आवर्त इति । लोके यंत्राणि सन्ति तैर्मारणोच्चाटनवशीकरणादि क्रियाः क्रियन्ते । अतः स्त्रीयंत्रं केन सृष्टं निर्मितं । कथं भूतं स्त्रीयंत्रं । संशयानामावर्तः भ्रमरः जलभ्रमणवदविरत संशयजनकमित्यर्थः । पुनः अविनयभवनं । साहसानां पत्तनं नगरम् । दोषाणां सन्निधानं सर्वे दोषास्तत्सन्निधाने भवन्ति । कपटशतमयं कपटशतप्रचुरमित्यर्थः । अप्रत्ययानामविश्वासानां क्षेत्रमुत्पत्तिस्थानम् । स्वर्गद्वारस्य विघ्नोऽन्तरायभूतं । नरकपुरस्य मुखं द्वारम् । सर्वासां मायानामलीकानां करण्डं स्थापनपात्रम् । विषम् । प्रचुरममृतं यस्मिन् तदमृतमयं । पुनः कथंभूतं प्राणिनां मोहपाशः । पाशवन्मोहेन बन्धकमित्यर्थः । स्रग्धरावृत्तमिदम् ॥ ७६ ॥

भा० टी०—संदेहोंका भँवर, अविनयका घर, साहसका नगर, दोषोंका पात्र, सैकडों प्रकारके कपटोंसे भराहुआ, अविश्वासकी भूमि, स्वर्गद्वारका विघ्नकारक, नरक

नगरका द्वार, सम्पूर्णमायाओंका पिटारा, विषरूप, अमृतमय, और मनुष्योंको मोह फंदमें फसानेवाला यह स्त्रीरूप यंत्र किसने निर्माण कियाहै ॥ ७६ ॥

छप्पय–परम भरमकौ भौंर, भवन है गूढ गरवको । अनुचित कृतक सिंधु कोष है दोष अवरको । प्रगट कपटको कोट खेत अप्रीति करनको । सुरपुरको बटमार नरकपुर द्वार करनको । यह युवतियंत्र कौनं रच्यो महा अमृत विषसों भर्यो । थिरचर नर किन्नर सुर असुर सबके गल बन्धन कर्यो ॥ ७६ ॥

सत्यत्वे न शशांक एष वदनीभूतो नवेन्दीवरद्वन्द्वं लोचनतां गतं न कनकैरप्यंगयष्टिः कृता ॥ किन्त्वेवं कविभिः प्रतारितमनस्तत्त्वं विजानन्नपि त्वङ्मांसास्थि मयं वपुंमृगदृशां मंदो जनः सेवते ॥ ७७ ॥

सं० टी०–सत्येति । एषः शशांकश्चन्द्रः सत्यत्वे याथार्थ्येन विचारिते वदनीभूतो नैव । नव इ वरद्वन्द्वं नीलोत्पलयुग्मं सत्यत्वेन लोचनतां गतं । कनकैः सुवर्णैरपि सत्यत्वे नाङ्गयष्टिर्न कृता । किन्तु मुक्तप्रकारेण कविभिः उपमा दत्ताऽतः प्रतारितं मनो यस्य तथाभूतो मन्दो जनस्तत्वं जानन्नपि मृग त्वङ्मांसास्थिप्रचुरं वपुः शरीरं सेवते । शार्दूल विक्रीडितं वृत्तमिदम् ॥ ७७ ॥

भा० टी०–सच पूँछो तौ न चन्द्रमा स्त्रीका मुखहै, न कमलही दोनों नेत्रहैं, न सुवर्णसेही उसका देह बनाहै, परन्तु कवियोंद्वारा बहकाएहुए अन्ध अर्थात् विवे रहित मनुष्य इस बातको जानतेहुएभी कमलनयनी स्त्रियोंके चर्म, अस्थि और मांस शरीरका सेवन करतेहैं ॥ ७७ ॥

कुण्डलिया–नहिं शशांकसम वदन तिय नील जलजसम नैन । अं कनकसम है नहीं कोकिलसम नहि वैन ॥ कोकिल सम नहिं वैन झूं कवि उपमा दीनी । जानत हैं सब भेद तऊपट आंखिन कीन्ही । हा चाममय नार मन्दमति निशिदिन सेवहिं । करें उपाय अनेक ग्लानि चित नेक न देवहिं ॥ ७७ ॥

लीलावतीनां सहजा विलासास्तएव मूढस्यहृदि स्फुरन्ति ॥ रागो नलिन्या हि निसर्गसिद्धस्तत्र भ्रमत्येव सुधा षडंघ्रिः ॥ ७८ ॥

सं० टी०—स्त्रीणां सहजविलासान् दृष्ट्वा मूढपुरुषो मोहितो भवतीति भ्रमरदृष्टान्तेनाह। लीलावती मिति। लीलावतीनां स्त्रीणां विलासा हावभावः सहजाः स्वभावोत्पन्नाः। ते विलासा मूढस्याज्ञस्य एव हृदि चेतसि स्फुरन्ति प्रकाशन्ते। अत्र दृष्टान्तः। हि यस्मात् नलिन्य रागो रक्तवर्णो निसर्गसिद्धः निसर्गेण स्वभावेन सिद्धोऽस्ति तत्र नलिन्यां षडंघ्रिर्भ्रमरो मुधा व्यर्थमेव भ्रमति। इन्द्रवंज्रावृत्तमिदम्॥ ७८॥

भा० टी०—लीलावती स्त्रियोंके जो विलासहैं वे स्वाभाविक हैं, वे मूर्ख मनुष्यके हृदयमें प्रकाशित होतेहैं अर्थात् मूर्खही उनको देखकर मुग्ध होजातेहैं, देखो कमलिनी में ललाई स्वाभाविकहीहै परन्तु भ्रमर उसपर व्यर्थही आसक्त होकर घूमताहै अर्थात् वह यह समझताहै कि इसकी जो यह ललाई है सो मेरेही लिये है॥ ७८॥

दोहा—कामिनि विलसत सहजमें, मूरुख मानत प्यार।
सहज सुगन्धित कुमुदिनी, भौंरा भ्रमत गँवार॥ ७८॥

यदेतत्पूर्णेन्दुद्युतिहरमुदाराकृति वरं मुखाब्जं तन्वंग्याः किल वसति तत्राधरमधु॥ इदं तावत्पाकद्रुमफलमिवा तीवविरसं व्यतीतेऽस्मिन्काले विषमिव भविष्यत्यसुखदम्॥ ७९

सं० टी०—तन्वंग्या अमृतमयं मुखाब्जं परिणामे विषमिव भवतीति पक्कफल दृष्टान्तेनाह। यदिति। यत् यस्मात् कारणात् पूर्णेन्दुस्तस्य द्युतिस्तेजस्तां हरतीति उदारा सरला आकृतिर्यस्य तत् वरं श्रेष्ठं एवं तन्वङ्ग्याः कृशाङ्ग्याः मुखाब्जं मुखकमलम्। तत्र अधरमधु वसतीति किल श्रूयते। तर्हि इदं तावत् पाकद्रुमस्य महाकालद्रुमस्य फलं अस्मिन् काले यौवनेऽतीते अतिक्रमितेसति अतीव विरसं विषभिवासुखदं भविष्यति। यथा पाकद्रुमस्य फलं पक्त्वा कालोपचितं चेत् रसवत्। नो चेत् तत्कालातिक्रमेण तत्र नश्यति विषमिव भवति तरुण्या मुखमपि तथैव भवतीत्यर्थः। शिखरिणीवृत्तमिदम्॥ ७९॥

भा० टी०—पूर्णिमाके चन्द्रकी छबिको हरनेवाला सुन्दर आकारवान् और श्रेष्ठ जो यह स्त्रियोंका मुखकमल है इसमें अधरामृत रहताहै, यह मुख मन्दारके फलकेसदृश अज्ञाल वा युवावस्थामेंही अच्छालगताहै, किंतु वह काल व्यतीतहोनेपर अर्थात् ज्ञान अथवा वृद्धावस्था प्राप्तहोनेपर विषकेसमान दुःखदाई होजाताहै॥ ७९॥

दोहा—अधर मधुर मधु सहित मुख, हुतो सबन शिरमौर।
सो अब बिगरे फलनसम, भयो औरसों और॥ ७९॥

उन्मीलत्त्रिवलीतरंगनिलया प्रोत्तुंगपीनस्तनद्वन्द्वेनोद्यतचक्रवाकमिथुना वक्त्राम्बुजोद्भासिनी॥ कान्ताकारधरानदीयमभितः क्रूराशयानेष्यते संसारार्णवमज्जनं यदि ततो दूरेण संत्यज्यताम्॥ ८०॥

सं० टी०—उन्मीलदिति। कान्ता नाम नदीं कृत्वा उभयोः सादृश्यं वर्ण्यते। उन्मीलन्त्यो याः त्रिवल्यस्ता एव तरंगास्तेषां निलयं स्थानं यस्यां सा। प्रकर्षेण उत्तुङ्गं उच्चं पीनं मांसलं स्तनद्वयं कुचद्वयं

तेन उद्यतं चक्रवाकमिथुनं यस्यां सा कुचद्वयमेव चक्रवाकमिथुनमित्यर्थः । वक्त्रमेव अम्बुजं कमलं तेन भासिता शोभायमाना । एवंभूता कान्ताकारधरा नदी इत्यममितः समन्ततः क्रूरः आशयोऽभिप्रायो यस्याः सा । नदीपक्षे आशयः आवर्त्तः । हे जनाः यदि भवतां संसारार्णवमज्जनं नेष्यते इच्छा नास्ति तर्हि भवद्भिरेव दूरेण सन्त्यज्यताम् । शार्दूलविक्रीडितं वृत्तमिदम् ॥ ८० ॥

भा० टी०-शोभित उदरकी त्रिवलीही तरङ्गोंका समूहहै, उत्तुङ्ग और पुष्ट दोनों स्तनही चक्रवाकके जोडेहैं,और मुखरूपी कमलसे शोभायमानहै ऐसी जो यह स्त्रीरूपी नदी है, सो चारों ओरसे क्रूराशय ( नदीपक्षमें कच्छप मकरादि युक्त और स्त्रीपक्षमें कठिनाशय )है, इसमें यदि मग्न होना नहीं चाहतेहो तौ हे मनुष्य ! इसको दूरसेही त्याग दो ॥ ८० ॥

छप्पय-त्रिवली तरल तरंग लसत कुच चक्रवाकसम । प्रफुलित आनन कंज नारि यह नदी मनोरम । महाभयानक चाल चलत भवसागर सन्मुख । हाथ धरतही ऐंच जात जितकों अपनी रुख । संसार सिन्धु चाहत तर्‍यो तौ तू यासों दूर रह । जाकौ प्रवाह अतिही प्रबल नेक न्हातही जात वह ॥ ८० ॥

जल्पन्ति सार्द्धमन्येन पश्यन्त्यन्यं सविभ्रमाः ॥
हृदये चिन्तयन्त्यन्यं प्रियः कोनाम योषिताम् ॥८१ ॥

सं० टी०—योषितां प्रियः कोऽपि नास्तीत्याह । जल्पन्तीति । स्त्रियः अन्येन पुरुषेण सार्कं जल्पन्ति भाषणं कुर्वन्ति । सविभ्रमाः विलासादिचेष्टायुक्ताः सत्यः अन्यं पश्यन्ति तथा हृदये करणेऽन्यं पुरुषं चिन्तयन्ति । तस्मात् योषितां स्त्रीणां प्रियः को नाम । अपि तु कोऽपि नेदर्शः अनुष्टुब्वृत्तमिदम् ॥ ८१ ॥

भाषा टीका-स्त्री बातें किसी और पुरुषसे करती है, विलाससहित देखती किसी और कोही हैं, और हृदयमें किसी और कीही चिन्ता करतीहै, फिर कहो स्त्रियोंका प्यारा कौन है ? ॥ ८१ ॥

दोहा-मनमें कछु बातन कछु, नैननमें कछु और ।
चितकी गति कछु औरही, यह प्यारी किहि ठौर ॥ ८१ ॥

मधु तिष्ठति वाचि योषितां हृदि हालाहलमेव केवलं ॥
अतएव निपीयतेऽधरो हृदयं मुष्टिभिरेव ताड्यते ॥ ८२ ॥

सं० टी०—योषितां स्त्रीणां वाचि वाण्यां मधु तिष्ठति । हृदि अन्तःकरणे केवलं हालाहलं विषमेव तिष्ठति । अतएव पुरुषेण तासामधरो निपीयते किन्तु हृदयं मुष्टिभिरेव ताड्यते ।...यं वृत्तमिदम् ॥ ८२ ॥

भा० टी०—स्त्रियोंकी वाणीमें मधु होताहै किन्तु हृदयमें केवल हलाहल विष होताहै, इसलिये पुरुष उनके अधरामृतका पान करतेहैं, और हृदयको मुष्टिसे ताडन करतेहैं ॥ ८२ ॥

दोहा—अधरनमें अमृत बसत, कुच कठोरता बास ।
याते इनको लेत रस, उनको मर्दन त्रास ॥ ८२ ॥

अपसर सखे दूरादस्मात्कटाक्षविषानलात्प्रकृतिविषमाद्योषित्सर्पाद्विलासफणाभृतः ॥ इतरफणिना दष्टाः शक्याश्चिकित्सितुमौषधैश्चतुरवनिता भोगिग्रस्तं त्यजन्तिहि मंत्रिणः ॥ ८३ ॥

सं० टी०—अपसरोति । हे सखे ! अस्मात् योषित्सर्पात् दूरादपसरं गच्छ । कथंभूतात । कटाक्षा एव विषानलोऽग्निर्यस्मिन् तस्मात् । पुनःकथंभूतात् प्रकृत्या स्वभावेन विषमात कुटिलात् । विलासा एव फणास्ता विभर्ति तस्मात् । किमित्युच्यते । इतरफणि सर्पेण दष्टा औषधैश्चिकित्सितुं शक्यन्ते । चतुरवनिताभोगिना ग्रस्तं मंत्रिणो हि निश्चयेन त्यजन्ति । अतोदूरादेवापसर । हरिणीवृत्तमिदम् ॥ ८३ ॥

भा० टी०—हे सखे ! कटाक्ष विषानल धारणकरनेवाले, स्वभावसेही विषम और बिलासरूपी फणाधारी इस स्त्रीरूपी सर्पसे दूर भागो; क्योंकि अन्यसर्पोंसे डसाहुआ मनुष्य औषधियोंसे अच्छा होसक्ताहै, परन्तु चतुरस्त्रीरूपी सर्पसे डसेहुएको मांत्रिकभी त्यागदेते हैं ॥ ८३ ॥

दोहा—मंत्र यंत्र औषधनते, तजत सर्प विष लाग ।
यह क्यों हूं उतरत नहीं, नारिनयनको नाग ॥ ८३ ॥

विस्तारितं मकरकेतनधीवरेण स्त्रीसंज्ञितं बडिशमत्र भवाम्बुराशौ ॥ येनाचिरात्तदधरामिषलोलमर्त्यमत्स्यान् विकृष्य पचतीत्यनुरागवह्नौ ॥ ८४ ॥

सं० टी०—विस्तारितमिति । मकरकेतनेन मदनेन धीवरेण कैवर्तकेन अत्रास्मिन् भवाम्बु राशौ संसारसागरे स्त्रीसंज्ञितं स्त्रीनामकं बाडिशं मत्स्यवेधनं विस्तारितं प्रसूतम् ॥ किमर्थं येन बाडिशेन अचिरात्तत्क्षणात तस्याः स्त्रिया अधर एव आमिषं तस्मिल्लोलाः संतृष्णाः मर्त्यमत्स्यास्तान् विकृष्य अनुरागः प्रीतिःस एव वन्हिरग्निस्तस्मिन् पचति । वसन्ततिलका वृत्तमिदम् ॥ ८४ ॥

भा० टी०—इससंसाररूपी समुद्रमें कामदेवरूपी धीमरने स्त्रीरूपी गल फैलाया है, जिसकेद्वारा अधरपल्लवमांसके लोभी मनुष्यरूपी मत्स्योंको आकर्षणकर अनुराग रूपी अग्निमें पकाताहै ॥ ८४ ॥

दोहा—काम भील भव सिन्धुमें, बंसी नारी डार।
मीननरनको गहि पचत, प्रेम अग्निको वार ॥ ८४ ॥

कामिनीकायकान्तारे कुचपर्वत दुर्गमे ॥
मा संचर मनःपान्थ तत्रास्ते स्मरतस्करः ॥ ८५ ॥

सं० टी०—कामिनीति । हे मनःपान्थ! कुचौ स्तनावेव पर्वतौ ताभ्यां दुर्गमे गन्तुमशक्ये कामिन्याः स्त्रियाः काया एव कान्तारमरण्यं तस्मिन मा संचर मा गच्छ । किमर्थं तत्रारण्येस्मरः काम एव तस्करश्चौर आस्ते वसति । अनुष्टुब्वृत्तमिदम् ॥ ८५ ॥

भा० टी०—हे मनरूपीपथिक! स्त्रियोंका शरीररूपी वन कुचरूपीपर्वतोंके कारण अत्यन्त दुर्गम है, तूं उसमे मत जा, क्योंकि वहां कामदेवरूपी चोर रहताहै ॥८५॥

कुण्डलिया—एरे मन मेरे पथिक तू न जाहु इह ओर। तरुणी तनवन सघनमें कुचपर्वत वर जोर। कुचपर्वत वर ज़ोर चोर एक तहां बसतहै। करमें लिये कमान बान पांचो बरसतहै । लूट लेत सब साज पकरकर राखत चेरे। मूंद नैन अरु कान भुल्यान्यौ तूं कित एरे ॥ ८५ ॥

व्यादीर्घेण चलेन वक्रगतिना तेजस्विना भोगिना
नीलाब्जद्युतिनाहिना वरमहं दष्टो न तच्चक्षुषा ॥ दष्टे
संति चिकित्सका दिशिदिशिप्रायेण धर्मार्थिनो मुग्धा-
क्षीक्षणवीक्षितस्य नहि मे वैद्यो न चाप्यौषधम् ॥८६॥

सं० टी०—व्यादीर्घेणेति । तच्चक्षुषा तस्याश्चक्षुषा अहिना अहिं दष्टः न वरं न श्रेष्ठमुत्तमम्। कथंभूतेन । विशेषेण आदीर्घेण । चलेन चंचलेन । वक्रगतिना कुटिलगतिना । तेजस्विना कान्तिमता । भोगिना भोगोनाम फणा विद्यते यस्य चक्षुषः नानाभोगा भवन्ति । नीलाब्जवत् नीलकमलवत् द्युतिर्यस्य तेन इतरेण अहिना दष्टे दिशि दिशि प्रायशो धर्मार्थिनश्चिकित्सकाः सन्ति परन्तु मुग्धाक्षी स्त्री तस्या ईक्षणवीक्षितस्य मे मम वैद्यो नास्ति औषधमपि नास्ति । शार्दूलविक्रीडितंवृत्तमिदम् ॥ ८६ ॥

भा० टी०—बहुत लम्बा, चञ्चल, टेढी चालवाला, कांन्तिमान् और फणाधारी, नीलकमलकी समान कृष्णसर्प यदि काटले तौ उत्तम है, परन्तु स्त्रीके कटाक्षसे काटा अच्छा नहीं; क्यों कि सर्पके काटेहुएके बचानेवाले धर्मार्थी मनुष्य प्रायः प्रत्येक देशमें होतेहैं परन्तु सुन्दरनेत्रवाली स्त्रीके दृष्टीसे काटेहुएको बचानेकेलिये न कोई वैद्य है और न कोई औषध है ॥ ८६ ॥

छप्पय—महाभयंकर चपल वक्रगति अरु फणधारी। डसे कालियानाग नहीं कछु विपदा भारी। करें चिकित्सा वैद धर्म हित देंय जिवाई। पै

नहिं कोऊ वैद चिकित्सा और उपाई । जेहि डसत भुजंगिनि त्रिय चपल करि कटाक्ष सो नहिं जियत । यह जानि विदुषजन जगतमें विषयरूप विष किमि पियत ॥ ८६ ॥

इहहि मधुरगीतं नृत्यमेतद्रसोऽयं स्फुरति परिमलोऽसौ स्पर्श एष स्तनानाम् ॥ इति हतपरमार्थैरिन्द्रियैर्भ्राम्यमाणो ह्यहितकरणदक्षैः पञ्चभिर्वञ्चितोऽस्मि ॥ ८७ ॥

सं० टी०-इहेति । इह लोके मधुरगीतं कर्णयोर्विषयः । एतन्नृत्यं चक्षुषोर्विषयः । अयं रसो रसनाया विषयः । असौ परिमलः स्फुरति घ्राणस्य विषयः । एषः स्तनानां स्पर्शस्त्वचो विषयः इति पंचेन्द्रियाणां पंच विषयाः । हे जन । त्वमेभिः पंचभिरिन्द्रियैर्भ्राम्यमाणःसन् वंचितोऽसि । कथंभूतैरिन्द्रियैः । हतः नाशितः परमार्थो यैस्तैः । पुनः अहितं नरकादिकं तस्य करणे दक्षैः कुशलैः । मालिनीवृत्तमिदम् ८७

भा. टी.-यह कैसा मधुर गीतहै, यह कैसा उत्तम नृत्य है,इस वस्तुका रस कैसा स्वादिष्ट है, यह सुगन्धि कैसी उत्तम है, और यह स्तन स्पर्शकरनेसे कैसा अच्छा सुख देते हैं, हे मनुष्य ! इन पांचोविषयोंमें भ्रमताहुआ,इसप्रकार परमार्थके नष्ट करनेवाली और नरकादिकके साधनभूत इन पांचों इद्रियोंसे तू ठगायागया है ॥ ८७ ॥

छप्पय-कान निरन्तर गान तान सुनिवोही चाहत । लोचन चाहत रूप रैनदिन रहत सराहत । नासा अतर सुगन्ध चहत फूलनकी माला । त्वचा चहत सुखसेज संग कोमल तन बाला । रसनाहू चाहत रहत नित खाटे मीठे चरपरे । इन पंचन या परपञ्चसों भूपनकों भिक्षुककरे ॥ ८७ ॥

न गम्यो मन्त्राणां न च भवति भैषज्यविषयो न चापि प्रध्वंसं व्रजति विविधैः शान्तिकशतैः ॥ भ्रमावेशादङ्गे किमपि विदधद्भव्यमसमं स्मरापस्मारोऽयं भ्रमयति दृशं घूर्णयति च ॥ ८८ ॥

सं० टी०-नेति । अयं स्मरो मदनोऽपस्मारो वर्तते । अपस्मारनिवारणार्थमुपायाःसन्तिते कर्तव्या इति चेत्तर्हि अयं तथा न भवति । अयं कथंभूतः । मंत्राणां न गम्योऽत्र मंत्रेण किमपि कर्तुं कोऽपि न समर्थः इत्यर्थः भैषज्यविषयो न भवति । न च विविधैरनेकप्रकारैः शान्तिकशतैरपि प्रध्वंसं नाशं व्रजति प्राप्नोति अथ च भ्रमस्यावेशात् अङ्गे किमपि भव्यं कर्तव्यमसमं विदधत् यत्किंचित् करोति दृशं दृष्टिं भ्रमयति घूर्णयति च ॥ ८८ ॥

भा० टी०-यह कामदेवरूपी अपस्मार रोग भ्रमके आवेशसे शरीरमें दुःखद ई कर्मकरता हुआ मनको भ्रमाताहै, और नेत्रोंको घुमाताहै, इस रोगमें न तो मंत्रोंकी कुछ गतिहै न औषधी कुछ काम करसक्तीहै और न नानाप्रकारके शान्तिकर्म पाठपूजा आदिसे यह नाशको प्राप्त होताहै ॥ ८८ ॥

दोहा—मन्त्र दवा अरु आपसों, वेदन मिटै न वैद ।
कामबाणसों भ्रमत मन, कैसे मिटहै कैद ॥ ८८ ॥

जात्यन्धाय च दुर्मुखाय च जराजीर्णाखिलाङ्गाय च
ग्रामीणाय च दुष्कुलाय च गलत्कुष्ठाभिभूताय च ॥
यच्छन्तीषु मनोहरं निजवपुर्लक्ष्मीलवश्रद्धया पण्यस्त्रीषु
विवेककल्पलतिकाशस्त्रीषु रज्येत कः ॥ ८९ ॥

सं० टी०—जात्यन्धायेति । पण्यस्त्रीषु वेश्यासु को रज्येत इच्छां करोति । कथंभूतासु । जात्यन्धाय जन्मान्धाय, दुर्मुखाय कुरूपाय, च जरया जीर्णानि अखिलानि सर्वाणि अङ्गानि यस्य तस्मै, ग्रामीणाय अचतुराय, दुष्कुलं नीचकुलं तत्रोत्पन्नाय च, गलत्कुष्ठेन अभिभूताय पीडिताय च, एवमादये लक्ष्मीलवश्रद्धयाऽल्पद्रव्यप्राप्त्यर्थं मनोहरं सुन्दरं निजं स्वकीयं वपुः शरीरं प्रयच्छन्तीषु । पुनः कथंभूतासु । विवेक एव कल्पवल्ली तस्याः शस्त्रीषु शस्त्रभूतासु छेत्रीषु । शार्दूलविक्रीडितं वृत्तमिदम् ॥ ८९ ॥

भा० टी०—जो जन्मांध, कुरूप, वृद्धावस्थासे शिथिल, गवाँर, नीचजाती और कोंढीकोभी अल्पद्रव्यकी आशासे अपना सुन्दर शरीर समर्पण करदेतीहैं, और जो विवेकरूपी कल्पलताके लिये छुरीके समान हैं ऐसी वेश्याओंसे रमण करनेकी कौन बुद्धिमान् इच्छा करेगा ॥ ८९ ॥

छप्पय—जातिहीन, कुलहीन, अंध, कुत्सित, कुरूपनर । जरा ग्रसित कृशगात गलितकुष्ठी अरु पांडर । ऐसौहू धनवान होय तौ आदर वाकौ । अपनौ गात विछाय लेत रस सर्वस ताकौ । गनिका विवेककी वेलकों कदन करनवारी निरखि । बचरहे बडे कुलवन्त नर रचत पचत मूरख हरषि ॥ ८९ ॥

वेश्यासौ मदनज्वाला रूपेन्धनसमेधिता ॥ कामिभि-
र्यत्र हूयन्ते यौवनानि धनानि च ॥ ९० ॥

सं० टी०—वेश्येति । असौ वेश्या पण्यस्त्री रूपमेवेन्धनं काष्ठं तेन समेधिता वर्द्धिता मदनज्वाला कामाग्निरस्ति । यत्र यस्मिन् कामिभिः कामुकैः यौवनानि तारुण्यानि धनानि च हूयन्ते। अनुष्टुब्वृत्तमिदम् ॥ ९० ॥

भा० टी०—यह वेश्यातौ सुन्दरतारूपी इंधनसे प्रचण्डरूपसे जलताहुआ कामाग्नि है, और कामीपुरुष इसमें अपने यौवन और धनकी आहुति देतेहैं ॥ ९० ॥

दोहा—गनिका कनिका अगिनकी, रूपसमिध मजबूत ।
होम करत कामीं पुरुष, धन यौवन आहूत ॥ ९० ॥

कश्चुम्बति कुलपुरुषो वेश्याधरपल्लवं मनोज्ञमपि ॥
चारभटचौरचेटकनटविटनिष्ठीवनशरावम् ॥ ९१ ॥

सं० टी०—कं इति । चारो दूतः भटो योद्धा चौरश्चोरः चेटकं करोति स चेटकः नटः नर्तकः विटः भांडः इत्यादीनां निष्ठीवनस्य लालोदकस्य शरावं पात्रं एवंविधं मनोज्ञमपि सुन्दरमपि वेश्याया अधरपल्लवं कः कुलपुरुषः कुलीनश्चुम्बति ! अकुलीन एव चुम्बति कुलीनो नेतिभावः ॥ आर्यावृत्तमिदम् ॥ ९१ ॥

भा० टी०—वेश्याका अधरपल्लव यदि सुन्दर है, तौभी उसको कुलीन पुरुष नहिं चुम्बता है, क्यों कि वह तो ठग, योद्धा, चोर, दास, नट, और जारोंके थूकनेका पात्र है ॥ ९१ ॥

सोरठा—गनिकाके मृदु ओठ, को कुलीन चुम्बन करैं ।
नट, भट, विट, ठग, गोठ, पीक पात्रहै सबनकौ ॥ ९१ ॥

## इति कामिनीनिगर्हणम् ।

---

धन्यास्तएव तरलायतलोचनानां तारुण्यरूपघनपीन
पयोधराणाम् ॥ क्षामोदरोपरिलसात्रिवलीलतानां दृष्ट्वा-
कृतिं विकृतिमेति मनो न येषाम् ॥ ९२ ॥

सं० टी०—इह स्त्री दृष्ट्वा ये विकारं न प्राप्नुवन्ति त एव धन्या इति कथयन्ति । धन्या इति । त एव धन्याः पुण्यवन्तः । येषां मनस्तरलानि चपलानि आयतानि विस्तीर्णानि लोचनानि यासां तासामाकृतिं रूपं दृष्ट्वा विकृतिं विकारं न एति प्राप्नोति । कथंभूतानां । तारुण्यं रूपं घनौ पीनौ च पयोधरौ स्तनौ यासां । पुनः क्षामं कृशमुदरं तस्योपरि लसन्त्यः शोभायमाना त्रिवलीलता त्रिवलयोः यासाम् । मालिनीवृत्तमिदम् ॥ ९२ ॥

भा० टी०—चञ्चल विशाल नेत्रवाली, तरुण सुन्दररूपवान् और दृढ पुष्टस्तन-वाली तथा जिनके क्षीणउदरपर त्रिवली शोभायमानहै ऐसी स्त्रियोंको देखकर जिनका मन विकारको प्राप्त नहीं होताहै वही धन्य है ॥ ९२ ॥

दोहा—क्षीण लंक अरु पीन कुच, लखि तियके दृगतीर ।
जे अधीर नहि करत मन, धन्य धन्य ते धीर ॥ ९२ ॥

शुभ्रं सद्म सविभ्रमा युवतयः श्वेतातपत्रोज्ज्वला लक्ष्मी
रित्यनुभूयते स्थिरमिव स्फीते शुभे कर्मणि ॥ विच्छन्ने
नितरामनङ्गकलहक्रीडात्रुटत्तन्तुकं मुक्ताजालमिव-
प्रयाति झटिति भ्रश्यद्दिशो दृश्यताम् ॥ ९३ ॥

सं० टी०—शुभ्रमिति । शुभ्रं स्वच्छं सद्म गृहं । सविभ्रमाः सविलासा युवतयस्तरुण्यः । श्वेतमात पत्रं छत्रं तद्वदुज्ज्वला लक्ष्मीः इति स्फीते पुष्कले शुभे मङ्गले कर्मणि सति स्थिरमिव अनुभूयते । व विच्छिन्ने जाते सति नितरामत्यन्तमनंगस्य कलहेन या क्रीडा तस्यां त्रुटत्तंतुकं गच्छति । मुक्ता-

जालं झटिति शीघ्रं भ्रस्यत् दिशो भ्रश्यदेकैकं चतुर्दिक्षु प्रयाति । तद्वत् पूर्वो दृश्यतां पश्यताम् ॥ शार्दूलविक्रीडितं वृत्तमिदम् ॥ ९३ ॥

भा. टी.-स्वच्छ गृह, उत्तम हावभावयुक्त युवती, श्वेतछत्रसहित शोभायमान लक्ष्मी, तबही स्थिरताकेसाथ भोगीजातीहैं जबकि पुण्यकी वृद्धि होतीहै, परंतु पुण्यके क्षीणहोनेपर सम्पूर्ण भोगबिलास कामदेवकी क्रीडाके कलहसे टूटेहुए हारके मोतियोंके समान भ्रष्ट होकर देशान्तरोंमें लुप्त होजातेहैं ॥ ९३ ॥

दोहा--शुभकर्मनके उदयमें, गृह तिय चित सबठौर ।
अस्तभये तीनों नहीं, ज्यों मुक्ता बिनडोर ॥ ९३ ॥

सदा योगाभ्यासव्यसनवशयो रात्ममनसोरविच्छिन्ना मैत्री स्फुरति यमिनस्तस्य किमुतैः ॥ प्रियाणामालापैर धरमधुभिर्वक्त्रविधुभिः सनिश्वासामोदैः सकुचकलशाश्लेषसुरतैः ॥ ९४ ॥

सं० टी०-सदोति । सदा योगाभ्यासस्य व्यसनेन वशयोः आत्मा च मनश्च आत्ममनसी तयोः विच्छिन्ना मैत्री स्फुरति वर्तते । एवंभूतस्य यमिनः इन्द्रियनिग्रहकर्तुस्तस्य तैः किमु किं प्रयोजनं। तैः कैः प्रियाणामालापैः अधरमधुभिः वक्त्रविधुभिः वक्रात् निष्कासितैः निःश्वासेनसह आमोदैः गन्धैः कुचकलशानामश्लेषैरालिङ्गनैः सह सुरतैरित्यादिभिः किं प्रयोजनम् ॥ ९४ ॥

भाषा टीका—जिनके आत्मा और मनको सदा योगाभ्यासहीके व्यसनमे मित्रता प्रगट होतीहै, उनको प्रियस्त्रियोंके सम्भाषण, अधरामृत मुख चन्द्र श्वासोंके सुगन्धि सहित पवन, और कुचकलशोंको हृदयसे लगाकर सुरतोंसे क्या प्रयोजन है ॥ ९४ ॥

छप्पय--करत योग अभ्यास आप मन बस करि राख्यो । परब्रह्मसों प्रीति प्रगट जिन यह सुख चाख्यौ । तिनकों तियके संग कहा सुख वातन ह्वै है । कहा अधर मधुपान कहा लोचन छबि छ्वै है । मुखकमल श्वाससौगन्ध उर कहा कठिनकुचकौ परस । अरुपरिरम्भन चुम्बन कहा योगीजन मन एकरस ॥ ९४ ॥

अजितात्मासु सम्बद्धः समाधिकृतचापलः ॥
भुजङ्गकुटिलः स्तब्धो भ्रूविक्षेपः खलायते ॥ ९५ ॥

सं० टी०—अजितात्मस्विति । स्त्रिया भ्रूविक्षेपः कटाक्षचालनं खलायते खल इवाचरति कीदृशो भ्रूविक्षेपः खलश्च । न जितः आत्मा चित्तं यैस्तेष्वजितेन्द्रियेषु संबद्धाः । तथा समाधौ चित्तैकाग्र्ये पक्षे सम्यगाधौ मनःपीडायां विषये कृतं चापलं येन सः । तथा भुजङ्गो जारस्तद्वत् पक्षे भुजङ्गवत् सर्पवत् कुटिलः तथा- स्तब्धः स्थिरः पक्षे गर्विष्ठः एवंविधः । । अनुष्टुब्वृत्तमिदम् ॥ ९५ ॥

भाषा टीका—अजितेन्द्रिय मनुष्योंसे सम्बन्ध रखनेवाला, समाधि (चित्तैकाग्रता अथवा मानसिक पीडाओं) में अत्यन्त चञ्चलता करनेवाला, भुजङ्ग (सर्प अथवा जार) के समान कुटिल, और स्तब्ध यह स्त्रियोंका कटाक्ष खलके समान आचरण करताहै ॥ ९५ ॥

दोहा—तिय कटाक्ष खल सरसहै, करत समाधिहि भंग ॥
प्राकृत जन संसर्गरत, शठ इव कुटिल भुजंग ॥ ९५ ॥

मत्तेभकुम्भपरिणाहिनि कुङ्कुमार्द्रे कान्तापयोधरतटे रसखेदखिन्नः ॥ वक्षोनिधाय भुजपञ्जरमध्यवर्ती धन्यः क्षपां क्षपयति क्षणलब्धनिद्रः ॥ ९६ ॥

सं० टी०—यस्तरुणीभुजालिङ्गितःसन् रात्रौ शेते स धन्य इत्याह । मत्तेभेति । यः पुरुषः रसःशृंगारादिस्तत्सेवनजन्यो यः खेदस्तेन खिन्नःश्रान्तःसन् मत्तो मदोन्मत्तो य इभो गजस्तस्य कुम्भ गण्डस्थलं तद्वत् परिणाहिनि विस्तीर्णे कुङ्कुमेनार्द्रे कान्तायाः पयोधरतटे स्तनतटे वक्ष उरो निधाय अर्थात् स्त्रिया एव भुजावेवपञ्जर स्तन्मध्यवर्ती सन् क्षणं क्षणमात्रं लब्धा निद्रा येन एतादृशःसन् क्षपां रात्रिं क्षपयति नयति स धन्यः । अस्मिन् संसारे स्त्रियालिङ्गनपूर्वकं शयनमेवात्यन्तसुखहेतुरिति भावः । वसन्ततिलकावृत्तमिदम् ॥ ९६ ॥

भा० टी०—जो मनुष्य रसखेदसे खिन्न होकर मत्तहाथीके कुम्भोंके समान विस्तीर्ण तथा कुंकुमसे भीजेहुए स्त्रीके स्तनोंपर अपने वक्षःस्थलको रखकर स्त्रीके भुजारूपी पञ्जरके मध्यस्थ होकर क्षणमात्रभी निद्रालु होकर रात्रि व्यतीत करताहै वह धन्य है ॥ ९६ ॥

छप्पय—कुंकुम कर्दमयुक्त मत्तगज कुम्भबने मनु । कान्ता कुचतट माहिं सने रस खेद खिन्न जनु ॥ तेहि भुज पंजर मध्यरहे सुखसों लिपटाने । क्षणइक निद्रालहे क्षपा बीततनहिंजाने ॥ इमि निज वक्षस्थलताहि सों जोरिरहे जेशुभगनर । हैंतेई यहि संसारमें धन्यबादकेयोग्यबर ॥ ९६ ॥

सुधामयोऽपि क्षयरोगशान्त्यै नासाग्रमुक्ताफलकच्छलेन । अनङ्गसंजीवनदृष्टिशक्तिर्मुखामृतं ते पिबतीवचन्द्रः ॥ ९७ ॥

सं० टी०—प्रियाया नासाग्रमौक्तिकं चन्द्रत्वेनोत्प्रेक्ष्य वर्णयति । सुधामय इति । हे नायिके । सुधामयोऽमृतमयः अतएव अनङ्गस्य कामस्य संजीवने दृष्टिशक्तिर्दृष्टिसामर्थ्यं यस्य सः । कामोद्दीपक इत्यर्थः । एवंविधोऽपि चन्द्रः क्षयरोगस्य शान्त्यै शमाय नासाया नासिकाया यदग्रंतत्सम्बन्धि यन्मुक्ताफलकं तस्य छलेन मिषेण ते मुखामृतं पिबतीवेत्यहं मन्य इति शेषः । उपजातिर्वृत्तमिदम् ॥ ९७ ॥

भा० टी०—हे सुन्दरि ! अमृतमय अतएव कामदेवके चैतन्यकरनेकी दृष्टिसामर्थ्य रखनेवाला चन्द्रमा क्षयरोगकी शान्तिकेलिये नाककेमोतीके मिषसे तेरे अधरामृतका पान करताहै ॥ ९७ ॥

दोहा–मनसिज बर्धक अमृतमय, क्षयी हरण शशि जान ।
नाशा मोती मिष किये, कर अधरामृत पान ॥ ९७ ॥

दिश वनहरिणीभ्यो वंशकाण्डच्छवीनां कवलमुपलकोटिच्छिन्नमूलंकुशानाम् ॥ शुकयुवतिकपोलापाण्डुतांबूलवल्लीदलमरुणनखाग्रैः पाटितं वा वधूभ्यः ॥ ९८ ॥

सं० टी०–दिशेति । हे जन ! त्व वनेऽरण्ये या हरिण्यो मृगयस्ताभ्यो बंशस्य वेणोः काण्डो दण्डः "काण्डोऽस्त्रीं दण्डबाणार्ववर्गावसरवारिषु" इत्यमरः । तस्येव छविः कान्तिर्येषां कुशानां दर्भाणां उपलस्य पाषाणस्य कोटिरग्रभागस्तेन छिन्नं मूलं यस्यैवंविधं कवलं ग्रासम् । "ग्रासस्तु कवलः पुमान्" इत्यमरः दिश देहि । वाऽथवा वधूभ्यः स्त्रीभ्योऽरुणानि कृष्णलोहितानि "अरुणः कृष्णलोहितः" ईषद्रक्तानीति यावत् । यानि नखानि तेषामग्राणि तैः पाटितंछिन्नं एवंविधं शुकयुवत्याः कीरस्त्रियाः "गृध्नौ कीरशुकौ समौ" इत्यमरः कपोलो गण्डस्तद्वत् आ ईषत् पाण्डुः पीतमिश्रश्वेतवर्णः "पाण्डुस्तुपीतभागार्धः केतकीधूलिसन्निभः" इतिशब्दार्णवः । या ताम्बूलवल्ली तस्या दलं पर्णं दिशेत्यर्थः । मालिनीवृत्तमिदम् ॥ ९८ ॥

भा० टी०–हे मनुष्यो ! तुम यातौ वनमृगियोंके लिये वांसके दण्डकी समान छविवाली पत्थरके अग्रभागसे कटेहुए मूलवाले कुशाओंके ग्रास दो अथवा उत्तम स्त्रियोंके लिये अरुण नखोंसे तोडेहुए शुकयुवती ( सुई ) के कपोलके समान किंचित पाण्डुवर्णवाले ताम्बूल दो ॥ ९८ ॥

दोहा–वनमृगीनके देनकों, हरे हरे तृण लेहु ।
अथवा पीरे पानकौ, वीरा बधुवन देहु ॥ ९८ ॥

वैराग्ये संचरत्येको नीतौ भ्रमति चापरः ॥ शृंगारे रमते कश्चिद्भुवि भेदा परस्परम् ॥ ९९ ॥

सं० टी०–वैराग्य इति । एकः पुरुषो वैराग्ये संचरति । चापरोऽन्यो नीतौ भ्रमति भ्रमणं करोति । कश्चित्पुरुषः शृंगारे रमते । एवं भुवि पृथिव्यां पुरुषाः परस्परं भेदविशिष्टा इत्यर्थः अनुष्टुब्वृत्तमिदम् । ९९ ॥

भा० टी०–कोई पुरुष वैराग्यमें सञ्चार करताहै, कोई मनुष्य नीतिमें भ्रमणकरताहै, और कोई शृङ्गारमें रमताहै, इसप्रकार मनुष्योंकी इच्छा परस्पर एकदूसरेसे भिन्न हैं ! नीति, शृङ्गार और वैराग्य तीनोंशतकोंके निर्माण करनेसे भर्तृहरिजीका यह प्रयोजन है कि जिसकी जिसमें रुचिहो वह उसीको बिचारे ॥ ९९ ॥

दोहा–काहूके वैराग्यरुचि, काहूके रुचि नीति ।
काहूके शृंगाररुचि, जुदी जुदी परतीति ॥ ९९ ॥

यद्यस्य नास्ति रुचिरं तस्मिंस्तस्यास्पृहा मनोज्ञेऽपि ॥ रमणीयेऽपि सुधांशौ न मनः कामः सरोजिन्याः ॥१००॥

सं० टी०—यदिति। यस्य यत् रुचिरं नास्ति तस्मिन् मनोज्ञेऽपि सुन्दरेऽप्यस्य स्पृहा न भवति। अत्र दृष्टान्तः। चन्द्रस्तु सर्वेषां प्रियकरो रमणीयः। तस्मिन् सूर्यविकासिन्याः सरोजिन्या मनसः कामः प्रीतिर्न भवति। एवं यस्य यत्र प्रीतिस्तस्य तत् रुचिकरं। अतो नीतिः शृङ्गारश्च वैराग्यं च उक्तम्। एतेषु यत्र यस्य प्रीतिस्तेन तद्द्रष्टव्यम्। इदं शृंगारशतकं भर्तृहरिणा कृतम्। तत् कामबुद्ध्या न कृतं। आदावेव " समस्तभावैः खलु बन्धनं स्त्रियः " इत्युक्तम्। मध्येऽपि " दुःखैकहेतुर्नहि कश्चिदस्ति " इत्यादीनि वचनानि स्थले स्थले स्थितानि। तासां कामिनीनां प्रशंसा कामिभिः क्रियते सा लिखिता प्रान्ते सर्वं विवेकदृष्ट्या निन्दितम्॥ आर्यावृत्तमिदम्॥ १००॥

भा० टी०—जो वस्तु जिसको प्रिय नहीं वह चाहे जैसी सुन्दर क्यों न हो परन्तु उसको अच्छी नहीं लगती; जैसे चन्द्रमा सबको प्रिय है, परन्तु सूर्य-विकासिनी कमलिनियोंकी प्रीति उसपर नहीं होती, अर्थात् कमलिनियोंको चन्द्रमा अच्छा नहीं लगताहै॥ १००॥

दोहा—जो जाके मन भावतो, ताको तासों काम।
कमल न चाहत चाँदनी, विकसत परसत घाम॥ १००॥

इति श्रीमद्भर्तृहरिकृतं भाषाटीकोपेतं द्वितीयं शृंगारशतकं सम्पूर्णम्॥ २॥

---

ओम्।

॥ श्रीहरिम्वन्दे॥

❀ श्रीवृन्दावनविहारिणे नमः ❀

# अथ भर्तृहरिकृतं।

## तृतीयं वैराग्यशतकं प्रारभ्यते।

---

मङ्गलाचरणम्।

चूडोत्तंसितचारुचन्द्रकलिकाचञ्चच्छिखाभास्वरो लीला दग्धविलोलकामशलभः श्रेयोदशाग्रे स्फुरन्। अन्तः स्फूर्जदपारमोहतिमिरप्राग्भारमुच्चाटयन् चेतः सद्मनि योगिनां विजयते ज्ञान प्रदीपो हरः॥ १॥

सं० टी०—विश्वेशं मोक्षदातारं भैरवं भीतिनाशनं। बुद्धिप्रदं बुद्धिराजं सर्वांगैर्नौमि सादरम् ॥ १ ॥ लम्बोदरमुखं ध्यात्वा नत्वा कृष्णं सदाशिवम्। वैराग्यशतकव्याख्यां यथाप्रज्ञं करोम्यहम् ॥ २ ॥ दिक्कालाद्यनवच्छिन्ना मूर्तिर्यस्य महात्मनः ॥ तस्मै कृष्णाय महते तेजोरूपाय वै नमः ॥ ३ ॥

इह खलु सकलवसुधेशशिखामणी राजर्षिप्रवरः श्रीमद्भर्तृहरिर्वैराग्यशतकमेवारभमाणो राजकुलोत्पन्नत्वात् राज्ञो नीतिशृंगारावश्यमपेक्षितावतः प्रथमं नीतिशृंगारशतके वैराग्यशतकावतरणरूपे निर्माय्येदानीं वैराग्यशतकमेवारभमाणः स्वेष्टदेवं सदाशिवं विशेषयन्नमति । चूडोत्तंसेति । चूडायां केशपाशे उत्तंसिता भूषणभूता चारु रमणीया या चन्द्रकलिका चन्द्रकला तस्याश्चञ्चन्त्यो देदीप्यमाना या शिखाः किरणास्ताभिर्भास्वरः शोभायमानः । लीलया दग्धो विलोलश्चञ्चलः कामशलभः मदनपतङ्गो येन सः। श्रेयः कल्याणं तस्य दशा अवस्था तदर्थं अग्रे स्फुरन् प्रकाशमानः लोकानां कल्याणं कर्तुं प्रकटीभूत इति भावः । अन्तरभ्यन्तरे स्फूर्जन् प्रकाशमानोऽपारः पाररहितो यो मोहः स एव तिमिरमन्धकारोऽज्ञानं प्राक्तस्य प्राग्भारोऽतिशयस्तमुद्घाटयन् समूलं नाशयन् । एवंविधो भक्तान्तःकरणे ज्ञानं प्रदीपयति प्रकाशयतीति ज्ञानप्रदीपः । हरः शिवः योगिनां चेत एवं रुद्म गृहं तस्मिन् विजये सर्वोत्कर्षेण वर्तते ॥ शार्दूलविक्रीडितं वृत्तमिदम् ॥ १ ॥

भा. टी.—राजर्षिप्रवर श्रीभर्तृहरिजी अपने इष्टदेव सदाशिवको नमस्कार करते हैं, जिनकी जटाओंमें चञ्चल और देदीप्यमान चन्द्रकला विराजमान है, और लीलाहीसे जिन्होंने कामदेवरूपी पतङ्गको भस्म कर दियाहै, ऐसे जो महादेवजी हैं, सो कल्याणकी स्फूर्ती करतेहुए और पहिले भएहुए मोहरूपी अन्धकारका नाश करतेहुए योगिजनोंके हृदयरूपीगृहमें दीपकके समान प्रकाशमानहैं ॥ १ ॥

छप्पय—चन्द्रकलामय भांति कांति बहु भांतिन वरषत । जास्यो कामपतङ्ग अंग विन भयौ जु परसत । महामोह अज्ञान हृदयकौ तिमिर नसावत । अपनौ आतमरूप प्रगट कर ताहि दिखावत । द्युति दिपत अखंडित एकरस अद्भुत अतुलित अधिकवर ।।जगमगत सन्त चितसदनमें ज्ञानदीप जय जयति हर ॥ १ ॥

**बोद्धारो मत्सरग्रस्ताः प्रभवः स्मयदूषिताः ॥**
**अबोधोपहताश्चान्ये जीर्णमङ्गे सुभाषितम् ॥ २ ॥**

सं० टी०—वेत्ता मात्सर्यसंयुक्तः प्रभुर्गर्वेण दूषितः । लीनं सुभाषितं सर्वं देह एव तुनो बहिः ॥ महतो गुणान् महत्स्वेव लीनानालोक्य शोचयन्नाह । बोद्धारः इति । बोद्धारः सदसद्विवेककर्तारोऽहमेव बहुज्ञोऽल्पज्ञं किमन्यं पृच्छेयमित्यन्यस्मिन्नल्पज्ञत्वदोषदर्शनरूपेण मात्सर्येण ग्रस्ताः सर्पेण भेका इव निगीर्णाः। प्रभवः सर्वगुणग्रहणसमर्थाः मां धनादिसम्पन्नमालोक्य सर्वे पण्डिताः सन्यासिनश्च जीविकार्थमागमिष्यन्तीति स्मयेन गर्वेण दूषिता दुष्टान्तःकरणाः । अन्ये तु प्रभुपण्डितेभ्योऽतिरिक्ता अबोधेन पदपदार्थाज्ञानेनोपहता हतप्रायाः इत्यधिकार्यभावात् सुभाषितं सच्छास्त्रमंगे शरीर एव जीर्णं विगलितमहो भाग्यं लोकस्येति भावः ॥ २ ॥

भा० टी०—विद्वान् मनुष्य तौ अपनी विद्याके अभिमानसे ग्रस्तहैं, धनीलोग अपने द्रव्यके गर्वसे किसी विद्वान् का आदरही नहीं करते, और शेष अन्य मनुष्य

जो हैं, वे अल्पज्ञ हैं, कुछ समझही नहीं, इत्यादि कारणोंसे सुभाषित शरीरमेंही नष्ट होजाताहै ॥ २ ॥

कुण्डलिया—पण्डित मत्सरता भरे भूप भरे अभिमान । और जीव या जगतके मूरख महाअजान । मूरख महा अजान देखके संकट सहियै । छन्द प्रबन्ध कवित्त काव्यरस कासों कहिये । वृद्ध भई मनमांहि मधुरवाणी गुणमंडित । अपने मनकोंमार मौनधर बैठत पण्डित ॥ २ ॥

न संसारोत्पन्नं चरितमनुपश्यामि कुशलं विपाकः पुण्यानां जनयति भयं मे विमृशतः ॥ महद्भिः पुण्यौघैश्चिरपरिगृहीताश्च विषया महान्तो जायन्ते व्यसनमिव दातुं विषयिणाम् ॥ ३ ॥

सं० टी०—संसारजनितं वृत्तं सुखदं न कदाचन । सुखरूपं भजेत्कृष्णं यदीच्छेन्मुक्तिमात्मनः ॥१॥ संसारचरितं सुखरूपं न भवतीति तत्र लुब्धान् जनान् शिक्षयन्नाह । नेति । पारलौकिकं संसारादुत्पन्नं चरितं व्यवहाररूपं चरित्रमैहिकं च कुशलं कल्याणकरं नानुपश्यामि । ऐहिकस्य कपटप्रायकत्वेन दुरित जनकत्वात् पारलौकिकस्य यज्ञदानहोमादेः फलदोषेण दुष्टत्वात् तेषां पुण्यानां विपाकः फलं ' क्षीणे पुण्ये मर्त्यलोकं विशन्तीति, विमृशतो मे मम भयं जनयति । विचारमेवाह । महद्भिः पुण्यानां यज्ञदानादीनामोघैः समूहैश्चिरकालेन परिगृहीताः प्राप्ताः सन्तो महान्तोऽमृतपानोर्वशीविहारादिलक्षणा विषया विषयिणां व्यसनमिव दुःखमिव दातुं जायन्ते । शिखरिणीवृत्तमिदम् ॥ ३ ॥

भा० टी०—संसारसे उत्पन्न चरित्रोंको हम कल्याण करनेवाले नहीं देखतेहैं, और पुनीत कर्मोंको फल स्वर्गादिकभी मुझको भयरूप दीखताहै, क्यों कि पुण्योंके नाशहोनेपर स्वर्गसे पतनहोजाताहै; बडे२ पुण्योंके समूहसे चरकालसे संचितकिएहुए विषयभी अन्तमें विषयी पुरुषोको दुःखरूपही होजातेहैं ॥ ३ ॥

छप्पय—या जगसों उतपन्नभये जे चरित मनोहर । ते सबही क्षणभंग प्रगट यह पूर रह्यौ डर । यज्ञादिकतें स्वर्ग गये तेहू डर मानत । इन्द्र आदि सब देव अवधि अपनीको जानत । फलभोग करत जे पुण्यकौ तिनकों रोगवियोगभय । दुखरूप सकल सुख देखकै भये संतजन ज्ञानमय ॥ ३ ॥

उत्खातं निधिशंकया क्षितितलं ध्माता गिरे र्धातवो निस्तीर्णः सरितां पतिर्नृपतयो यत्नेन संतोषिताः ॥ मंत्राराधनतत्परेण मनसा नीताः श्मशाने निशाःप्राप्तः काणवराटकोऽपि न मया तृष्णेऽधुना मुञ्च माम् ॥ ४ ॥

सं॰ टी॰–धनलिप्सया नानाक्रियाः कुर्वन् फलमलभमानोऽत्युद्विग्नस्तृष्णे मां मुंचेति प्रार्थयति। उत्खातमिति । हे तृष्णे ! तव प्रभावान्निधिशंकयाऽत्र निधिर्भविष्यतीति या शङ्का तयाक्षितितलं मय रत्खातमुत्खनितम्। तथा गिरेः पर्वतस्य धातवो हरतालादयो मया ध्मातास्ताम्रं सुवर्णं भविष्यतीत्याशया-ऽग्निना संयोजिताः। सरितां पतिः सागरोऽपि निस्तीर्णः धनलिप्सया पोतेनातिक्रान्तः ! नृपतयो राजानो यत्नेन सन्तोषिताः प्रसादिताः । तथा मंत्राराधने तत्परं यन्मनस्तेन मनसा रात्र्यः श्मशाने नीताः। कश्चित्प्रेतः प्रसन्नो भूत्वा धनं दद्यादिति निर्गमितास्तथापि मया काणवराटकोऽपि न प्राप्तः भग्न-कपर्दिकापि न लब्धा। हे तृष्णेऽधुना मां मुंच परित्यजेत्यर्थः । तृष्णापरवशो नरो महद्यत्नं करोति फलं तु भाग्यानुसारेण लभतेऽतः सर्वथा तृष्णा परित्याज्येति भावः । निखनेद्वसुधां ध्मायाद्गिरेर्धातुं सदौषधैः । निस्तरेदुदधिं यत्नात् यद्वा शान्तिर्विचारतः॥ शार्दूलविक्रीडित वृत्तमिदम्॥ ४॥

**भा॰ टी॰**–द्रव्य मिलनेकी आशासे मैंने पृथ्वीको खोदी, रसायन सिद्ध होनेके निमित्त पर्वतकी अनेक धातुओंको फूंक डाली, रत्नप्राप्तिकी आशासे नदियोंके पति समुद्रकेभी पार गया, राजाओंको अनेकप्रकारके यत्नोंसे प्रसन्न किये, और मंत्र सिद्ध-करनेके लिये मन लगाकर निरन्तर रातोंको महाश्मशानमें व्यतीत किया, परन्तु यह सब कुछ करनेपरभी एक कानी कौड़ीभी मेरे हाथ नहीं आई इससे हे तृष्णे ! अब तौ मेरा पिण्ड छोड॥ ४॥

**छप्पय**–खोदत डोल्यौ भूमि गडीहु न पाई सम्पति। धौंकत रह परवान कनकके लोभ लगी मति । गयौ सिन्धुके पास तहां मुक्ताहु न पायौ। कौडी कर नहिं लगी नृपनको शीशनवायौ। साधे प्रयोग श्मशानमें भूतप्रेत बैताल सजि । कितहू भयौ न वांछित कछू अबतौ तृष्णा मोहि तजि॥४॥

**भ्रान्तं देशमनेकदुर्गविषमं प्राप्तं न किंचित्फलं त्यक्त्वा जातिकुलाभिमानमुचितं सेवा कृता निष्फला॥ भुक्तं मानविवर्जितं परगृहे साशंकया काकवत्तृष्णे जृंभसि पापकर्मनिरते नाद्यापि सन्तुष्यसि॥ ५॥**

सं॰ टी॰—एवमनुतप्य वैरायात्यन्तविरोधित्वात्तावत्तृष्णां दूषयति । भ्रान्त्वेति । हे तृष्णे ! त्वमद्यापि न सन्तुष्यासि तुष्टा न भवसि । तव प्रभावाद्यदयोग्यं मया कृतं तच्छृणु । अनेकैर्दुर्गैः कठिनस्थानैर्विषमो दुर्गमो यो देशस्तं भ्रान्त्वा किंचिदपि फलं द्रव्यं मया न प्राप्तम्। किंचजातिश्च कुलं च तयोरुचितं योग्यमभिमानं त्यक्त्वा नीचानां सेवा कृता साऽपि निष्फला जाता । किंच मानेन विवर्जितं निमंत्रणेन विना परगृहे मया भुक्तं तदपि दुर्वचनं मा ब्रूयादिति काकवत् साशङ्कया भयेन सहेत्यर्थे मम दुर्दशां कृत्वाऽपि जृम्भसि वर्द्धसे । हे पापकर्मनिरते दुष्टकर्मनिरते दुष्टकर्मकारयित्रि हे निर्दये ! अद्यापि तव सन्तोषो न जायते इत्यर्थः । लोभादनेकदेशेषु मनो भ्रमसि लोलुप । शिवस्मरणसन्देशं संभ्रमश्रमहारिणम्॥ वृत्तं पूर्वोक्तम्॥ ५॥

**भा॰ टी॰**–मैंने अनेक दुर्गमदेशोंमें भ्रमणकिया तथापि कुछ फल नहीं प्राप्तहुआ यथार्थ जाति और कुलका अभिमान त्यागकर पराई सेवा की सोभी निष्फल हुई, और

मानको त्यागकर कौएके समान सशंकित पराये घरपर भोजन किया, तृष्णे! ( यह सब तेरेहीकारण हुआ ) हे पापकर्ममें प्रवृत्त सदैव वर्द्धमान तृष्णे ? तुझको अबभी सन्तोष नहीं होताहै ॥ ५ ॥

छप्पय--भटकौ देश विदेश तहां फल कछुहु न पायौ। निज कुलकौ अभिमान छांड सेवा चित लायो। सहि गारी अरु खीझ हाथ झारत घर आयौ। दूर करतहूं दौरि स्वान जों परगृह खायौ। इहि भांति नचायौ मोहितैं वहँकायौ दै लोभतल। अजहूं न तोहि सन्तोष कहुं तृष्णा तू पापिन प्रबल ॥ ५ ॥

> खलोल्लापाः सोढा कथमपि तदाराधनपरैर्निगृह्यान्तर्बाष्पं हसितमपि शून्येन मनसा ॥ कृताश्चित्तस्तंभः प्रहसितधियामञ्जलिरपि त्वमासे मोघाशे किमपरमतो नर्तयसि माम् ॥ ६ ॥

सं० टी०—तृष्णायामनेकानि दुःखानि प्रदर्श्य तद्भेदाशायामपि तानि दर्शयंस्तां स्वशान्ति प्रार्थयते। खलोल्लापा इति। तदाराधनपरैः खलसेवनपरैरस्माभिः खलोल्लापाः खलानां दुष्टानामुल्लापाः दुर्वाक्यानि सोढा मर्षिताः तद्दुर्वचनैर्जातं यद्बाष्पमश्रुजलं तत्कथमप्याशाप्रभावेनान्तर्निगृह्य संस्तभ्य शून्यनोत्साहरहितेन मनसा हसितमप्ययं दुष्टो न जानीयान्मद्वाक्यात् खिन्नोऽयमिति हास्यमपि कृतमित्यर्थः। दुष्टवचनात् चेतस्युद्वेगे जातेऽप्येनं दुष्टं विहाय गच्छेयमिति तथापि हे आशे! चित्तस्य स्तम्भः कृतः। एवं विहाय गमने किमपि न मिलिष्यतीति मनसो निरोधः कृतःतव प्रभावात् प्रतिहताधियां धनमदेन प्रतिहता [illegible] धीर्बुद्धिर्येषां तेषामग्रे अञ्जलिः करसंपुटोऽपि कृतो न जानीयादयं मद्वचनादुद्विग्न इति। मोघाशे मोघा निष्कला आशा अभिप्रायो यस्यास्तथाभूते हे आशेऽतः परमन्यन्मां किमु कस्मान्नर्तयस्यधुना तु मां मुञ्चेतिभावः। खलवाग्बाणविद्धोऽपि तत्सेवानिरतो भवेत्। शिवसेवारतो न स्याद् यत्रानन्दो निराश्रयः। शिखरिणीवृत्तमिदम् ॥ ६ ॥

भा० टी०—दुर्जनोंकी सेवा करनेमें हमनें उनके कुवाक्य सहनाकिये, नेत्रोंके आसुओंको रोक उदासमनसे उनके संमुख हँसाकिये, और चित्तको स्थिरकर उन हतबुद्धि मनुष्योंके संमुख हातभी जोडे, अब हे व्यर्थआशाकरनेवाली आशे! क्यों मुझको वृथा नचाती है ॥ ६ ॥

छप्पय—सहे खलनके बैन इतेपर तिनहिं रिझाये। नैननकौ जल रोक शून्यमन मुख मुसक्याये। देत नहीं कछु वित्त तऊ कर जोर दिखाये। कर कर चाव करोर भोरही दौरत आये। सुनि आश प्यास तेरी प्रबल तू अति अद्भुतगति गहत। इह भांति नचायौ मोहि अब और कहा कारिवौ चहत ॥ ६ ॥

**आदित्यस्य गतागतैरहरहःसंक्षीयते जीवितं व्यापारैर्बहुकार्यभारगुरुभिः कालो न विज्ञायते ॥ दृष्ट्वा जन्म जराविपत्तिमरणं त्रासश्च नोत्पद्यते पीत्वा मोहमयीं प्रमादमदिरामुन्मत्तभूतं जगत् ॥ ७ ॥**

सं० टी०–गमनागमनं कुर्वन् रविर्हराति जीवितम्। सेवितं यैर्हरेः पादकंजं तेषां सुजीवितम् ॥ १ ॥ जगदुन्मादं दुःखसहिष्णुतां कालाज्ञानं च दर्शयति । आदित्यस्य गतागतैर्गमनागमनैरुदयाचलादस्ताचलं प्राति गमनमागमनं तु ततः पुनरुदयाचलं प्रति । एवंप्रकारकैर्गतागतैरहरहः प्रतिदिनं जीवितमायुः क्षीयते नश्यति । व्यापारैर्जगदनेकव्यवहारैः । कथंभूतैः। बहुकर्तव्यभारगुरुभिः बहूनि कार्याण्येव भारा वोढुमशक्यास्तैर्गुरुभिर्महाद्भिः । कालो मरणं कियदायुर्गांकियदवशिष्टमिति तु कैश्चिदपि नविज्ञायते न विशेषेणानुभूयते । जन्मादिमरणान्तकर्म सर्वेषामात्मनोऽपि दृष्टा स्वनेत्रगोचरीकृत्वाऽपि त्रासो भयं नोत्पद्यते। अनिष्टकरणात् कश्चिदपि न निवर्तत इति भावः। तत्र हेतुमाह। पीत्वेति । मोहमयीं मोहप्रचुरां प्रमादरूपां मदिरां पीत्वा जगत् उन्मत्तभूतं कर्तव्याकर्तव्यविचारशून्यं जातमिति शेषः । शार्दूलविक्रीडितं वृत्तमिदम् ॥ ७ ॥

भा॰ टी.–प्रतिदिन सूर्यके उदय अस्त होनेके संग जीवन क्षीण होता जाताहै, और बहुत बडे २ कार्य व्यापारोंकेकारण समय जाताहुआ नहीं जानाजाताहै, और जन्म, वृद्धावस्था, विपत्ति और मरण देखकरभी भय उत्पन्न नहींहोताहै इससे, ज्ञात होताहै जगत् मोहमयी प्रमादरूपी मदिराको पीकर उन्मत्त होरहाहै ॥ ७ ॥

छप्पय–उदै अस्त रवि होत आयुकों क्षीण करत नित । गृहधन्देके मांहि समय वीतत अजान चित । आंखिन देखत जन्म जरा अरु विपति मरन नित । तऊ डरत नहिं नेक शङ्कहू नाहिं करत चित । जग जीव मोहमदिरा पिये छाके फिरत प्रमादमें । गिरपरत उठत फिर फिर गिरत विषय वासना स्वादमें ॥ ७ ॥

**दीना दीनमुखैः सदैव शिशुकैराकृष्टजीर्णाम्बरा क्रोशद्भिः क्षुधितैर्निरन्नविधुरा दृश्येत चेद्गेहिनी ॥ याच्ञाभंगभयेन गद्गदलसत्त्रुट्यद्विलीनाक्षरं को देहीति वदेत्स्वदग्धजठरस्यार्थे मनस्वीजनः ॥ ८ ॥**

सं० टी०–अतिदीनमुखैःपुत्रैर्युक्ता पत्नी कदम्बरा । न भवेद्गेहिनी गेही देहीति च कथं वदेत् ॥ १ ॥ पुत्रादिसंग्रहो विवेकिनामपि दुःखद इत्याह । दीनेति । दीनानि मुखानि येषां तैः शिशुकैर्बालैराकृष्टं जीर्णमम्बरं यस्याः सा अतएव दीना । कथंभूतैः क्रोशद्भिरन्नार्थं रुदद्भिरन्यैश्च गृहजनैः क्षुधितैर्विधुराऽतिदुःखवती एतादृशी गेहिनी भार्या चेत् यदि न दृश्येत मनस्विना जनेनेतिशेषः । याच्ञाभङ्गभयेन यांचा देहीति प्रार्थना

तस्या भंगो नाशः न दास्यामीति दातुर्वाक्येन तद्भयेन गद्गदं सबाष्पं गलत् पतत् पदतो वर्णतो वा त्रुट्यत् विलीनामि अस्पष्टानि अक्षराणि यस्मिन् वाक्ये तत् क्रियाविशेषणं वा को मनस्विजनः धीरः वदेत् देहीति कः कथयेत् । स्वजठरानलेन दग्धस्य जठरस्यार्थे स्वोदरपूरणायेत्यर्थः । अत्र आकारप्रश्लेषः कार्योऽन्यथार्थभ्रंशः स्यात् शार्दूलविक्रीडितं वृत्तमिदम् ॥ ८ ॥

भा. टी.—अत्यन्त दीनमुखवाले बालक सदैव जिसका फटाहुआ वस्त्र खींचतेहैं और अन्नकेलिये चिल्लातेहुए क्षुधितमनुष्योंसे जो दुःखितहै ऐसी गेहिनी यदि न होती तो ऐसा कौन धीर मनुष्य है जो अपने पेटभरनेकेलिये याचनाभंग होनेके भयके कारण गद्गदकण्ठसे टुटे फुटे अक्षरोंसे "मुझको कुछ दीजिये" ऐसी वाणी बोलता, अर्थात् स्त्री सब अनर्थोंका मूल है ॥ ८ ॥

छप्पय—फट्यौ पुरानौ चीर ताहि खेंचत अरु फारत। छोटे २ बाल दुःखही दुःख पुकारत। घरमांही नहिं अन्न नारिहू निर्दय यातें। भई महाजडरूप कढत मुखसों नहिं बातें। यह दशा देख अरवरत चित जीव थरथरत रुकत मुख। अपने सुजरे या उदरहित "देहु" कहै को सतपुरुष ॥ ८ ॥

निवृत्ता भोगेच्छा पुरुषबहुमानो विगलितः समानाः स्वर्याताः सपदि सुहृदो जीवितसमः॥शनैर्यष्ट्योत्थानं घनतिमिररुद्धे च नयने अहो धृष्टः कायस्तदपि मरणापायचकितः ॥ ९ ॥

सं० टी०—भोगशक्त्याद्यभावेऽपि भोगाशया मरणं नेच्छति पुमानित्याह । निवृत्तेति । इन्द्रियाणां शिथिलत्वात् भोगेच्छा निवृत्ता गता । पुरुषेषु बहुमानः आदरोऽपि विगलितो नष्टः । समानाः स्ववयसः स्वर्याताः मृता इत्यर्थः । सपदीदानीं येऽवशिष्टाः सुहृदः स्वभावेनोपकारकास्ते जीवित समाः जीवितं समं पूर्णं येषामथवा मम जीवनतुल्या असमर्थास्तिष्ठन्तु म्रियतां वा तैर्न किमपि सिध्यतीत्यर्थः । अधुना शनैर्यष्ट्युत्थानं लकुटं धृत्वाऽऽसनादुत्थानं तदपि न शीघ्रं भवति । निविडेन तिमिरणान्धकारेण रुद्धे आवृते नयने अन्धत्वमपि जातं तदपि तथाविधदशायामप्यहो धृष्टो निर्लज्जा कायो देहो मरणरूपो योऽपायस्तेन चकितः भोगतृष्णाया पतितुं नेच्छतीति भावः । अशक्ततामिन्द्रियाणां दृष्ट्वा त्यक्त्वा भयमृतेः । भवसागरपाराय भोगेच्छां च परित्यजेत् ॥ शिखरिणीवृत्तमिदम् ॥ ९ ॥

भा० टी०—इन्द्रियोंके शिथिल होनेसे भोगोंकी इच्छा निवृत्तहोगईहै, मनुष्योंमेंसे अपना आदरभी घटगयाहै, समानअवस्थावालेभी मरगयेहैं, जो इष्ट मित्र हैं वेभी समाप्तहोनेवाले हैं, अथवा अपनेसमान हैं, आपभी लकडीके सहारे उठनेलगेहैं, और नेत्रोंमें घोर अंधकार छागयाहै, तथापि यह काया ऐसी निर्लज्ज है कि अपना मरण सुन चकित होजातीहै ॥ ९ ॥

छप्पय—भगी भोगकी चाह गयौ गौरव गुमान सब। मित्र गये सुरलोक अकेले आप रहे अब। उठत सु लकडी टेक तिमिर आंखनमें छायौ। शब्द सुनत नहिं कान बचन बोलत वह कायौ। यह दशा वृद्धतनकी तऊ चकित होत मरिवौ सुनत। देखौ विचित्र गति जगतकी दुखहूकों सुखसों लुनत॥९॥

हिंसाशून्यमयत्नलभ्यमशनं धात्रा मरुत्कल्पितं व्या-
लानां पशवस्तृणांकुरभुजः सृष्टाः स्थलीशायिनः॥
संसारार्णवलंघनक्षमधियां वृत्तिः कृता सा नृणां याम-
न्वेषयतां प्रयान्ति सततं सर्वे समाप्तिं गुणाः॥ १०॥

सं० टी०—विधिकृतविषमां वृत्तिमालोच्य शोचन्नाह। हिंसेति। धात्रा दधाति पालयति पोषयतीति धाता तेन हिंसाशून्यं जीवबाधारहितमयत्नलभ्यं स्वतः प्राप्तं चाशनं भोजन व्यालानां सर्पाणां मरुद्वायुरूपं कल्पितं रचितम्। पशवस्तु तृणांकुरास्तान् भुजन्तीति तृणांकुर भुजः स्थल-कृत्रिमा भूमिस्तत्र शायिनः शयनशीलाश्च सृष्टा उत्पादिताः। संसार एवार्णवः समुद्रस्तल्लंघने क्षमा समर्था धी येषां तेषां नृणां मनुष्याणां सा वृत्तिर्जीविका कृता। यां वृत्तिमन्वेषयितुं सम्पादयितुं सर्वे महत्वादयो गुणाः सततं अत्यन्तं समाप्तिं नाशं यान्ति प्राप्नुवन्ति इत्येतद्धात्राऽनुचितं कृतमितिभावः। धात्रा तु निर्मिता सृष्टिर्जीविका न यथोचिता। कृतातः सर्वजीवानां जीविकादं शिवं भजेत्॥ १॥ शार्दूलविक्रीडितं वृत्तमिदम्॥ १०॥

भा० टी०–विधातानें सर्पोंकेलिये हिंसारहित स्वयंप्राप्त वायुका भोजन जीविका बनाई, और पशु ऐसे बनाये जो घास पात खातेहैं, और पृथ्वीपर सोतेहैं,परन्तु जिनकी बुद्धि संसाररूपीसमुद्रके पारकरनेमें समर्थ है ऐसे जो मनुष्य हैं उनकी वृत्ति ऐसी बनाईहै कि जिसकी खोजमें सम्पूर्ण गुण समाप्त होजांय पर वह न प्राप्तहोय॥१०॥

छप्पय—विन उद्यम विन पाप पवन सर्पनकों दीन्हों। तैसैंही सबठौर घास पशुवनकों कीन्हों। जिनकी निर्मलबुद्धि तरन भवसागर समरथ। तिनकी दूवर वृत्ति हरत गुन ज्ञान ग्रंथ गथ। विधि अवधि करी तें अति अधिक याते नर परघर फिरत। निशि द्यौस पचत तनमन नचत लचत रचत उरझत गिरत॥ १०॥

न ध्यातं पदमीश्वरस्य विधिवत् संसारविच्छित्तये स्वर्ग-
द्वारकपाटपाटनपटुर्धर्मोऽपि नोपार्जितः॥ नारीपीन-
पयोधरोरुयुगुलं स्वप्नेऽपि नालिङ्गितं मातुः केवलमेव
यौवनवनच्छेदे कुठारा वयम्॥ ११॥

सं० टी०—अधुनोत्तममध्यमनिकृष्टमिति जन्मनस्त्रिविधं फलं क्रमेण दर्शयंस्तत्रास्माभिः किमपि न प्राप्तमित्यनुतपति । न ध्यातमिति । संसारस्य जन्ममरणरूपस्य विच्छित्तये विनाशायेश्वरस्य पदं पादकमलं यथोत्तमैर्ध्यायते तथाऽस्माभिर्विधिवच्चित्तैकाग्र्येण न ध्यातं नैव चिन्तितम् । तथा स्वर्गद्वारस्य कपाटमावरकं यत्पापं तस्य पाटने उद्घाटने पटुःसमर्थो धर्मो यो मध्यमैः स्वर्गकामैः क्रियते सोऽप्यस्माभिर्नोपार्जितः । अथ च नार्याः पीनौ यौ पयोधरौ स्तनौ ऊरू च तयोर्युगुलं द्वयं यथा पामरै र्विषयभोग एव पुरुषार्थ इतिमतिभिरालिंग्यते तथाऽस्माभिः स्वप्नेऽपि नालिङ्गितम् । अतः केवलं मातुर्यौवनमेव वनं तस्य छेदे कुठारा एव वयं जाताः वृथैव जन्म गतं किमपि न कृतमिति भावः । शिवध्यानं सदा कार्यमेनसो नाशहेतवे । रागादिविषयासक्तो न नयेत्कालमात्मनः । वृत्तंमपूर्वोक्तम् ॥ ११ ॥

भा. टी.-संसारके छेदनकरनेकेलिये ईश्वरके चरणकमलका विधिवत् हमने ध्यान नहींकिया, स्वर्गद्वारके कपाट खोलनेमें निपुण धर्मका संचय नहीं किया और नारिके दृढकुचोंका स्वप्नमेंभी आलिङ्गन नहींकिया, हमतो केवल माताके यौवनरूपी वनके काटनेकेलिये कुठारही उत्पन्नहुए ॥ ११ ॥

छप्पय—विधिसों पूजे नाहिं पांय प्रभुके सुखकारी । प्रभुकौ धरौ न ध्यान सकल भवदुखकौ हारी । खोलें स्वर्गकपाट धर्महू कर्‍यौ न ऐसौ । कामिनिकुचके संग रंग भर रह्यौ न तैसौ । हरि हाय हाय कीन्हो कहा पाय पदारथ नरजनम । जननी यौबन वन दहनको अग्निरूप प्रगटे सु हम ॥ ११ ॥

भोगा न भुक्ता वयमेव भुक्तास्तपो न तप्तं वयमेव-
तप्ताः ॥ कालो न यातो वयमेव यातास्तृष्णा न जीर्णा
वयमेव जीर्णाः ॥ १२ ॥

सं० टी०-भोगाशक्तौ वृद्धावस्थायामनुतपति । भोगा इति । अस्माभिर्भोगा न भुक्ताः किन्तु वयमेव भोगैर्भुक्तास्तच्छक्तिशून्या जाताः । तथाऽस्माभिस्तपो न तप्तं किन्तु वयमेव तप्ताः सन्तापं प्राप्ताः । तथा कालो न यातो गतः किन्तु कालस्य विद्यमानत्वे वयमेव गताः । एवं तृष्णा न जीर्णा जर्जरीभूता अद्यापि तरुणैव वर्तते किन्तु वयमेव जीर्णाः दुर्बला जाता इत्यर्थः । भोगादयस्तु नैवाप्तास्तैः प्राप्तं निधनं खलु ॥ भजे न जीर्णा तृष्णा मेऽहन्तु जीर्णः कथं शिवम् ॥ उपजातिर्वृत्तमिदम् ॥ १२ ॥

भा० टीका०—विषयोंको हमने नहीं भोगा किन्तु विषयोंहीने हमको भोगलिया अर्थात् विषयोंके भोगनेमें हमहीं असमर्थ होंगये, हमने तप नहीं किया किन्तु तपनेही हमको तपाडाला, काल व्यतीत नहीं हुआ किन्तु हमही व्यतीत होगये अर्थात् हमारी ही अवस्था समाप्त होगई; और तृष्णा जीर्ण नहीं हुई किन्तु हमही जीर्ण होगये ॥१२॥

छप्पय—भोग रहे भरपूर आयु यह भुगत गई सब । तप्यौ नाहिं तप मूढ अवस्था तपत भई अब । काल न कितहू जात वैस यह चलीजात

नित। वृद्ध भई नहि आस वृद्ध वय भई छांड हित। अजहूं अचेत चित चेतकर देहगेहसों नेह तज। दुखदोष हरन मंगलकरन श्रीहरिहरके चरण भज ॥ १२ ॥

क्षान्तं न क्षमया गृहोचितसुखं त्यक्तं न सन्तोषतः सोढा दुःसहशीतवाततपनाः क्लेशान्न तप्तं तपः ॥ ध्यातं वित्त-महर्निशं नियमितप्राणैर्न शंभोः पदं तत्तत्कर्म कृतं यदेव मुनिभिस्तैस्तैः फलैरंचितम् ॥ १३ ॥

सं० टी०—मुनिकर्मसदृशं तप आदि कर्मास्माभिरपि कृतं परंत्वाशया दग्धप्रायेण तेन फलं किमपि न लब्धमित्याह। क्षान्तमिति। अस्माभिः खलानां दुर्वचनताडनादि क्षान्तं सोढं परन्तु क्षमया न किन्त्वशक्ततया। तथा गृहोचितं यत्सुखं तत्तदिच्छासत्वेऽपि अदृष्टवशादस्माभिस्त्यक्तं न सन्तोषतः यथालंबुध्या मुनिभिस्त्यज्यते तथा नेत्यर्थः। तथा शीतं वातश्च तपनश्च सूर्यस्तज्जन्या ये क्लेशाः दुःखविशेषास्तेऽप्यस्माभि सोढास्तथापि यथा मुनिभिः स्वरुचिवशात्तपस्या क्रियते तथा तपो न तप्तं किन्तु विपत्त्या दुःखसहनं कृतम्। तथाहर्निशं वित्तं धनमेव ध्यातं चिन्तितमतो नियमित प्राणैः प्राणायामैः शम्भोः पदं स्वरूपं न ध्यातं। एवं मुनिभिस्तत्तत्फलैस्तेषां तेषां कर्मणां तैस्तैः फलैरचितं पूजितमादरेण कृतमित्यर्थः। क्षमादिसाधनैर्युक्तस्त्यक्ता न गृहसम्पदः। सोढा मुनिसमाः क्लेशा आशया विफलीकृताः ॥ १ ॥ शार्दूलविक्रीडित वृत्तमिदम् ॥१३॥

भा० टी०—क्षमा तौ हमने की परन्तु धर्मविचार कर नहींकी अर्थात् अशक्ततासेही की, घरके सुखोंका त्याग तौ किया परन्तु सन्तोषसे त्याग नहीं किया शीतोष्णवायुका दुःसह दुःख तौ सहनाकिया परन्तु तप नहीं किया, और दिनरात हमने धनका ध्यान तौ किया परन्तु प्राणायामद्वारा शिवचरणारविन्दका ध्यान नहींकिया, इसप्रकार जो जो कर्म मुनि करतेहैं वह सब हमने किये परन्तु उनके मुनिलभ्यफलोंसे वंचित रहे अर्थात् उनकर्मोंके करनेसे जो फल मुनियोंको प्राप्तहुएथे वह हमको नहीं हुए कारण इसका यही है कि चित्तसें दुष्ट आशा दूर नहीं हुई ॥ १३ ॥

छप्पय—क्षमा क्षमा बिन कीन बिना सन्तोष तेज सुख। सहे सीत तप घाम विना तप पाय मदादुख। धर्यौ बिषैकौ ध्यान चन्द्रशेखर नहि ध्यायौ। तज्यौ सकल संसार प्यार जब उन विसरायौ। मुनि करत काज सोई करें फल दीसत विपरीत अति। अब होत कहा चिन्ता कियें अजहूं कर हरचरणरति ॥ १३ ॥

वलिभिर्मुखमाक्रान्तं पलितैरंकितं शिरः ॥
गात्राणि शिथिलायन्ते तृष्णैका तरुणायते ॥ १४ ॥

सं० टी०—वार्द्धक्येऽपि तृष्णाधिक्यं भवतीति दर्शयति । वलीति । वलिभिः शिथिलचर्मभिर्मे मुखमाक्रान्तं व्याप्तं तथा पलितैः शुक्लकेशैः शिरोऽङ्कितं चिन्हितम् । गात्राणि तु हस्तपादादीनि शिथिलायन्ते शिथिलमिवाचरन्ति अशक्तानि भवन्तीत्यर्थः । परन्त्वेका तृष्णा विषयभोगाशातरुणायते तरुणमिवाचराति । दुर्वर्णं वदनं वल्ल्या केशैः शुक्लैः शिरोऽङ्कितम् । गात्रं तु शिथिलं सर्वमाशा तारुण्यमेत्यहो । अनुष्टुब्वृत्तमिदम् ॥ १४ ॥

भा० टी०—वृद्धावस्थामें मुखपर झुर्री पडगई, सिरके बाल श्वेत होगये, और सब अंग शिथिल होगये, परन्तु केवल एक तृष्णाही बढतीजातीहै ॥ १४ ॥

दोहा—सेत चिकुर तन दशन विन, बदन भयौ ज्यौं कूप ।
गात सवै शिथिलित भये, तृष्णा तरुण स्वरूप ॥ १४ ॥

येनैवाम्बरखण्डेन सम्वीतो निशि चन्द्रमाः ॥
तेनैव च दिवा भानुरहो दौर्गत्यमेतयोः ॥ १५ ॥

सं० टी०-सूर्यचन्द्रादीनां कारकाणामपि भृत्यानामिव नियतप्रवृत्तिरूपक्लेशदर्शनात्तत्पदादपि विरज्य संसारनिवृत्तये यतितव्यमिति सूचयति । येनेति । येनैवाम्बरस्याकाशस्य खण्डेनैकदेशेन पक्षे वस्त्रखंडेन निशि रात्रौ चन्द्रमाः संवीतो वेष्टितस्तेनैवं चाम्बरखण्डेन दिवा दिवसे भानुः सूर्योऽपि संवेष्ट्यते । अहो कष्टमेतयोरपि दौर्गत्यं यदि तदा क्षुद्राधिकारस्थितानां किं वक्तव्यमिति भावः । पराधीनतया दुःखं दृष्ट्वा सूर्यादिकेष्वपि ॥ ॥ ऐन्द्रान्तं तत्पदं त्यक्त्वा मुक्तये प्रयतेत्सुधीः । अनुष्टुब्वृत्तमिदम् ॥ १५ ॥

भा० टी०-जिस आकाशके एक खण्डको ओढकर रात्रिको चन्द्रमा व्यतीत करताहै दिनमें उसीको ओढकर सूर्य व्यतीत करताहै, अहो जब इन्हींकी ऐसी दुर्गति है तौ हम क्षुद्रजनोंका क्या कहना ॥ १५ ॥

दोहा—इक अम्वरके टूकको, निशिमें ओढत चन्द ।
दिनमें ओढत ताहि रवि, तूकत करत छछन्द ॥ १५ ॥

अवश्यं यातारश्चिरतरमुषित्वापि बिषया वियोगे को भेदस्त्यजति न जनो यत्स्वयममून् ॥ व्रजन्तः स्वातन्त्र्यादतुलपरितापाय मनसः स्वयं त्यक्ता ह्येते शमसुखमनन्तं विदधति ॥ १६ ॥

सं० टी०-विषयवियोगस्यावश्यं भवितव्यत्वान्महत्फलत्वेन स्वेच्छयैव स कर्तव्य इति शिक्षयन्नाह । अवश्यमिति । एते विषयाश्चिरतरं बहुकालमुषित्वा निवासं कृत्वाऽप्यवश्यं यातारः स्वेच्छाभावेऽपि गमिष्यन्ति । स्वेच्छया वा स्वेच्छाभावे वा वियोगे को भेदो न कश्चिदपि भेदोऽस्ति तथापि स्वयं त्यागेन वियोगस्य सम्यक्फलत्वादयं जनो यद्यस्मान् स्वयममून् विषयान्न त्यजति तत्तस्य मौढ्यमेव । स्वेच्छाभावे वियोगस्य फलं दर्शयन्स्वेच्छया वियोगस्यापि फलमाह । व्रजन्त इति । एते विषयाः स्वातन्त्र्यात् व्रजन्तः पुरुषस्य त्यागेच्छाभावे गच्छन्तो मनसोऽतुलोयः परितापस्तस्मै भवन्ति । हीति प्रसिद्धं स्वयं त्यक्ताश्चैतेऽनन्तमपारं यच्छमसुखमनर्थनिवृत्त्युपलक्षितमोक्षानन्दं विदधति करिष्यन्तीत्यर्थः । भोगा नरं त्यजेयुश्चेद्दुःखाय सोऽस्यातुलो भवेत् । स्वयं त्यक्तास्तु विषयाः कुर्युः सुखमनुत्तमम् । शिखरिणीवृत्तमिदम् ॥ १६ ॥

भा० टी०-बहुतकालपर्यंत भोगेहुए विषय अन्तमें अवश्य तुमको छोड देंगे तौ फिरउनके वियोग होनेमें संशयही क्या रहा; इससे मनुष्यको उचित है कि इनकोपहिले स्वयंही त्यागदे, क्योंकि जब वे आपसे छोडेंगे तो मनको बडा सन्ताप देंगे और जो मनुष्य स्वयं उनको त्याग देगा तौ अपारसुखका भागी होगा ॥ १६ ॥

छप्पय-जे वे वारे भोग कहा जो बहुविध विलसे । सदा सर्वदा संग रहत नहि काहू मिलसे । तू तौ तजिहै नाहि आपही ये उठजेहैं । तब ह्वैहै सन्ताप अधिक चितचिन्ता छैहै । जो तजैं आप यह विषयसुख तौ सुख होय अनन्त अति । दुस्तर अपार भवसिन्धुके पार होत वह विमलमति ॥ १६ ॥

विवेकव्याकोशे विदधति शमे शाम्यति तृषा परिष्वंगे
तुंगे प्रसरतितरां सा परिणतिः ॥ जराजीर्णैश्वर्यग्रसनगहना
क्षेपकृपणस्तृषापात्रं यस्यां भवति मरुतामप्यधिपतिः ॥ १७ ॥

सं० टी०-तृष्णाधिकारमाह । विवेकेति । तृषा तृष्णा शमे उपशमे सति शाम्यति उपशमं गच्छति। नःकस्मिन् सति । विवेकस्य व्याकोशे विकाशे सति । सा परिणातिः तृष्णापरिणामः तुङ्गे उन्नत्ते परिष्वङ्गे आश्लेषे साति प्रसराति । युक्तोऽयमर्थः । अपरापि या विलासिनी भवति सा तुङ्गे परिष्वङ्गे साति नितरां प्रसराति न तु व्याप्तिं भजते लब्धावकाशत्वात् तथा सा तृष्णाऽपि । मरुतां देवानामप्यधिपातिरिन्द्रः यस्यां तृष्णापात्रं भवति तुङ्गे परिष्वङ्गे छेत्तुमशक्तो भवतीत्यर्थः । मनुजानां तु का कथा । किंविशिष्टो मरुतामाधिपतिः जराजीर्णैश्वर्यग्रसनगहनाक्षेपकृपणः जराजीर्णमैश्वर्यं तस्य ग्रसनेन पद्गहनं तस्याक्षेपे कृपणः विध्वंसेऽसमर्थः । अतःकारणात् तृष्णा गरीयसीतिभावः । शिखारिणीवृत्तमिदम् ॥ १७ ॥

भा. टी.-जब तृष्णाकी शांत्ति (निवृत्ति) होतीहै तब विवेक (ज्ञान) सूर्यके प्रकाश होनेपर तिस तृष्णाकेनिवृत्तिके होनेसें पुरुष शांतिको प्राप्तहोताहै, और जैसे २ तृष्णाका परिपाक अंगमें अतिशय आलिंगितहोताहै वैसे वैसेही वो तृष्णा आलिंगनकियी नायिकाकीतरह शरीरमें फैलती है और जब तृष्णका अनादर होताहै तव तिरस्कृतनायिकाकीतरह तृष्णाभी निवृत्त होतीहै, देखो जिस तृष्णाके विद्यमानहोनेसें जराजीर्ण ऐश्वर्यके ग्रसनेसे ( नाशसें ) जो दुःख है उसके दूरकरनेको असमर्थ जो मरुद्गणोंका पति इंद्र है वोभी उस तृष्णाका पात्र ( आधार )होताहै इस्सें जानते हैं कि तृष्णा बडी प्रबलहै ॥ १७ ॥

छप्पय—तृष्णा मूल नसाय होय जब ज्ञान उदय मन । भये विषयमें लीन बढै दिनपर दिन चौगुन । जैसे मुग्धा नार कठिन कुच हाथ लगावत । बढत काममद अधिक अधिक तनमे सरसावत । यह जराजीर्ण ऐश्वर्यको लागत लागत दुःख अति । तेहितजिवेको असमर्थ यह वासव जोहै वायु पति ॥ १७ ॥

**भिक्षाशनं तदपि नीरसमेकवारं शय्या च भूः परिजनो निजदेहमात्रम् ॥ वस्त्रं च जीर्णशतखण्डमलीनकन्था हा हा तथापि विषया न परित्यजंति ॥ १८ ॥**

सं० टी०–कामादि विषयप्राबल्यं दर्शयाति । भिक्षाशनमिति । अनेकगृहयाञ्चालब्धया भिक्षयाऽशनं भोजनं तदपि नीरसं मधुरादिरसवर्जितं सूक्ष्ममेकवारं च । शय्या च भूः शयनोपकरणहीना पृथ्वी, परिजनः परिवारो निजदेहमात्रं न तु पुत्रकलत्रादयः । वस्त्रं तु जीर्णानि शतानि खण्डानि प्रचुराणि यस्यां सा कन्था । हा हाऽहो कष्टं तथापि सर्वप्रकारैर्हीनमपि जनं विषया न परित्यजन्ति वैराग्यं विना पुरुषं न जहतीत्यर्थः । अशनादिविहीनं च परिवारेण वर्जितम् ॥ देहमात्रावशिष्टं हा विषया न त्यजन्ति माम् ॥ १ ॥ वसन्ततिलकावृत्तम् ॥ १८ ॥

भा. टी.–जो भिक्षा मांगकर खातेहैं सो भी नीरस और एकवार हीं मिलती है, भूमिही जिनकी शय्या है,स्वदेहमात्रही जिनका परिवार है, और जो सैकडों टुकडोंसे बनीहुई जीर्णकन्थाको धारणकरतेहैं,हाय?विषयबासना उनकाभी त्याग नहींकरतीहै१८

छप्पय–भीख अन्न एकवार लौन बिन खाय रहतहूं । फटी गूदडी ओढ वृक्षकी छाँह गहतहूं । घास पात कछु डासि भूमिपर नितप्रति सोवत । राख्यो तन परिवार भार यह ताकौ ढोवत । इह भांति रहत चाहत न कछु तऊ विषय बाधा करत । हरि हाय २ तेरी शरण आय पर्यो इनसों डरत ॥१८॥

## ॥ रूपातिरस्कारमाह ॥

**स्तनौ मांसग्रन्थी कनककलशावित्युपमितौ मुखं श्लेष्मागारं तदपि च शशांकेन तुलितम् ॥ स्रवन्मूत्रक्लिन्नं करिवरकरस्पर्धि जघनमहो निंद्यं रूपं कविजन विशेषैर्गुरु कृतम् ॥ १९ ॥**

सं० टी०–स्त्रीणां रूपं कविजनविशेषैः कविश्रेष्ठैर्गुरु महत् रमणीयमितिभावः । कृतं कल्पितं वस्तुतस्तदातिनिंद्यमित्याह । स्तनाविति । अहो इति दुःखे निंद्यरूपं कविजनविशेषैर्गुरुकृतं कल्पितम् । कथं निंद्यम् । स्तनो कुचौ मांसस्य ग्रन्थी । परमित्युपमितौ उपमान्तिौ । इति किं । कनककलशौ सुवर्णकलशौ । चान्यत् मुखं श्लेष्मागारं तदपि च शशाङ्केन तुलितं चन्द्रमसा समानं कृतम् । जघनं स्रवन्मूत्रेण क्लिन्नमार्द्रं तदपि करिवरकरस्पर्धि गजेन्द्रशुण्डादण्डेन स्पर्धाकारकं तत्सादृश्येनवर्णितमिति भावः । कविभिरतिरमणीयत्वेन वर्णितमपि स्त्रीरूपमतिनिन्द्य मतस्तद्विषयोऽत्यन्ताभिलाषो न स्वीकरणीय इतिभावः । शिखरिणीवृत्तमिदम् ॥ १९ ॥

भा. टी.–स्त्रियोंके स्तन हैं तो मांसके लोथडे परन्तु उनको उपमा दीगई है सुवर्णकलशकी अर्थात उनको ऐसे सुन्दर बनातेहैं जैसे सुवर्णके कलश, मुख है तो

कफका स्थान परन्तु उसकी तुलना करतेहैं चन्द्रमासे अर्थात् मुखको चन्द्रमाकेसमान कान्तिमान् बनातेहै, स्त्रीके जघन हैं तौ मूत्रसे भीगेहुए परन्तु उनको उपमा देतेहैं गजेन्द्रके शुण्डकी, इसप्रकार निन्दितरूपको कविजनोंने देखो कैसा वे परिमाण बढादियाहै ॥ १९ ॥

छप्पय-कुच आमिषकी गांठ कनकके कलश कहत कवि । मुखहू कफकौ धाम कहत शशिके समान छवि । झरत मूत्र अरु धातु भरी दुर्गंध ठौर सब । ताकौं चम्पकवेल कहत रस रेल ठेल दब । यह नारि निहारी निन्दतन वहँके विषयी वावरे । याकों बढाय वांको विरद बोले बहुत उतावरे ॥ १९ ॥

अजानन्माहात्म्यं पततु शलभो तीव्रदहने स मी-
नोऽप्यज्ञानाद्बडिशयुतमश्नातु पिशितम् ॥ विजानन्तो
ऽप्येते वयमिह विपज्जालजटिलान्न मुञ्चामः कामानहह
गहनो मोहमहिमा ॥ २० ॥

सं० टी०-अधुना मोहमाहात्म्यं चिन्तयन्ननुतपाति । अजानन्निति । शलभः कीटविशेषस्तीव्रदहनस्तो प्रज्वलिताग्नेर्माहात्म्यं भस्मीकरणरूपमजानंस्तस्मिन्नेव पततु । स मीनो मत्स्योऽप्यज्ञानान्मारकत्वज्ञाना-न्मारकत्वज्ञानाभावाद्बडिशेन लोहकण्टकेन युतं पिशितं मांसमश्नातु खादतु । वयं त्वेते संसारिणो विपदांजालैः समूहैर्जटिलानुद्ग्रथितान् कामान् विषयभोगान् इह संसारे जानन्तोऽपि न मुञ्चामोऽहहाहो कष्टं मोहस्य महिमा गहनोऽतर्क्य इत्यर्थः । नश्यतो विषयाक्रान्तानज्ञान् ज्ञानविशेषतः । पश्यन्तोऽपि न तत्यागं कुर्मो मोहप्रभावतः ॥१॥ शिखरिणीवृत्तमिदम् ॥ २० ॥

भा. टी.-पतङ्ग अग्निकी शिखामें गिरता है परन्तु वह यह नहीं जानता कि उस में गिरनेसे भस्म होजाऊंगा, मछली वंशीमें लगेहुए मांसको खातीहै परन्तु वह यह नहीं जानती कि इसके खानेसे कांटा उसके कण्ठमे छिदेगा किन्तु हमको देखो कि हम जानतेहुएभी इन दुःखदायी विषयोंको नहीं त्यागतेहैं । अहो यह मोहमहिमा कैसी प्रबलहै ! ॥ २० ॥

छप्पय-जानत नांहि पतंग अग्निकौ तेजमयी तन । गिरत रूपकों देखि जरत अपने अविवेकन । तैसेही यह मीन मांसको लोभ लुभायौ । कण्टक जानत नांहि न्याय वह कण्ठ छिदायौ । हम जान बूझ कंटक सहत छांड सकत नहि जगतसुख । यह महा मोहमहिमा प्रबल देत दुहुनकों दोष दुख ॥ २० ॥

# ॥ अथ दुर्जनमुद्दिश्याह ॥

फलमलमशनाय स्वादु पानाय तोयं शयनमवनिपृष्ठे वाससी वल्कले च ॥ धनलवमधुपानभ्रान्तसर्वेन्द्रिया णामविनयमनुमन्तुं नोत्सहे दुर्जनानाम् ॥ २१ ॥

सं० टी०—येनकेनचिन्निर्वाहे धनिनां निरादरो न सोढव्य इत्याह । फलमिति । अशनाय भोजनाय फलमलं पर्य्याप्तमस्ति । पानाय स्वादु तोयमलम् । अवनिपृष्ठे शयनमलम् । वल्कले द्वे वाससी अलमित्येवंविधं सतां वृत्तमेवं सति धनस्य लवो लेशः सएव मधु मादकसुरा तेन भ्रान्तान्यस्थिराणींद्रियाणि येषां तेषां दुर्जनानामविनयं औद्धत्यलक्षणमपमानमनुगन्तुं स्वीकर्तुमहंतु नोत्सहे पामरः सहन्ति चेत्तर्हि सहंत्वहं तु न सहामीत्यर्थः । वसनं चाशनं धात्रा त्वक् फलं निर्मितं जलम् ॥ शयनं विपुलं भूमिर्दुर्वाक्यं किं वृथा सहे ॥ १ ॥ मालिनीवृत्तमिदम् ॥ २१ ॥

भा टी०—फल भोजन करनेकेलिये, मधुर जल पीनेको, पृथ्वी शयन करनेके लिये, और वृक्षकी छाल पहिरनेकेलिये यथेष्ट है फिर धनरूपी मदिरासे उन्मत्त दुर्जनोंके सन्मुख निरादर सहनकरनेकेलिये क्यों उत्सुक हों ॥ २१ ॥

दोहा—भूमिशयन वल्कल वसन, फल भोजन जल पान।
धनमद माते नरनकौ, कौन सहत अपमान ॥ २१ ॥

# ॥ मानितामुद्दिश्याह ॥

विपुलहृदयैर्धन्यैः कैश्चिज्जगज्जनितं पुरा विधृतमपरैर्दत्तं चान्यै र्विजित्य तृणं यथा ॥ इह हि भुवनान्यन्ये धीराश्चतुर्दश भुञ्जते कतिपयपुरस्वाम्ये पुंसां क एष मदज्वरः ॥ २२ ॥

सं० टी०—स्वल्पसाम्ये नराणां मदाधिक्यमनुचितमित्याह । विपुलहृदयैरिति । धन्यैः कृतपुण्यैर्विपुलहृदयैः सर्वज्ञबुद्धिभिः कैश्चिदेतज्जगत्पुरा जनितमुत्पादितमपरैर्विधृतं पालितमन्यैरुदारचित्तैरन्येभ्यो विजित्य तृणं यथा दीयते तथा दत्तं । इह हि अधुनाऽन्ये धीराः सन्तुष्टाश्चतुर्दश भुवनानि भुञ्जते पालयन्ति । एवं सति कतिपयानां द्वित्रिचतुर्णां पुराणां स्वाम्ये आधिपत्ये सति पुंसां क्षुद्राणामेष मदज्वरः कः विचारे सति कोऽप्यभिमानो मदेन कर्तुं नोचित इत्यर्थः । ते धन्या यैर्जगत् सृष्टं तेऽपि यैस्तत्तु पालितम् । यैर्जित्वा तृणवद्दत्तमन्ये मोध्याभिमानिनः ॥१॥ हरिणीवृत्तमिदम् ॥ २२ ॥

भा० टी०—कोईतो ऐसे सर्वज्ञ महात्मा हुए जिनने यह जगत् उत्पन्न किया, कोई ऐसे हुए जिनने इस जगत्को धारणकिया, कोई ऐसे हुए जिननें इस जगत्को तिनुकाके समान तुच्छ समझकर देडाला, और कोई ऐसे धीर हैं जो चौदह भुवनोंको

पालतेहैं, ( इनकोतौ कुछभी अभिमान न हुआ ) परन्तु देखो इन थोडेसे ग्रामोंका प्रभुत्व पाकर मनुष्यको कैसा अभिमान होताहै ॥ २२ ॥

छप्पय—भये जगतमें धन्य धीर जिन जगत रच्यौहै। काहू धारी शीश अजों वह नाँहि लच्यौ है। काहू दीनों दान जीत काहू वस कीनों। भुवन चतुर्दश भोग किह्यौ काहू जस लीनों। इमि अधिक एकसों एक भे तुम हो तिनमें तुच्छवित। दस वीस नगरके नृपति ह्वै यह मदको ज्वर तोहि कित ॥ २२ ॥

## ॥ निस्पृहाणामधिकारमाह ॥

त्वं राजा वयमप्युपासितगुरुप्रज्ञाभिमानोन्नताः ख्या-
तस्त्वं विभवैर्यशांसि कवयो दिक्षु प्रतन्वन्ति नः ॥ इ-
त्थंमानद नातिदूरमुभयोरप्यावयोरन्तरं यद्यस्मासु
पराङ्मुखोऽसि वयमप्येकान्ततो निस्पृहाः ॥ २३ ॥

सं० टी०—अथ यतिराज्ञोः संवादं कथयंस्तत्र तावत्स्पर्धिनं कंचिद्राजानमाह। त्वमिति द्वाभ्यां। हे मानद मानं ददातीति मानदः तत्संबुद्धौ हे मानद त्वं राजा राज्याभिमानी वयमपि उपासितः सेवितो यो गुरुस्तस्माल्लब्धा या प्रज्ञा सदसद्विवेकशालिनी बुद्धिस्तदभिमानेनोन्नता उन्नतिं प्राप्ताः। त्वं विभवैर्गजतुरगादिसम्पद्भिः ख्यातः प्रसिद्धः नोऽस्माकन्तु यशांसि कवयः परगुणवेत्तारो दिक्षु प्रतन्वन्ति विस्तारयन्ति। इत्थममुना प्रकारेण मानं द्यति खण्डयाति ददाति वा तत्संबोधनं हे मानद! आवयोरुभयोरन्तरं भेदोऽतिदूरं नास्ति तथापि यद्यस्मासु पराङ्मुखः उदासीनोऽसि तर्हिं वयमप्येकान्ततो नियमेन निस्पृहास्तवेच्छाशून्या इत्यर्थः। विरक्तो गुरुतो लब्ध्वा प्रज्ञां च भवतारिकाम्। राज्याभिमानिनं तुच्छं ज्ञात्वा भूमौ समाचारेत् ॥१॥ शार्दूलविक्रीडितं वृत्तमिदम् ॥ २३ ॥

भा० टी०—हे राजन्! तूं राज्याभिमानी है तौ हमभी गुरुकी सेवा करके उत्तम बुद्धि प्राप्तकर उच्चपदको प्राप्तहुएहैं, और तूं यदि अपने धनके कारण प्रसिद्ध है तौ देख हमारे यशोंका वर्णन कविगण देश देशान्तरोंमें कररहेहैं, इसप्रकार हे मानद!(मानके खंडन करनेवाले अथवा मान देनेवाले ) तुझमें और हममें बहुत अन्तर नहींहै इसपरभी तूं यदि हमसे मुख फेरता है तौ हम तुझसेभी अधिक निस्पृह हैं ॥२३ ॥

छप्पय—तुम पृथ्वीपति भूप भरे अभिमान विराजत। हम पाई गुरु गेह बुद्धि बल ताके गाजत। तुम धनसों विख्यात सुकवि गावत कछु पावत। हम यशसों विख्यात रहत निशि द्यौस पढावत।तुम हमहिं बीच अन्तर बडौ देखौ सोच बिचारचित। एतेपर जोमुख फेरहो तौ हमकों एकान्तहित।२३॥

अभुक्तायां यस्यां क्षणमपि न यातं नृपशतैर्भुवस्तस्या लाभे क इव बहुमानः क्षितिभुजाम् ॥ तदंशस्याप्यंशे तदवयवलेशेऽपि पतयो विषादे कर्तव्ये विदधति जडाः प्रत्युत मुदम् ॥ २४ ॥

सं॰ टी॰—अधुना स्वल्पनृपाणां वैराग्ये कर्तव्ये प्रत्युतासक्ता भवन्तीति तान्निन्दति । अभुक्तायामिति नृपाणां शतैरनेकैर्यस्यां भुवि अभुक्तायां भोगं विना स्थितायां क्षणमपि न यातं वेश्या यथाऽनेकैर्भुज्यते क्षणमात्रमपि भोगशून्या न तिष्ठति तथा राजभिः सदा भुज्यमानायास्तस्या भुवो लाभे इह जगति क्षितिभुजां राज्ञां बहुमानो वयमपि राजान इत्याधिको मानः कः कथमपि कर्तुं योग्यो न इत्यर्थः । तस्याः पृथिव्या अंशस्तदंशो जम्बुद्वीपं तस्याप्यंशो भरतखण्डरूपस्तस्य भरतखण्डस्यावयवः कश्चित् देशविशेषस्तस्यं लेशो द्वित्रिग्रामादिरूपस्तत्रापि यो विषादो दोषदृष्ट्यादिलक्षणस्तस्मिन् कर्तव्ये सति प्रत्युत तद्विपरीतं जडाः पतयो मूढा राजानो मुदं वयं भूपतयो धन्यभाग्या इत्यानंदं विदधति कुर्वन्ति । अहो तेषां मौढ्यमितिभावः । सदा भुक्तां भुवं दृष्ट्वा वेश्यामिव पुरानृपैः । तल्लेशलाभे यत्नं तु मन्दाः कुर्वन्ति नो बुधः ॥ १ ॥ शिखरिणीवृत्तमिदम् ॥ २४ ॥

भा. टी.—सैंकडों राजा जिसको अपनीश्मानकर चलेगये परन्तु जो किसीसेभी नहीं भोगीगई ऐसी पृथ्वीके लाभ होनेमे क्या राजाओंको अभिमान करना योग्य है। अब इसके अंशके अंशकोभी पाकर अपनेको भूपति मानतेहैं, देखो जो पश्चात्ताप करनेका विषय है उससे मूर्ख लोग उलटे आनन्दित होतेहैं ॥ २४ ॥

छप्पय—छिनहूं छांडी नांहि भोग भुगती वह भूपन । कुलटासी यह भूमि लाभ मानत महीप मन । ताहूको इक अंगके सु अङ्गहिको पावत । राखत हैं कारि कष्ट दिवस निशि चहुं दिशि धावत । आपनी ओरकी होत यह यातें पचि पचि रचि रहे । पछितैबो तजि जग विषयसों जड उलटे सुख गनि रहे ॥ २४ ॥

मृत्पिण्डो जलरेखया वलयितः सर्वोऽप्ययं न त्वणुरंगीकृत्य स एव संयुगशतै राज्ञां गणैर्भुज्यते ॥ नो दद्युर्ददतेऽथवा किमपि ते क्षुद्रा दरिद्रा भृशं धिक् धिक् तान्पुरुषाधमान्धनकणं वाञ्छन्ति तेभ्योऽपि ये ॥ २५ ॥

सं॰ टी॰—क्षुद्रा दरिद्रास्तावद्राजानस्तेभ्यो धनकणं ये वाञ्छन्ति तान् धिक्कारयति । मृत्पिण्ड इति । सर्वोऽप्ययं मृत्पिण्डो भूभागो जलरेखया समुद्ररूपया वलयितो वेष्टितोऽतो विचार्यमाणे पंचभूतेषु गगनादारभ्य वाय्वादीनां शतगुणन्यूनतया सर्वापेक्षया पृथिव्या न्यूनत्वान्ननु निश्चयेनाणुः सूक्ष्मस्तमेव मृत्पिण्डं राज्ञां गणाः संयुगानां संग्रामाणां शतैः स्वांशीकृत्य स्वस्वभागं कृत्वा भुञ्जते । भृशमति

शयेन क्षुद्रा दरिद्रास्ते. राजानः पूर्वं नो दद्युरथवेदानीं.. किमपि ददते तेभ्योऽपि ये मन्दा धनलवं वाञ्छन्ति तान् पुरुषेष्वधमान् धिक् धिक् । लघ्वीं पृथ्वीं संमुद्दिश्य युद्धं कृत्वा सहस्रशः । नृपैः सा भुज्यते तेभ्यो धनं वाञ्छन्ति तांस्तु धिक् ॥१॥ शार्दूलविक्रीडितं वृत्तमिदम् ॥ २५ ॥

भा. टी.–यह सम्पूर्ण पृथ्वी मिट्टीका एक बहुत छोटा पिण्ड है जो चारोंओर समुद्ररूपी पानीकी रेखासे घिराहुआ है, फिर मृत्तिकाके इसी छोटेसे पिण्डको अनेक राजागण आपसमें युद्ध कर छोटे छोटे भागोंपर अपना स्वत्व जमाकर राज करतेहैं, ऐसे क्षुद्र और दरिद्री राजाओंको दानी कहकर परीक्षा करतेहैं कि देखें अबभी दान देतेहैं वा नहीं इसतरह इन नीचोंसे धनकी आशा करनेवाले अधम पुरुषोंको धिक्कार है ॥ २५ ॥

छप्पय–इक मृतिकाको पिण्ड रहत जलमांहि निरन्तर । सोऊ सबही नहि तनकसौ ताहूमें डर । करत हजारन जंग भूप तब भोग करत वित॥ मिटत आपनी प्यास दानकौ होत कहा चित । ऐसे दरिद्र दुखसों भरे तिनहूं सो जो चहत धन । धिक्कार जन्म वा अधमको सदा सर्वदा हीन मन ॥ २५ ॥

## ॥ दुर्भगसेवकस्य वाक्यमाह ॥

**न विटा न नटा न गायका न परद्रोहनिबद्धबुद्धयः ॥**
**तव संसदि के वयं विभो स्तनभारोन्नमिता न योषिताः ॥२६॥**

सं० टी०—न नटा इति । हे नृप । तव संसदि सभायां ये योग्यास्तेषु वयंकेन केऽपि भवामः। एतदेवाह न नटा नर्तका न विटाः प्रस्तावोक्तिभिः प्रसादकरा न। नापि गायकाः गानकुशला । नापि परद्रोहे निबद्धा बुद्धिर्यैरेतादृशाः पिशुना इत्यर्थः । न च स्तनभारेणोन्नमितानम्रीभूताः स्त्रियो वयं भवामः। एते मदुक्तास्तव प्रिया भवन्ति तेषां मध्ये वयं सन्यासिनः न केऽपीत्यर्थः । अतस्तव प्रीतिरस्मासु कथं भवेदिति भावः। नटादिसक्तं राजानं कुकथाश्रवण प्रियम् ॥ स्वात्मानं तदनर्हं च पश्यन्यातिर्व्यतर्कयत् ॥ १ ॥ वैतालीयं वृत्तमिदम् ॥ २६ ॥

भा. टी.-हे राजन् ! न तौ हम नट हैं, न हम विट हैं, गवैये हैं, न परद्रोह करनेकी हमारी इच्छा है, और न हम स्तनोंके भारसे नमींहुई स्त्रियां हैं, फिर हमको तेरी सभामें कौन पूछेंगा ॥ २६ ॥

दोहा–नट भट विट गायन नहीं, नहिं वादिनके माहिं ।
कौन भांति भूपति मिलन, तरुणीभी हम नाहिं ॥ २६ ॥

**पुरा विद्वत्तासीदुपशमवतां क्लेशहतये गता कालेनासौ विषयसुखसिद्ध्यै विषयिणाम् ॥ इदानीं सम्प्रेक्ष्य क्षिति**

**तलभुजः शास्त्रविमुखानहो कष्टं साऽपि प्रतिदिन मधोऽधः प्रविशति ॥ २७ ॥**

सं॰ टी॰—अधुना कालप्रभावात् सद्विद्याया उत्तरोत्तरं ह्रासं पश्यन्ननुतपति । पुरेति । अग्रे विदुषो भावो विद्वत्ता पाण्डित्यममलिनधियां न कामक्रोधादिना मलिना धीर्येषां तेषां मुमुक्षूणां क्लेशहतये देहाद्यनात्मसु आत्मभ्रान्त्यादिनिवृत्तये आसीदभवत् । असौ विद्वत्ता कालेन पश्चात् किंचित्समयेन विषयिणां कामिनां यद्विषयसुखं तत्सिद्ध्यै गता प्राप्ता । इदानीम्वर्तमानकाले क्षितितलभुजो राज्ञः शास्त्रविमुखान् शास्त्रश्रवणरुचिवर्जितान् सम्प्रेक्ष्य दृष्ट्वा साऽपि प्रतिदिनमुत्तरोत्तरमधोऽधो नीचैर्नीचैः प्रविशति विषयसुखमपि न साधयत्यहो दौर्भाग्यं लोकस्येत्यर्थः । विद्वत्ता पुरतस्त्वासीत् सुधियां क्लेशहारिणी । ततोऽभूद्विषयप्राप्त्यै याधुना नास्ति साऽपि वै । शिखरिणीवृत्तमिदम् ॥ २७ ॥

भा. टी.—पहिले तौ विद्या पण्डितोंके क्लेश दूर करनेके निमित्त, थी फिर कुछ समय व्यतीत होनेपर वह कामीजनोंकी विषयसुखसिद्धीका हेतु हुई, और अब इससमयमें तौ वह विद्याभी राजाओंको शास्त्रविमुख देखकर प्रतिदिन अधोगतिको प्राप्त होतीजातीहै ॥ २७ ॥

दोहा—विद्या दुखनाशक हती, फेर विषय सुख दीन ।
जात रसातलकों चली, देखि नृपन्ह मतिहीन ॥ २७ ॥

## ॥ साहंकारं पुरुषमुद्दिश्याह ॥

**स जातः कोऽप्यासीन्मदनरिपुणा मूर्ध्नि धवलं कपालं यस्योच्चैर्विनिहितमलंकारविधये ॥ नृभिः प्राणत्राणप्रवणमतिभिः कैश्चिदधुना नमद्भिः कः पुंसामयमतुलदर्पज्वरभरः ॥ २८ ॥**

सं॰ टी॰—अधुना प्राणपोषकमूढजनकृतप्रणामेनाहं कृतार्थ इत्यभिमानो नोचित इत्याह । स जात इति । पुरा स प्रसिद्धो जात उत्पन्नः सन् कोऽप्यचिन्त्यमहिमाऽऽसीत् । यस्य धवलमुज्ज्वलं कपालं शिरोऽस्थि मदनरिपुणा महादेवेनालङ्कारविधये शोभार्थं मूर्ध्नि स्वमस्तके उच्चैरादरपूर्वकं यथास्यात्तथा विशेषेण निहितं स्थापितम् । अधुना प्राणानां त्राणे रक्षणे प्रवणा प्रवाहवती मतिर्येषां तैः कैश्चिन्नृभिर्नमद्भिः सद्भिः पुंसां धनविद्याभासवतामयं प्रत्यक्षोऽतुलोऽनुपमो दर्पोऽभिमानः स एव ज्वरस्तस्य भरो भारः कः वयमीश्वरा यानेते नमन्तीत्यभिमानः कर्तुमयोग्य इत्यर्थः । शिखरिणीवृत्तमिदम् ॥ २८ ॥

भा. टी.—पहिले तौ ऐसे मनुष्य उत्पन्न हुए जिनके उज्वलकपालोंकी मालाको शिवजीने शोभाकेलिये अपने मस्तकपर धारणकिया, अब देखो अपने प्राण पोषणकरनेवाले थोडेसे मनुष्योंद्वारा प्रतिष्ठा पाकर मनुष्य अभिमानरूपी ज्वरसे कैसे भारी होरहे हैं ॥ २८ ॥

दोहा—ऐसे हू जगमें भये, मुण्डमाल शिव कीन ।
धनलोभी नर नवतलखि, तुमको मद ज्वर दीन ॥ २८ ॥

अर्थानामीशिषे त्वं वयमपि च गिरामीश्महे यावदित्थं शूरस्त्वं वादिदर्प्पज्वरशमनविधावक्षयं पाटवं नः ॥ सेवन्ते त्वां धनाढ्या मतिमलहतये मामपि श्रोतुकामा मय्यप्यास्था न चे त्त्वयि मम सुतरामेष राजन् गतोऽस्मि ॥ २९ ॥

सं० टी०-अर्थानामिति । हे राजन् ! त्वमर्थानां भोगसाधनद्रव्याणामीशिषे ईशिता भवासि वयमपि च गिरां वाणीनां ईश्महे ईशितारः स्मः । त्वं शूरोऽसि नोऽस्माकमपि वादिनां यो दर्पोऽहङ्कारः स एव ज्वरस्तस्य शमनविधौ शान्तिकरणे अक्षयं पाटवं कुशलत्वमस्ति । धनान्धा धनप्राप्तये गतविवेकास्त्वां सेवन्ते मतिमलहतये बुद्धिस्थाज्ञाननाशायोपनिषदादिशास्त्रं श्रोतुकामा मामपि सेवन्ते । यावदस्मादित्थमुक्तेन प्रकारेण समत्वेऽपि मयि चेद्यदि हे राजंस्तवास्था विश्वासो न तर्हि त्वयि मम सुतरामास्था नेत्येपरमत्र प्रत्यक्षोऽहं गतोऽस्मि गच्छामीत्यर्थः । नृपस्य यतिसाम्येऽपि भवत्येका विशेषता ॥ राजानो नरकं यान्ति यति विष्णोः परं पदम् ॥ १ ॥ स्रग्धरावृत्तमिदम् ॥ २९ ॥

भा० टी०-हे राजन् ! यदि तूं धनके कोषका स्वामी है तो हमभी वाणीके ईश्वर हैं. तूं युद्ध करनेमें शूर है तौ हम वादियोंके अहंकाररूपी ज्वरके नाशकरनेमें कुशल हैं. तुमको धनार्थीलोग सेवनकरतेहैं तौ हमकोभी बुद्धिकी मलीनता दूर करनेकेलिये शास्त्रश्रवणकरनेकी इच्छावाले मनुष्य सेवनकरतेहैं, इसप्रकार समता होनेपरभी हे राजन् ! यदि तुह्मारी श्रद्धा हममें नहीं है तौ हमारीभी तुममें कुछ आस्था नहींहै, लो अब हम जातेहैं ॥ २९ ॥

छप्पय-तुम अवर्नाके ईश ईश हमहूं बाणीके । तुम हौरणमें धीर वीर गाढे अति जीके । त्यौंही विद्यावाद करत हमहूं नहिं हारे । प्रतिपक्षाके मान मार अपने विस्तारे । सब लोभी नर सेवत तुह्मे हमको सिव श्रोता भले । तुमकों न हमारी चाह तौ हमहूं ह्यांसे उठ चले ॥ २९ ॥

## ॥ निर्ममतास्वरूपमाह ॥

अतिक्रान्तः कालो लटभललनाभोगसुभगो भ्रमन्तः श्रान्ताः स्मः सुचिरमिह संसारसरणौ ॥ इदानीं स्वःसिन्धोस्तटभुवि समाक्रन्दनगिरः सुतारैः फूत्कारैः शिव शिव शिवेति प्रतनुमः ॥ ३० ॥

सं० टी०-अधुना संसारे उत्पन्नग्लानिर्गङ्गातीरे संप्रेम शिवाह्वानं प्रतिजानीते । अतिक्रान्त इति । हे सखे ! लटभललनाभोगसुभगः लटभाः प्रामलावण्या या ललनाः स्त्रियस्तासां भोगेन सुभगो मनोज्ञो यः कालः सोऽतिक्रान्त गतः वयं तु संसारसरणौ जननमरणलक्षणे संसारमार्गे सचिरं बहुकालं भ्रमन्तः सन्तः श्रान्ताः

ग्लानिं प्राप्तास्म तस्मादिदानीं स्वःसिन्धोः स्वर्गङ्गायास्तटभुवि तीरभूमौ सुतारैः फूत्कारैः समाक्रन्दनागिरः उच्चस्वरसहितैरूर्ध्वश्वासैः सह सप्रेमा गद्गदा गीर्येषां तादृशः सन्तो वयं हे शिव हे शिव हे शिवेत्यमुना प्रकारेण शिवेत्युत्तमं नाम प्रतनुमो विस्तारयामो न पुनः संसारे भोगदृष्टिं कुर्म इत्यर्थः । मानुष जन्म सम्प्राप्य भोगांस्त्यक्त्वाऽथ दूरतः । गङ्गातीरे शिवाव्हानं कुर्यात् सप्रेमविव्हलः ॥ १ ॥ शिख- रिणीवृत्तमिदम् ॥ ३० ॥

भा० टी०–हे सखे ! सुन्दर २ स्त्रियोंके संग भोग करनेमें सुभग यौवनकाल तौ व्यतीत होगया और हम इस संसारसरणिमें भ्रमणकरतेहुए बहुत थकगयेहैं, अब तौ श्रीगंगाजीके तटपर उच्चस्वरसे प्रेमपूर्वक शिव २ ऐसा कहतेहुए जप करेंगे और पुनः संसारमें भोग दृष्टि न करेंगे ॥ ३० ॥

दोहा–रमणकाल यौवन गयौ, थक्यौ भ्रमत संसार ।
देहुँ गंगतट शेषवय, शिव शिव जपत विसार ॥ ३० ॥

**मानें म्लायिनि खण्डिते च वसुनि व्यर्थं प्रयातेऽर्थिनि क्षीणे बन्धुजने गते परिजने नष्टे शनैर्यौवने ॥ युक्तं केवलमेतदेव सुधियां यज्जन्हुकन्यापयःपूतग्रावगिरीन्द्र कन्दरदरीकुञ्जे निवासः क्वचित् ॥ ३१ ॥**

सं० टी०–सर्वहानौ गङ्गातीरगिरिगुहानिवास एवोचित इत्याह । माने इति । माने सत्कारे म्लायिनि क्षीणे सति, वसुनि धने च खण्डिते नष्टे सति, अर्थिनि याचके व्यर्थे स्वगृहान्निराशे प्रयाते गते सति, बन्धुजने पुत्रभार्य्यादौ क्षीणे नाशं प्राप्ते सति, परिजने भृत्यवर्गे वेतनाभावेन गते निर्गते सति, यौवने शनैर्नष्टे सति, तदा सुधियां प्रज्ञानां केवलमेतदेव युक्तम् । किमेतज्जन्हुकन्या श्रीगंगा तस्या पयसा पूता ग्रावाणः शिला यस्य तादृशो यो गिरीन्द्रो हिमालयस्तस्य कन्दरे महागर्ते या दरी स्वल्पो गर्तस्त- स्याः कुञ्जे लतापिहितस्थाने क्वचिन्निवासः कर्तव्य इति । सम्माने गलिते नष्टे यौवने विलयंगते । परिवारे शिवः सेव्यो गंगातीरनिवासिना ॥ १ ॥ शार्दूलविक्रीडितं वृत्तमिदम् ॥ ३१ ॥

भा० टी०–इस समय जब मान नष्ट होगयाहै धनका नाश होगयाहै, याचकगण विमुख होनेलगेहैं, भ्राता स्त्री पुत्रादि नष्ट होगयेहैं, और शनैः२ युवावस्थाभी नष्ट होती जातीहै, तौ अब बुद्धिमान मनुष्योंको उचित है कि श्रीगंगाजीके जलसे पवित्रकीहुई हिमालय पर्वतकी किसी गुहामें निवास करें ॥ ३१ ॥

दोहा–गयौ मान यौवन सुधन, भिक्षुक जात निराश ।
अब तौ मोको उचित यह, श्रीगङ्गा तट बास ॥ ३१ ॥

**परेषां चेतांसि प्रतिदिवसमाराध्य बहुधा प्रसादं किं नेतुं विशसि हृदय क्लेशकलिलम् ॥ प्रसन्ने त्वय्यन्तः स्वयमुदितचिन्तामणिगुणे विमुक्तः संकल्पः किमभि- लषितं पुष्यति न ते ॥ ३२ ॥**

सं० टी०—चित्तं प्रायो बोधयन् हे चेतः ! पराराधनमुत्सृज्य स्वशुद्धौ यत्नो विधेय इत्याह। परेषामिति। हे हृदय! परेषामन्येषां धनमदान्धानां चेतांसि प्रतिदिवसं बहुधा नानाप्रकारेणाराध्य प्रसादं परेषां प्रसन्नतां नेतुं प्रापयितुं किं कस्मात् क्लेशलक्षणं कललं पंकं विशसि तत्र मग्नो भवसि। ननु परेषां प्रसादे ते ममाभिलषितं पूरयिष्यन्तीति तत्राह। प्रसन्न इति। अन्तः स्वात्मन्येव स्वयं स्वेनैव त्वयि प्रसन्ने सति ते तव विविक्तः शुद्धः सङ्कल्पस्तेऽभिलषितमीप्सितं किं न पुष्यति पुष्टं न करिष्यति। कथंभूते त्वयि उदितं उत्पन्नश्चिन्तामणेर्गुणः सर्वेप्सितपूरकत्वलक्षणो यस्मिंस्तस्मिन् स्वयं त्वयि प्रसन्ने पदार्थ चतुष्टयं मिलिष्यतीति भावः। यथान्येषां प्रसादाय यतते मानवोऽनिशम्। तथा स्वान्तःप्रसादाय यतते किं न मूढधीः॥ १॥ शिखरिणीवृत्तमिदम्॥ ३२॥

भा०टी०—हे मन! नानाप्रकारसे प्रतिदिन पराये चित्तको प्रसन्न करनेकेलिये तूं क्यों क्लेशरूपी कीचडमें फँसताहै, अपनेहीमें प्रसन्न होकर जब तूं चिंतामणिकेसे गुण प्रगटकरेगा अर्थात् शांति सन्तोष आदि गुण ग्रहण करेगा तौ क्या तेरे शुद्ध वाञ्छित संकल्प पूरे न होंगे॥ ३२॥

दोहा—तूही रीझत क्यों नहीं, कहा रिझावत और।
तेरेही आनन्दसे चिन्तामणि सब ठौर॥ ३२॥

## ॥ अथ भोगपद्धतिः॥

भोगे रोगभयं कुले च्युतिभयं वित्ते नृपालाद्भयं मौने
दैन्यभयं बले रिपुभयं रूपे जरायाः भयम्॥ शास्त्रे वा-
दभयं गुणे खलभयं काये कृतान्ताद्भयं सर्वं वस्तु भया-
न्वितं भुवि नृणां वैराग्यमेवाभयम्॥ ३३॥

सं० टी०—इदानीं वैराग्यवतोऽभयं प्रतिपादयति। भोग इति। भोगे सति भोगिनो रोगाद्भयं भवति। कुलीनस्य कुलात् प्रच्युतिर्माभूदिति भवतीत्यादि सर्वं वस्तु भयावहं भयप्रापकं वैराग्यमेवाभयं वैराग्यवतो भयं कुतोऽपि नास्तीत्यर्थः। देहाभिमानयुक्तस्य भयमस्ति तृणादपि। सर्वस्मात् किं विरक्तस्य ब्रह्मणोऽपि भयं भवेत्॥ १॥ शार्दूलविक्रीडितं वृत्तमिदम्॥ ३३॥

भाषा टीका—भोगीको रोगका भय है, कुलीनको क्षतिका भय है, धनीको राजाका भय है, मौनीको दीनताका भय है, बलवान्को शत्रुका भय है, रूपको जरावस्थाका भय है, शास्त्रमें वादविवादका भय है, गुणवान्को दुर्जनका भय है, शरीरको मृत्युका भय है, इसप्रकार सम्पूर्ण वस्तु भयान्वित है, अभय तो केवल एक वैराग्यही है॥ ३३॥

छप्पय—बहुत भोगकौ संग तहां इन रोगनकौ डर। धनहूंकौ डर भूप अग्नि अरु त्यौंही तस्कर। सवामें भय स्वामि समरमें शत्रुनकौ

भय। कुलहूमें भय नारि देहकौ काल करत छय। अभिमान डरत अपमानसौ गुन डरपत सुन खलशबद । सब गिरत परत भयसों भरे अभय एक वैराग्यपद॥ ३३ ॥

अमीषां प्राणानां तुलितबिसिनीपत्रपयसां कृते किन्नास्माभिर्विगलितविवेकव्यवसितम् ॥ यदाढ्यानामग्रे द्रविणमद निःशङ्कमनसां कृतं वीतव्रीडैर्निजगुणकथापातकमपि ॥ ३४ ॥

सं॰ टी॰—क्षणभंगुरप्राणपोषणार्थं मूढानामग्रे यत्कर्तुमयोग्यं तदपिकृतमित्यनुतपन्नाह। अमीषामिति। तुलितमुपमितं बिसिनी कमलिनी तत्पत्रस्थं पयः उदकं यैस्तेषां क्षणभंगुराणाममीषां प्राणानां कृते पालनार्थं विगलितो विनष्टो विवेको येषां तैरस्माभिः किं न व्यवसितं कृतं यत्कर्तुमयोग्यं तदपि कृतमित्यर्थः। तदेव दर्शयति यदित्यर्द्धेन। यद्यस्मात् द्रविणं धनं तस्य मदेन निःशंकमिदं वक्तव्यं न वेति शंकाशून्यं मनो येषां तेषामाढ्यानां धनिनामग्रे वीता गता व्रीडा लज्जा येषां तैरस्माभिर्निजाः स्वकीया ये गुणास्तेषां कथनरूप यत्पातकं तदपि हे आशे! तव प्रभावात् कृतमन्यस्य पातकस्य का वार्तेत्यर्थः। क्षणभंगुरप्राणानां प्रीणनाय विवेकिनाम्॥ पुरो निजगुणालापं कृतवान् किमित्याशया ॥ १ ॥ शिखरिणीवृत्तमिदम् ॥ ३४ ॥

भा॰ टी॰—कमल पत्रपर स्थित जलके बिन्दुके समान चञ्चल प्राणोंके लिये विवेक त्याग कर हमने क्या क्या नहीं किया; अर्थात् जो कुछ अयोग्य कार्य थे; वह सबभी हमने किया। हेआशे! जब धनके मदसे निःशंकहो मनुष्योंके आगे लज्जा त्यागकर हमने स्वगुणकथनरूप पातक कर लिया तो और पातकोंको क्या कहना ॥ ३४ ॥

कुण्डलिया—जैसे पङ्कज पत्रपर जल चञ्चल ढुरि जात। त्यौंही चञ्चल प्राणहू तजि जैहैं निजगात। तजि जैहैं निजगात बात यह नीके जानत। तेहूँ छांड विवेक नृपनकी सेवा ठानत। निजगुण करत बखान निलजता उघरी ऐसें। भूलगयौ सतज्ञान मूढ अज्ञानी जैसें॥ ३४ ॥

..तः कष्टमहो महान्स नृपतिः सामन्तचक्रं च तत्पार्श्वे तस्य च सापि राजपरिषत्तश्चन्द्रबिम्बाननाः॥उद्रिक्तः स च राजपुत्रनिवहस्ते वन्दिनस्ताः कथाः सर्वं यस्य वशादगात्स्मृतिपदं कालाय तस्मै नमः ॥ ३५ ॥

सं॰ टी॰—सर्वमिदं कालाधीनं बुद्ध्वा नाशशीलनृपाणां सेवनं त्यक्त्वा केवलं भगवत्सेवनमेव कार्यमिति सूचयन्नाह। भ्रातरिति। तस्मै कालाय नमः। अहो इत्याश्चर्ये। भो भ्रातः। कष्टं विलोक्यताम्। क कष्टं स एव महान्नृपतिः [illegible] पार्श्वे सापि राजपरि-

षत्सापि राजसभा चान्यत्ताश्चान्द्रबिम्बाननी नार्यः । चान्यत् स राजपुत्रनिवहः नृपकुमारसमूहः । कथंभूतो राजपुत्रनिवहः उद्रिक्तः सदर्पः चान्यत्ते बन्दिनः भद्राश्चान्यास्ताः कथाः यस्य वशात् तत्सर्वं पूर्वोक्तं स्मृतिपदमगात् कथाशेषं जगाम् । कालाय तस्मै नमः । यतः सर्वं क्षीयते परन्तु कालो न क्षीयते । शार्दूलविक्रीडितं वृत्तमिदम् ॥ ३५ ॥

भा० टी०–पहिले यहां कैसा उत्तम राजा था, उसके समीप सेनाओंका समूह कैसा था, उसकी राजसभा कैसी थी, कैसी कैसी चन्द्रमुखी स्त्री थीं, राजाके पुत्रोंका समूह कैसा था, कैसे बन्दीगण थे, और वे कैसी अच्छी कथा कहते थे, व सब अब जिस कालके वशीभूत होगये उस कालको हम नमस्कार करतेहैं ॥ ३५ ॥

दोहा–नृपति सैन सम्पति सचिव, सुत कलत्र परिवार ।
करत सबनको स्वप्नसम, नमो काल करतार ॥ ३५ ॥

## ॥ पुनः कालमुद्दिश्याह ॥

वयं येभ्यो जाताश्चिरपरिगता एव खलु ते समं यैः संवृद्धाः स्मृतिविषयतां तेऽपि गमिताः ॥ इदानीमेते स्मः प्रतिदिवसमासन्नपतनाद्गतास्तुल्यावस्थां सिकतिलनदीतीरतरुभिः ॥ ३६ ॥

सं० टी०—अधुना स्वजनकान् स्वसखींश्च स्वात्मना सह शोचति । वयमिति । येभ्यः पित्रादिभ्यो वयं जाता उत्पन्नास्ते चिरं बहुकालेन परिगता नष्टा एवं खलु । यैः समं सार्द्धं संवृद्धा वृद्धिं प्राप्तास्तेऽपि स्मृतिविषयतां गमिताः प्राप्ताः । इदानीमवशिष्टा एते ये वयं तेऽपि प्रतिदिवसं दिनं दिनं प्रति आसन्नं प्राप्तं पतनमायुःक्षयो येषां तथा सन्तः सिकता विद्यते यस्यां सा सिकतिला नदी तस्यास्तीरतरुभिस्तत्वृक्षैस्तुल्यावस्थां पतनोन्मुखत्वेन साम्यतां गताः स्मः । यद्वा सिकताप्रधानो देशः सिकतिलस्तस्य नदीतीरतरुभिरिति सम्बन्धः । येभ्यो जनिरभूदद्य गतास्ते पितरो मम । आसन्नं मरणं मेऽपि शम्भो त्वं शरणं भव ॥ १ ॥ शिखरिणीवृत्तमिदम् ॥ ३६ ॥

भा० टी०–जिनसे ( मातापितासे ) हम उत्पन्नहुएथे उनको तौ गये बहुतकाल व्यतीत होगया, और जिनके संग हम बडे हुए वेभी स्मरणपदमें गये अर्थात् वेभी मृत्युको प्राप्तहोगये, और अब हम जो शेषहैं सो हमभी प्रतिदिन मृत्युके निकट पहुंचते जाते हैं, और हमारी दशा नदीकिनारे वालूमें उत्पन्नभये वृक्षके समानहोरहीहै ॥३६॥

छप्पय–जो जन्मे हम सङ्ग उतौ सब स्वर्ग सिधारे । जो खेले हम संग काल तिनहूं कहँ मारे । हमहू जर जर देह निकट ही दीसत मरिवौ । जैसे सरितातीरवृक्षको तुच्छ उखरिवौ । अजहू नहिं छौंडत मोह मन उमग उमग उरझो रहत । ऐसे अचेतके संगसों न्याय जगतकी दुख सहत ॥ ३६ ॥

यत्रानेके क्वचिदपि गृहे तत्र तिष्ठत्यथैको यत्राप्येकस्त-
दनु बहवस्तत्र नैकोऽपिचान्ते ॥ इत्थं चेमौ रजनिदि-
वसौ दोलयन् द्वाविवाक्षौ कालः काल्या सह बहुकलः
क्रीडति प्राणसारैः ॥ ३७ ॥

सं० टी०—अधुना कालस्याक्षक्रीडां दर्शयति । यत्रेति । यस्मिन् क्वचिदपि गृहे अनेकैः पुत्रकलत्रादयो बहव आसन्नथ तदनु एकास्तिष्ठति । यत्राप्येकस्तदनु बहवः पुत्रपौत्रादयो भवन्ति यत्र बहवस्तत्र चान्ते एकोऽपि नैव तिष्ठतीत्थममुना प्रकारेणेमौ रजनिदिवसावक्षाविव हस्तिदन्तानिर्मितक्रीडनकविशेषाविव दोलयन् भ्रामयन् कालो बह्वीः कला ज्वरोदरपीडादिव्याजलक्षणा विद्या यस्य स काल्या स्वमारिकशक्त्या सह प्राणिन एव साराःसारिकास्ताभिः क्रीडति सततं खेलतीत्यर्थः । यद्गृहे बहवस्तत्र चैकास्तिष्टति देहभृत् । यत्रैको बहवस्तत्र कालस्य गतिरीदृशी ॥ ॥ १ ॥ मन्दाक्रान्तावृत्तमिदम् ॥ ३७ ॥

भा० टी०—जिस किसी घरमें अनेक पुत्रपौत्रादि थे वहां एकही दृष्टि पडता है और जहां एक था, वहां अनेक दिखाई पडते हैं, और फिर वहां अन्तमें एकभी न रहा, इसप्रकार इस संसाररूपी चौपडमें रात्रि दिनरूपी पासोंको लुढका लुढका कर और प्राणियोंको गोट बनाकर काल पुरुष अपनी कालित्व शक्ति साथ खेल रहाहै ॥ ३७ ॥

छप्पय—बहुत रहत जिहि धाम तहां एकहिको राखत । एक रहत जिहि ठौर तहां बहुतहिं अभिलाषत । फेर एकहू नांहि करी तहँ राज दुराजी । कालीके संग काल रची चौपडकी बाजी । दिनरात उभय पासालियें इह बिधिसों क्रीडा करत । सब प्राणी सोवत सार ज्यौं मिलत चलत बिछुरत मरत ॥ ३७ ॥

तपस्यन्तः सन्तः किमधिनिवसामः सुरनदीं गुणोदा-
रान् दारानुत परिचरामः सविनयम् ॥ पिबामः शास्त्रौ
घानुतविविधिकाव्यामृतरसान्न विद्मःकिं कुर्मःकतिपय
निमेषायुषि जने ॥ ३८ ॥

सं० टी०—इदानीमायुषोऽल्पत्वात् कर्तव्यानां बाहुल्यात् संशयापन्नःस्वदृष्टान्तेनाह । तपस्यन्त इति कतिपयाः स्वल्पा निमेषा आयुर्यस्य तादृशे जने जायते इति जनो देहस्तास्मिन् सति वयं किं कुर्म इति । न विद्मो न जानीमः । किं तपस्यन्तः तपः कुर्वन्तः सन्तो गङ्गामधिश्रित्य निवासामो निवासं कुर्मः । उताथवा गुणैः सुचरितैरुदारान् श्रेष्ठान् दारान् युवतीः सविनयं विनयसहितं परिचरामः सेवयामः उताथवा विविधं नानाविधं काव्यं कवीनां क्रान्तदर्शिनां व्यासवसिष्ठादीनां तात्पर्यविषयीभूतं यदमृतं स एव रसो येषु तान् शास्त्रौघान् शास्त्रसमूहान् पिबामो विचार्य्य धारयाम इत्येवं वयं संशयापन्ना इत्यर्थः ॥ लोके कर्तव्यबाहुल्यान्नानाशीः पुरुषो भ्रमन् । नैश्चल्यं न तु देहादौ पश्यंश्चिन्तातुरो भवेत् ॥ १ ॥ शिखरिणीवृत्तमिदम् ॥ ३८ ॥

भा० टी०-हम नहीं जानतेहैं कि इस निमेषमात्र स्थिररहनेवाली देहसे क्या करें क्या हम तप करतेहुए गङ्गातटपर वास करें । अथवा क्या हम गुणवती स्त्रियोंकी विनय पूर्वक सेवा करे ? अथवा क्या हम व्यासवसिष्ठ आदि कवियोंके अमृतरसरूपी विविध काव्यों और शास्त्रोंका अध्ययन करें ॥ ३८ ॥

दोहा-तप तीरथ तरुणी रमण, विद्या बहुत प्रसङ्ग ॥
कहा कहा मन रुचि करै, पायौ तन क्षण भङ्ग ॥ ३८ ॥

गंगातीरे हिमगिरिशिलाबद्धपद्मासनस्य ब्रह्मध्याना-
भ्यसनविधिना योगनिद्रां गतस्य ॥ किं तै र्भाव्यं मम
सुदिवसैर्यत्र ते निर्विशंकाः कण्डूयन्ते जरठहरिणा
शृंगमङ्गे मदीये ॥ ३९ ॥

सं० टी०—इदानीं शिष्टानां कर्तव्यं सूचयन् निर्विकल्पसमाधियुक्तान् दिवसान् प्रार्थयति । गंगातीरे इति । मम तैः सुदिवसैः किमिति सम्भावनायां भाव्यं कदा ते भविष्यन्तीति भावः ॥ यत्र येषु दिवसेषु जरठहरिणा वृद्धमृगा निर्विशंका गतभयाः स्वशृंगं मदीयेऽङ्गे शरीरे कण्डूयन्ते संघर्षयन्ति शृंगघर्षणलीलां करिष्यन्तीत्यर्थः । कथंभूतस्य मम गंगातीरे या हिमगिरेर्हिमालयस्य शिला तस्यां बद्धं पद्मासनं येन तस्य । पुनः कथंभूतस्य ब्रह्मणोध्यानं तत्र प्रत्ययैकतानतारूपं तस्याभ्यसनमभ्यासस्तस्य यो विधिर्गुरूपदिष्टप्रकारस्तेन योगश्चित्तवृत्तिनिरोधस्तद्रूपा या निद्रा तां गतस्य प्राप्तस्येत्यर्थः । गंगातीरे कुटी कृत्वा तत्रापि गिरिसन्निधौ । वसन् शिवं हृदि ध्यायेन्मृगशृंगैश्च घर्षितः । मन्दाक्रान्तावृत्तमिदम् ॥३९॥

भा० टी०-मेरे वह अच्छे दिन कब आवेंगे जब कि मैं गङ्गातटपर हिमालयपर्वतकी शिलापर पद्मासन लगाकर बैठूंगा, ब्रह्मध्यानमें लीन हो विधिपूर्वक नेत्र मूंद योगनिद्राको प्राप्तहोऊँगा और निःशंक होकर वृद्धहारिण मेरे देहमें अपने सींगोंको रगड़ कर खुजली मिटावेंगे ॥ ३९ ॥

दोहा-ब्रह्मध्यान धर गंगतट बैठूंगो तज संग ।
कबधौं वह दिन होयगो, हिरण खुजावत अंग ॥ ३९ ॥

स्फुरत्स्फारज्योत्स्नाधवलिततले क्वापि पुलिने सुखासी-
नाः शान्तध्वनिषु रजनीषु द्युसरितः॥भवाभोगोद्विग्नाः
शिव शिव शिवेत्यार्तवचसा कदा स्यामो हर्षोद्गतबहुल-
बाष्पप्लुतदृशः ॥ ४० ॥

स० टी०-शोभनं स्वमनोरथं दर्शयति । स्फुरदिति । स्फुरन्ती प्रकाशमाना या स्फारा बहुला ज्योत्स्ना चन्द्रिका तया धवलितं तलं यस्य तस्मिन् द्युसरिता दिवः सरित् गङ्गा तस्याः क्वाऽपि पुलिने कस्मिंश्चिदपि तटे शान्तो निवृत्तो ध्वनिः शब्दो यासु तासु रजनीषु सुखासीना वयमीदृशः कदा

स्यामो भवेम इत्यन्वयः । कीदृशाः भवस्य संसारस्याभोगो विषयसुखं तस्मादुद्विग्ना विरक्ताः सन्तः हे शिव हे शिव हे शिवेत्यार्तं पीडितं वचो येषामेतादृशास्तथा हर्षेणोद्गतं निःसृतं यद्बहुलं बाष्पमश्रुजलं तेन प्लुते व्याप्ते दृशौ येषां तादृशा इति । संस्फुरत्कौमुदीयुक्ते गङ्गातीरे वसन् शिवम् । संस्मरन्सर्वशान्तात्मा कालं निन्यात्पुमान्सुधीः ॥ १ ॥ शिखरिणीवृत्तमिदम् ॥ ४० ॥

भा० टी०—प्रकाशित चांदनीसे जिसकी तलहटी श्वेत होरही है ऐसी गंगाजीके किसी पुलिनमें हम सुखपूर्वक कब बैठेंगे. रात्रिमें जिससमय सम्पूर्ण ध्वनि शान्त हो जाती है उससमय संसारदुःखसे कातर हो शिव २ ऐसे आर्तस्वरसे करतेहुए हमारे नेत्र आनन्दाश्रुओंसे कब पूर्ण होंगे ॥ ४० ॥

दोहा--ज्योत्स्नासों सित थल तहां, मुदित आंशु युत नैन ॥
कब रटिहौं तट गंगके, शिव शिव आरत वैन ॥ ४० ॥

महादेवो देवः सरिदपि च सैषा सुरसरिद्गुहा एवागारं वसनमपि ता एव हरितः ॥ सुहृद्वा कालोऽयं व्रतमिदमदैन्यव्रतमहो कियद्वा वक्ष्यामो वटविटप एवास्तु दयिता ॥ ४१ ॥

सं० टी०—अधुना विरक्तानां सम्पत्तिं वर्णयंस्तां प्रार्थयंति । महादेव इति । पूज्यो देवो महादेवः शिव एव । स्नानाद्यर्थं सरिन्नद्यपेक्षिता साऽपि चामरसरिच्छ्रीगंगैव । आगारं गृहं च गुहा कन्दरैव । वसनं वस्त्रमपि ताः प्रसिद्धा हरितो दिश एव । अयं काल एव शुभकरत्वात्सुहृन्मित्रमस्ति । व्रतं त्विदं यददैन्यं तदेवाहो आश्चर्यरूपं व्रतमन्यत्तत्सदृशं व्रतं नास्तीत्यर्थः । वटविटपः वटवृक्ष एव दयिता कलत्रमस्तु । निवासात्सदा सुखकरत्वात् अतोऽन्यैश्वर्यं विरक्तानां कियत्परिमाणं वा वयं वक्ष्यामो ब्रूमः एतावतैव विरक्ताः सन्तुष्टा इत्यर्थः । महादेवो हि देवोऽस्ति सरिदस्ति च जान्हवी । वासो गिरिगुहावासो धन्यस्तत्र शिवं स्मरेत् ॥ १ ॥ शिखरिणीवृत्तमिदम् ॥ ४१ ॥

भाषा टीका—महादेवही एक पूज्य देव है, गंगाही एक नदी है, गुहाही घर है, दिशाही वस्त्र है, यह कालही मित्रहै, किसीके सन्मुख दीन न होना यही व्रत है, और कहां तक कहैं एक वटकावृक्षही कुटुम्ब है, अर्थात् विरक्त इन्हीं सबसे सन्तुष्ट हैं ॥ ४१ ॥

दोहा—देव ईश सुरसरि सरित, दिशा बसन गिरि गेह ।
सुहृत्काल वट कामिनी, व्रत अदैन्य सुख एह ॥ ४१ ॥

आशा नाम नदी मनोरथजला तृष्णातरङ्गाकुला रागग्राहवती वितर्कविहगा धैर्यद्रुमध्वंसिनी ॥ मोहावर्तसुदुस्तराऽतिगहना प्रोत्तुङ्गचिन्तातटी तस्याः पारगता विशुद्धमनसो नन्दन्ति योगीश्वराः ॥ ४२ ॥

सं० टी०-इदानीमाशां नदीरूपेण वर्णयंस्तस्याः पारगतानां परमानन्दप्राप्तिमाह । आशानामेति । आशानाम्नी नदी वर्तते सा मनोरथो मनोराज्यं जलं यस्या सा । तृष्णा घनगर्द्धैव तरङ्गास्तैराकुला व्याप्ता । रागो विषयस्नेह एव ग्राहो मकरो विद्यते यस्यां सा रागग्राहवती । वितर्काः कुतर्का एव विहगाश्चक्रवाकादयः पक्षिणो यस्यां सा । तथा धैर्यमेव द्रुमो वृक्षस्तस्य ध्वंसिनी नाशकर्त्री । मोह एवावर्त्तो भ्रमस्तेन सुदुस्तरा अतिगहना गम्भीरा । प्रकर्षेणोत्तुङ्गमुन्नतं चिन्तालक्षणं तटं यस्याः सा । तस्या नद्याः पारं गता विशुद्धा मतिर्येषां ते निर्मलज्ञानवन्तो योगीश्वरा नन्दन्ति परमानन्दमनुभवन्तीत्यर्थः । आशापाशवतोलोको निशोका न भवेत् क्वचित् । यस्तु तत्पाशमुन्मुच्य वेत्यात्मानं स शोकजित् ॥ १ ॥ शार्दूलविक्रीडितं वृत्तमिदम् ॥ ४२ ॥

भा० टी०-आशानामकी एक नदीहै, जिसमें मनोरथरूपी जल भराहै, जिसमें तृष्णारूपी तरङ्ग उठतेहैं,विषयरूपी ग्राह जिसमें रहतेहैं,नानाप्रकारके कुतर्करूपी पक्षी उसमें विचरतेहैं, तथा यह नदी धैर्यरूपीवृक्षका नाश करनेवालीहै और इसमें मोहरूपी भ्रमर हैं, इन भ्रमरोंसे यह नदी अत्यन्त दुस्तर और गम्भीर होरही है, तथा उन्नतिको प्राप्त चिंताही इस नदीका तटस्थल है । इस नदीके पारजानेवाले शुद्ध चित्त योगीश्वर अत्यन्त आनन्दको प्राप्त हातेहैं ॥ ४२ ॥

छप्पय-नदीरूप यह आश मनोरथ पूर रह्यौ जल । तृष्णा तरल तरंग राग है ग्राह महावल । नानातर्क विहंग संग धीरज तरु तोरत । भ्रमर भयानक मोह सबनकों गहि गहि वोरत । नित वहत रहत चित भूमिमें चिन्तातट अतिही विकट । कढि गये पार योगी पुरुष उन पायौ सुख तेहि निकट ॥ ४२ ॥

आसंसारं त्रिभुवनमिदं चिन्वतां तात तादृङ्नैवास्माकं नयनपदवीं श्रोत्रवर्त्मागतो वा ॥ योऽयं धत्ते विषय करिणीगाढगूढाभिमानक्षीबस्यान्तः करणकरिणः संयमालानलीलाम् ॥ ४३ ॥

सं० टी०—अथ संयमिनो दुर्लभत्वं सूचयति । आसंसारमिति । हे तात । आसंसारं प्रलयपर्यन्तमिदं त्रिभुवनं चिन्वतामन्वेषणं कुर्वतामस्माकं नयपदवीं दृङ्मार्गं वाऽथवा श्रोत्रवर्त्म श्रवणमार्गं न गतः न दृष्टो न श्रुत इत्यर्थः । स कः योऽयं विषय एव करिणी हस्तिनी तस्यां गाढो दृढः गूढः पूर्णो योऽभिमानस्तेन क्षीबस्य मत्तस्यान्तः करण करिणश्चित्तगजस्य संयमो नियमनं तदेवालान बन्धनं तस्य लीलां निरोधचेष्टां धत्ते दधातीत्यर्थः ॥ मानुषं जन्म सम्प्राप्य मनो रोद्धुं च शक्नुते । दुर्लभोऽस्ति त्रिलोक्यां स पूज्यो वन्द्योऽप्यसौ ध्रुवम् ॥ १ ॥ मन्दाक्रान्तावृत्तमिदम् ॥ ४३ ॥

भा. टी.-हे तात ! जबसे यह संसार प्रवृत्त हुआ है तबसे हम त्रिभुवनमें खोजते फिरतेहैं, परन्तु ऐसा दृढ मनुष्य न तौ देखनेहीमें आया है और न सुननेहीमें आयाहै

जो विषयरूपी हस्तिनीके गूढ अभिमानसे उन्मत्त अन्तःकरणरूपी हस्तीको संयमरूपी बन्धनसे बाँधकर रोके ॥ ४३ ॥

दोहा—ऐसे मैं संसारमें, सुन्यौ न देख्यौ धीर ॥
विषया हथिनी संग लग्यौ, मनगज बांधै वीर ॥ ४३ ॥

ये वर्तन्ते धनपतिपुरः प्रार्थनादुःखभाजो ये चाल्पत्वं दधति विषयाक्षेपपर्यस्तबुद्धेः ॥ तेषामन्तःस्फुरितहसितं वासराणां स्मरेयं ध्यानच्छेदे शिखरिकुहरग्रावशय्या निषण्णः ॥ ४४ ॥

सं० टी०—सम्प्रतं निर्वेदतायाः स्वरूपमाह । ये वर्तन्त इति । अहं तेषां वासराणां अन्तरभ्यन्तरे स्फुरितं हसितं यस्मिन् कर्मणि यथा भवति तथा स्मरेयं चिन्तयामि । ये वासरा धनपति पुरो धनाढ्यानां पुरस्तात्प्रार्थना याचना तस्या यद्दुखं तद्भजंतीति ते प्रार्थनादुःखभाजो वर्तन्ते । चान्यद्ये वासरा विषयाक्षेपपर्यस्ता बुद्धिर्यस्य स विषयाक्षेपपर्यस्तबुद्धिस्तस्य । किम्भूतोऽहं शिखिरि कुहरे या ग्रावशय्या तस्यां निषण्णः । वा शिखरिकुहरस्य पर्वतविवरस्य या ग्रावशय्या तत्र निषण्ण निर्विष्टः । मन्दाक्रान्तावृत्तमिदम् ॥ ४४ ॥

भा० टी०—जे दिन धनवानोंके अगाडी प्रार्थना (याचना) रूप दुःखके भागी होनेसें बडे मालुम पडतेहैं अर्थात् उनकी खुशामद करते २ वीतनेमें नहीं आते, और जे दिन विषयासक्त बुद्धिवाले मनुष्योंको छोटे होतेहैं अर्थात् जातेभी नहीं मालुम पडतेहैं-सो वो कौनसा दिन होगा जिस दिन पर्वतोंकी खोहोंके पाषाणोंकी शय्यापर बैठाहुआ, मैं ध्यान बिश्राम पाकर अपने अन्तःकरणमें हँसी करताहुआ उन दिनोंको स्मरण (याद) करूंगा ॥ ४४ ॥

कुण्डलिया—छोटे दिन लागत तिन्है, जिनके बहुबिधि भोग । बीत जात बिलसत हसत करत सुरतसंजोग ॥ करत सुरत संजोग तनकसे लागत तिनकों । जे हैं सेवक दीन निपट दीरघ है विनकों । हम बैठे गिरिशृंग अंग याही ते मोटे । सदा एक रस द्योस लगत हैं बडे न छोटे ४४

विद्या नाधिगता कलंकरहिता वित्तं च नोपार्जितं
शुश्रूषापि समाहितेन मनसा पित्रोर्न सम्पादिता ॥
आलोलायतलोचना युवतयः स्वप्नेऽपि नालिङ्गिताः
कालोऽयं परपिण्डलोलुपतया काकैरिव प्रेरितः ॥४५॥

सं० टी०—अधुना जन्मन ऐहिकं पारलौकिकं च किंचिदपि फलमदृष्ट्वाऽनुतपन्नाह । विद्यंते । अभिमानादिकलंकेन रहिता विद्या नाधिगता न प्राप्ता । वित्तं धनं च नोपार्जितं न सम्पादितम् । समाहितेन निश्चलेन मनसा पित्रोर्मातापित्रोः शुश्रूषा सेवाऽपि न सम्पादिता न कृता । आलोलानि चंच-

कानि आयतानि विस्तीर्णानि लोचनानि यासां ता युवतयः स्वप्नेऽपि नालिङ्गिताः। किन्त्वस्माभिः केवलं परपिण्डेषु परान्नेषु लोलुपतया लुब्धतया काकैरिव कालः प्रेरितो गमितः व्यर्थमेव जन्माभूदिति भावः। विद्याधनादिचिन्तां च स्त्रीभोगस्यापि चिन्तनम्। हित्वा तुष्टमनोः कालं नयेच्छंकरचिन्तया ॥ १ ॥ शार्दूलविक्रीडितं वृत्तमिदम् ॥ ४५ ॥

भा० टी०—अभिमानादि कलङ्कसे रहित विद्याभी नहीं पढी, धन उपार्जन नहीं किया, एकाग्रचित होकर माता पिताकी सेवाभी नहीं की, और चञ्चल और विस्तीर्ण नेत्रवाली स्त्रियोंका स्वप्नमेंभी आलिङ्गन नहीं किया, हमने तौ केवल पराये अन्नका लोभ करते करते काकके समान सब जीवन यौंही व्यतीत कर दिया ॥ ४५ ॥

छप्पय—विद्यारहित कलंक ताहि चितमें नहिं धारी । धन उपजायौ नाहिं सदा संगी सुखकारी । मात पिताकी सेव शुश्रूषा नेक न कीन्हीं । मृगनैनी नवनारि अंक भर कबहु न लीन्ही । योंहीं व्यतीत कीन्हौ समय ताकत डोल्यौ काक ज्यों । ले भज्यौ टूक परहाथतें चंचल चोर चलाक ज्यौं ॥ ४५ ॥

विशीर्णे सर्वस्वे तरुणकरुणापूर्णहृदयाः स्मरन्तः संसारं
विगुणपरिणामावधिगतिम् ॥ वयंपुण्यारण्ये परिणतशर
च्चन्द्रकिरणैस्त्रियामां नेष्यामो हरचरणचित्तैकशरणाः ॥ ४६ ॥

सं० टी०—सर्वस्वहानौ जनानामीश्वरशरणं शिक्षयति । विशीर्ण इति । सर्वस्वे सर्वधने विशीर्णे नष्टे सति हरचरणमेव चित्ते एकं शरणं येषामेतादृशा वयं परिणता वृद्धाः शरच्चन्द्रकिरणा यस्मिंस्तस्मिन् पुण्यारण्ये त्रियामां रात्रिं कदा कस्मिन् समये नेष्यामोऽतिक्रमिष्यामः । कथंभूता वयं तरुणाया करुणा पराऽहिंसा निश्चयरूपा तया परिपूर्णं हृदयं येषां ते । पुनः कथंभूता वयं विगुणो दोषः परिणामः प्रतिक्षणाविनाशित्वं तयोरवधिं मर्यादां गतं प्राप्तं संसारं स्मरन्तः । अखिलार्थे विनष्टेऽपि करुणापूर्णमानसाः । धन्ये वने स्थिताः शम्भुं स्मरन्ति प्रेमतोऽनिशम् ॥ १ ॥ शिखरिणीवृत्तमिदम् ॥ ४६ ॥

भा० टी०—सर्वस्वके नष्ट होजाने पर शिवपाद पंकजको केवल अपना रक्षक समझकर अत्यन्त करुणासे पूर्ण हो, और प्रतिक्षण संसारका असारत्व स्मरण करते हुए हम शरदृतुकी चांदनीमे किसी पवित्र वनमें बैठकर कब रात्रिको व्यतीत करेंगे ॥ ४६ ॥

छप्पय—वीतगयो सर्वस्व तरुण करुणा छाई हिय । बिना सार संसार अन्त परिणाम जान जिय । अति पवित्र आरण्य सरदके चन्द सहित निशि ॥ करिहौं तहां वितीति प्रीति जुत निरख दशोंदिशि । शिव शिव शंकर गौरिवर गंगाधर हर हर कहत । भवपारकरण पशुपतिचरण एक शरण यह चित चहत ॥ ४६ ॥

वयमिह परितुष्टा वल्कलैस्त्वं दुकूलैः सम इह परितोषो निर्विशेषावशेषः ॥ स तु भवति दरिद्रो यस्य तृष्णा विशाला मनसि च परितुष्टे कोऽर्थवान् कोदरिद्रः ॥ ४७ ॥

सं० टी०—इदानीं कियदंशेन साम्यं वदन् स्वाधिक्यमप्याह । वयमिति । इह व्यवहारभूमौ वयं वल्कलैस्तरुत्वग्भिः परितुष्टाः त्वन्तु दुकूलैः पट्टवस्त्रैः परितुष्टोऽसि इहास्मिन्नर्थे उभयोः परितोषः समः निर्विशेष एव विशेषोऽन्यो विशेषो नास्तीत्यर्थः । नन्वहं धनवांस्त्वं तु दरिद्र इति तत्राह सेति । यस्य तृष्णा विशाला वृद्धास्ति स दरिद्रो भवति मनसि तु परितुष्टे सति अर्थवान् कः दरिद्रश्च कः न कोऽपीत्यर्थः । तृष्णया ये हतास्ते तु दरिद्रा दुःखिनो नराः ॥ सन्तोषो विद्यते येषां ते सदा सुखिनो मतः ॥ १ ॥ मालिनीवृत्तमिदम् ॥ ४७ ॥

भा० टी०—हम वृक्षके वल्कल पहनके सन्तुष्ट हैं, और आप उत्तमवस्त्र पहरकर सन्तुष्ट हो इसप्रकार हमारा तुह्मारा सन्तोष सम हुआ तौ विशेष विर्विशेष हुआ अर्थात् हम तुम में कोई भेद न रहा, अब जिसके तृष्णा अधिक है वही दरिद्री है नहीं तो मनके सन्तुष्ट होनेपर न कोई दरिद्री है और न कोई धनीहै ॥ ४७॥

छप्पय—तुम धनसों सन्तुष्ट हमहुं हैं बृक्षवकल तें। दोऊ भये समान नैन मुख अंग सकल तें ॥ जान्यौ जात दरिद्र बहुत तृष्णा है जिनके। जिनके तृष्णा नाहिं बहुत सम्पत् है तिनके॥तुमहीं विचार देखौ हगन को निर्धन धनवन्तको। जुत पाप कौन निष्पाप को को असन्त अरु सन्तको ॥४७॥

यदेतत्स्वाच्छन्द्यं विहरणमकार्पण्यमशनं सहार्यैःसंवासः श्रुतमुपशमैकव्रतफलम् ॥ मनो मन्दस्पन्दं बहिरपि चिरस्यापि विमृश न्न जाने कस्यैषा परिणतिरुदारस्य तपसः ॥ ४८ ॥

सं० टी०—इहापि लोके स्वातंत्र्यादिसुखं पुण्येनैव भवतीति तपश्चादि पुण्यं सम्पादनीयमि शिक्षयति । यदेतदिति । यदेतत् प्रसिद्धं स्वच्छन्दं विहरणं स्वेच्छया विहारः, तथाऽकार्पण्यमशनं दैन्यं विहाय भोजनं, तथा सहार्यैः आर्यैर्विद्वद्भिः सह संवासः एकत्रस्थितिः । तथा उपशमः शान्तिः सैकं मुख्यं व्रतं तदेव फलं यस्य तच्छ्रुतं शास्त्राध्ययनं । तथा बहिरपि व्युत्थानावस्थायामपि मन्दः स्पन्दो गतिर्यस्य तादृशं मनः स्यात् । चिरस्य बहुकालमप्यहं विमृशन विचारयन्न जाने कस्योदारस्य श्रेष्ठस्य तपस एषा स्वच्छन्दविहरणादि लक्षणा परिणतिः फलरूपः परिणाम इति । स्वाधीनेन महीचारो स्वाहारो दैन्यतां विना । विचारः सद्भिरावासो महतस्तपसः फलम् ॥ १ ॥ शिखरिणीवृत्तमिदम् ॥ ४८ ॥

भा० टी०—स्वच्छन्द विहार करना, दीनता विना प्रगट किये भोजन करना, उत्तम पुरुषोंकी संगति करना, उपशमरूपी व्रतही जिनका फल हो ऐसे शास्त्रोंका सुनना, चिरकालसे विचार करनेपरभी मैं नहीं जानसकाहूं कि यह सब प्राप्तहोना किस प्राचीन श्रेष्ठतपका फल है ॥ ४८ ॥

दोहा—सत्संगति स्वच्छन्दता, विना कृपणता भक्ष ।
जान्यौ नहिं किहि तप किये, यह फल होत प्रतक्ष ॥ ४८ ॥

पाणिः पात्रं पवित्रं भ्रमणपरिगतं भैक्षमक्षय्यमन्नं
विस्तीर्णं वस्त्रमाशा उत गगनमलं तल्पमस्वल्पमुर्वी ॥
येषांनिःसंगतान्तःकरणपरिणतिः स्वात्मसन्तोषिणस्ते
धन्याः संन्यस्तदैन्यव्यतिकरनिकराः कर्म निर्मूलयन्ति ॥ ४९ ॥

सं० टी०—अधुना विरक्ता ये ज्ञानिनस्तान् स्तौति । पाणिरिति । येषां पाणिर्हस्त एवान्नजलादिग्रहणार्थं पवित्रं पात्रमस्ति, तथा भ्रमणेन परिगतं प्राप्तं भैक्ष्यं भिक्षासम्पाद्यमक्षय्यं परिपूर्णमन्नं वर्तते । तथाऽऽशा दिश उताथवा गगनमाकाशमलंमतिशयेन विस्तीर्णं वस्त्रमस्ति । येषामुर्वी पृथिवी अस्वल्पं बहुविस्तारयुक्तं तल्पं शय्या वर्तते । येषामन्तःकरणस्य परिणतिर्वृत्तिर्निःसंगता सर्वसंसर्गशून्याऽस्ति, । ये च सर्वविषयभोगतृणां परित्यज्य स्वात्मनि सन्तोषवन्तोऽतएव न्यस्तस्त्यक्तो दैन्यव्यतिकराणां याञ्चादुःखानां निकरः समूहो यैस्तादृशाः सन्तः कर्म निर्मूलयन्ति तत्वज्ञानेनाज्ञानं विनास्य त्रिविधं कर्म नाशयन्ति ते धन्याः कृतकृत्या यर्थः परांविरक्तिमाश्रित्य तत्वज्ञानमुपागताः । ते धन्याः सन्ति लोकेऽस्मिन्नेतरे योनिपूरकाः ॥ १ ॥ ग्धरावृत्तमिदम् ॥ ४९ ॥

भा० टी०—हाथही जिनका पवित्र बरतनहै, भिक्षान्नही जिनकी उत्तम भोजन है, निर्मल आकाशही जिनका वस्त्र है, पृथ्वीही जिनकी शय्या है, जिनके अन्तःकरणकी वृत्ति सबप्रकारके संसार्गोंसे शून्य है; जो सम्पूर्ण विषय भोग तृष्णाओंका परित्याग कर अपने आत्माहीमें सन्तुष्ट हैं, दीनताके समूहको जिनने भलीप्रकार त्यागदिया है और कर्मको जिनने समूल नष्ट कर दिया है, ऐसे उत्तम पुरुषोंको धन्य है ॥ ४९ ॥

छप्पय—भोजनकों कर पट्ट दशों दिश वसन बनाये । भखै भीख कौ अन्न पलंग पृथ्वीपर छाये । छांडि सबनकौ संग अकेले रहत रैन दिन । निज आतमसों लीन पौन सन्तोष छिनहि छिन । मनके विकार इन्द्रीनको डारे तोर मरोर जिन । वे धन्य २ संन्यास धन कर्म किये निर्मूलतिन ४९

दुराराध्यः स्वामी तुरगचलचित्ताः क्षितिभुजो वयं तु
स्थूलेच्छा महति च पदे बद्धमनसः ॥ जरा देहं मृत्युर्हरति सकलं जीवितमिदं सखे नान्यच्छ्रेयो जगति विदुषोऽन्यत्र तपसः ॥ ५० ॥

सं॰ टी॰—चलचित्तराजाज्ञाधारणापेक्षया तप एवेहामुत्र श्रेयस्करमित्याह । दुराराध्य इति । हे सखे ! जगति रसायां विदुषः पण्डितस्य तपसः अन्यत्रान्यत् श्रेयः कल्याणं न । कथं स्वामी अधिपतिः दुराराध्यः क्षितिभुजो राजानस्तुरगचलचित्ताः अश्ववच्चलचेतसः । तु पुनः वयं स्थूलेच्छाः महाशयाः चान्यन् महति पदे मुक्तिलक्षणे बद्धमनसः । जरा देहं हरति । मृत्युरिदं सकलं जीवितं हरति । ततस्तपसा विना श्रेयो नास्ति ॥ शिखरिणीवृत्तमिदम् ॥ ५० ॥

भा॰ टी॰—स्वामीकी सेवा करना अत्यन्त कठिन है, और राजागण अश्वकेसमान चंचलचित्त होते हैं, हम तौ बडीइच्छावाले मनुष्य हैं, हमारा मन तौ महत्पदमें बंधाहुआ है, वृद्धावस्था इस देहको हरलेतीहै, और मृत्यु इस सम्पूर्ण जीवनको शेष करदेताहै, इसकारणसे हे सखे ! इस संसारमें ज्ञानवानके लिये तपसे अधिक कुछभी श्रेयस्कर नहीं है ॥ ५० ॥

दोहा—नृपसेवामें तुच्छ फल, बुरी कालकी व्याधि ।
अपनो हित चाहत कियौ, तौ तू तप आराधि ॥ ५० ॥

भोगा मेघवितानमध्यविलसत्सौदामिनीचञ्चला आयुर्वायुविघट्टिताभ्रपटलीलीनाम्बुवद्भंगुरम् ॥ लोला यौवनलालना तनुभृतामित्याकलय्य द्रुतं योगे धैर्य समाधि सिद्धिसुलभे बुद्धिं विदध्वं बुधाः ॥ ५१ ॥

सं॰ टी॰—भोगादि सर्वमस्थिरं ज्ञात्वा योगे चित्तं निदध्यादित्याह । भोगा इति । मेघानां वितान समुदायस्तन्मध्ये विलसन्ती या सौदामिनी विद्युल्लता तद्वच्चञ्चला भोगाः । आयुस्तु वायुना विघट्टिता विद्राविता याऽभ्रपटली मेघमाला तस्यां लीनं यदम्बु जलं तद्वद्भंगुरमस्थिरं, तनुभृतां देहधारिणां यौवनस्य लालना स्नेहादादरविशेषो लोला । तस्य क्षणभङ्गुरत्वेन तस्यापि क्षणभङ्गुरत्वादित्येवं भोगादीनां चंचलत्वमाकलय्यविचार्य द्रुतं शीघ्रं हे बुधाः ! धैर्येण या समाधिसिद्धिश्चित्तैकाग्रता तया सुलभे योगे बुद्धिं विदध्वं कुरुध्वमित्यर्थः ॥ न भोगा न च तारुण्यं नप्यायुः सुस्थिरं नृणाम् । इति ज्ञात्वा मनो धार्यं योगाधीशे हरे नृभिः ॥ १ ॥ शार्दूलविक्रीडितं वृत्तमिदम् ॥ ५१ ॥

भा॰ टी॰—मनुष्योंके भोग मेघोंके समूहमें चमकतीहुई बिजुलीकेसदृश चंचल हैं, आयु वायुसे छिन्न भिन्न मेघमालामें लीन जलके समान क्षणभंगुर है, और यौवनकी उमंगभी स्थिर नहींहै इसलिये हे पण्डितो ! ऐसा समझकर धैर्यसे प्राप्त चित्तकी एकाग्रताद्वारा सुलभ जो योग है, उसमें बुद्धिको लगाओ ॥ ५१ ॥

कुण्डलिया—जैसे चंचल चंचला त्यौंही चंचल भोग । तैसेही यह आयु है ज्यौं घट पवन प्रयोग । ज्यौं घट पवनप्रयोग तरल त्यौंहीं यौबन तन । बिनसत लगत न वार गात व्है जात ओसकन । देख्यौ दुःसह दुःख देहधारिनको ऐसे । साधत सन्त समाधि व्याधिसों छूटत जैसे ॥ ५१ ॥

पुण्ये ग्रामे वने वा महति सितपटच्छन्नपालीं कपालीं
मादाय न्यायगर्भद्विजहुतहुतभुग्धूमधूम्रोपकण्ठम् ॥
द्वारं द्वारं प्रवृत्तो वरमुदरदरीपूरणाय क्षुधार्तो मानी
प्राणी स धन्यो न पुनरनुदिनं तुल्यकुल्येषु दीनः ॥५२॥

सं० टी०—यो हि मानी जनोऽकर्तव्यमपि करोति परन्तु तुल्यजातिषु दीनो न भवति स धन्यो नेतर इत्याह। पुण्य इति। यो मानी प्राणी क्षुधार्तः सन्नुदरदरीपूरणाय कुक्षिकन्दराभरणाय पुण्ये पुण्योत्पादके तीर्थविशिष्टे ग्रामे महति विस्तीर्णे वने वा सितेन शुक्लेन पटेन वस्त्रेण छन्नाच्छादिता पाली मुखं यस्यास्तां कपालीं घटादिखण्डरूपामादाय गृहीत्वा न्यायो नीतिर्गर्भे मनस्यन्तर्येषां तैर्द्विजैर्यो हुतो हुतभुगग्निस्तस्य धूमेन धूम्रो धूमचिन्हित उपकण्ठोऽन्तरं यस्य तादृशं द्वारंद्वारं प्रवृत्तस्तस्य वरं स धन्यश्च तुल्यकुल्येषुसजातीयेषु पुनर्दीनो नवरं॥ कपालधारको भूत्वा नरो ग्रामे वनेऽपिवा। भिक्षया जीवनं कुर्यान्न समेषु हि याचनम्॥ १ ॥ स्रग्धरावृत्तमिदम्॥ ५२ ॥

भाषा टीका—यदि कोई मानी (प्रतिष्ठित) मनुष्य क्षुधासे व्याकुलहोकर उदररूपी कन्दराके पूर्ण करनेकेलिये किसी पवित्रग्राम अथवा किसी विस्तीर्ण वनमें उज्ज्वलवस्त्रसे ढकाहुआ ठीकरा लेकर उन मनुष्योंके द्वारपर कि जिनकी चौखट न्यायपूर्वक ब्राह्मणोंकी होमीहुई अग्निके धूमसे मलिनहै भ्रमणकरे तो श्रेष्ठ है, परन्तु समानकुलवालोंके सन्मुख दीन होना उत्तम नहीं है॥ ५२ ॥

सोरठा—विप्रनके घर जाय, भीख मांगिवौ है भलौ।
बन्धुनसों सिरनाय, भोजनहू करिवौ बुरौ॥ ५२ ॥

चाण्डालः किमयं द्विजातिरथवा शूद्रोऽथ किं तापसः
किंवा तत्वनिवेशपेशलमतिर्योगीश्वरः कोऽपि किम्॥
इत्युत्पन्नविकल्पजल्पमुखरैःसम्भाष्यमाणा जनैर्न क्रुद्धाः
पथि नैव तुष्टमनसो यान्ति स्वयं योगिनः ॥५३॥

सं० टी०—स्वात्मनि लीनानां योगिनां गतिं दर्शयति। चाण्डाल इति। अयं जनः किमिति वितर्के चाण्डलोऽथवा द्विजातिः ब्रह्मक्षत्रविशां मध्ये कोप्यस्ति अथवा शूद्र एव किं वा तापसस्तपस्वी किंवा तत्वनिवेशे आत्मनिश्चये पेशला निपुणा मतिर्यस्यैतादृशःकोऽपि योगीश्वरः किम्। इत्यमुना प्रकारेणोत्पन्नो यो विकल्पःसंशयस्तेन जल्पो नानाविधो वादस्तेन मुखरैर्वाचालैर्जनैः सम्भाष्यमाणाः सन्तोऽसत्कुर्वते न क्रुद्धा नैव तुष्टमनसो हर्षितहृदया योगिनः सावधानमनसः स्वयं स्वेच्छयैव पथि मार्गे यान्ति विचरन्तीत्यर्थः। अलक्षिता व्रजन्तीह स्वीयैरन्यैश्च योगिनः। नानातर्कवचोभिस्ते न हृष्टाः कुपिता न च॥ १॥ शार्दूलविक्रीडितं वृत्तमिदम्॥ ५३ ॥

भा० टी०—यह चाण्डाल है, अथवा ब्राह्मण है, शूद्र, तपस्वी अथवा तत्व विवेकमें चतुर कोई योगीश्वर है, ऐसे अनेकप्रकारके शंशयोंपर तर्क वितर्क करते हुए मनुष्योंसे सम्भाषण करनेपरभी योगीजन न क्रुद्ध होतेहैं, और न हर्षित होते हैं, किन्तु सावधानचित्त होकर स्वच्छन्द अपने मार्गमें विचरण करतेहैं॥ ५३ ॥

दोहा—विप्र शूद्र योगी तपी, सुपच कहत कर ठोक।
सबकी बातें सुनत हों, मोको हर्ष न शोक॥ ५३॥

सखे धन्याः केचित् त्रुटितभवबन्धव्यतिकरा वनान्ते चित्तान्तर्विषमविषयाशीविषगताः॥ शरच्चन्द्रज्योत्स्नाधवल गगनाभोगसुभगां नयन्ते ये रात्रिं सुकृतचय चित्तैकसरणाः॥ ५४॥

सं० टी०—पापहेतुभूतं विषयसेवनं त्यक्त्वा सुखैकमूलं वनवासं कुर्वन् पुरुषो धन्य इत्याह। हे सखे प्रियमित्र ये केचित्पुरुषाः शरत्कालीनो यश्चन्द्रस्तस्य ज्योत्स्ना कौमुदी तया धवलः पांडुरो गगनाभोग आकाशमण्डलं तेन सुभगां मनोज्ञां रात्रिं नयन्तेऽतिक्रमन्ति ते धन्याः। कथंभूताः त्रुटितश्छिन्नो भवबन्धनस्य संसारबन्धनस्य व्यतिकरः सम्बन्धो येषां ते। तथा वनान्ते वनमध्ये चित्तस्यान्तःकरणस्यान्तर्मध्ये ये कठिना विषयास्त एव आशीविषा भुजङ्गा गता येषांते "वाहिताग्न्यादिषु" इति गतशब्दस्य पूर्वनिपातः। तथा सुकृतानां पुण्यानां निचयो निवहस्तस्मिन्यच्चित्तमन्तःकरणं तदेवैकं शरणं येषां तथाविधाः पुण्यसम्पादनैकतत्पर इत्यर्थः। शिखरिणीवृत्तमिदम्॥ ५४॥

भा० टी०—हे सखे धन्य है उन पुरुषोंको कि जो वनमे बैठेहुये शरद ऋतुकी चांदनीसे शुभ्र हुए आकाशमंडलसे अति मनोहर ऐसी रात्रिको वितीत करतेहैं। फिर वे कैसेहैं की जिन्होंने संसारबंधनका संबंध तोडदियाहै और अन्तः—करणमेंसें महाभयानक विषयरूपी सर्प निकस गयेहैं जिनके और जिनका चित्त केवल पुण्यसमूहके संपादन करनेमेंही लगरहाहै.॥ ५४॥

दोहा—ते नर जगमें धन्य हैं, शरदशुभ्र निशि मांहि।
तोडे बन्धन जगतके, मनतें विषयनकाहि॥

सोरठा—विषयसर्पकों मारि, चित लगाय शुभकर्ममें।
पुण्यकर्म शुभ धारि, त्यागे सब मनवासना॥ ५४॥

एतस्माद्विरमेंद्रियार्थगहनादायासदादाश्रय श्रेयोमार्गमशेषदुःखशमनव्यापारदक्षं क्षणात्॥ शान्तंभावमुपैहि संत्यज निजां कल्लोललोलां गतिं मा भूयो भज भंगुरां भवरतिं चेतः प्रसीदाधुना॥ ५५॥

सं० टी०—इदानीं चित्तस्य दुर्मार्गप्रवृत्तिं वारयन् संन्मार्गप्रवृत्तिमुपदिशति एतस्मादिति। हे चेतः १ इन्द्रियाणामर्थाः शब्दादिविषयास्त एव गहनं निबिडं वनं तस्मादेतस्मादायासदादायासेन परिश्रमेण साध्यात्वं निवृत्तिं भज। क्षणात् शीघ्रमेव शेषाणां दोषाणां दुःखानां शमनस्य नाशनस्य व्यापारेदक्षं कुशलं श्रेयसो मार्ग-

वैराग्यादिज्ञानान्तमाश्रयाङ्गीकुरु । हे चित्त ! शान्तं भावं स्थिरतामुपैहि प्राप्नुहि । निजां स्वकीयां कल्लोलवत्तरङ्गवल्लोलां चंचलां गतिं सन्त्यज । भंगुरामस्थिरां भवस्य रतिं प्रीतिं त्वं भूयः पुनर्बाहुल्येन वा मा भजाधुना प्रसीद प्रसादं भजेत्यर्थः ॥ इन्द्रियार्थान्परित्यज्य शान्तभावं भवे रतिम् । अनेकभवदुःखानां भंजनं ज्ञानमाश्रयेत् ॥ १ ॥ शार्दूलविक्रीडितं वृत्तमिदम् ॥ ५५ ॥

भा० टी०—हे चित्त ! बडे परिश्रमसे प्राप्त दुःखदाई इन्द्रियोंके विषयरूपी सघनवनसे विश्राम ले, सम्पूर्णदुःखोंके नाशकरनेमें समर्थ कल्याणमार्गका शीघ्रही आश्रय ले, शान्तभावको अङ्गीकार कर, तरङ्गकेसमान अपनी चञ्चल गतिको त्याग अब फिर इस नाशवान् संसारीइच्छाका सेवनमतकरे, और आपही तूं प्रसन्नरूपहो५५

छप्पय—एरे चित कर कृपा त्याग तू अपनी चालहि । सिर पर नाचत खड्यौ जान तू ऐसें कालहि । येइन्द्रीगण निठुर मान मत इनकौ कहिबौ। शान्त भाव कर ग्रहण सीख कठिनाई सहिबौ । निजगति तरंग सम चपल तजि नाशवान जग जानिये । जनि करहु तासु इच्छा कछू शिव स्वरूप उर आनिये ॥ ५५ ॥

पुण्यैर्मूलफलैः प्रिये प्रणयिनि प्रीतिं कुरुष्वाधुना भूश-
य्यानववल्कलैरकरणैरुत्तिष्ठ यामो वनम् ॥ क्षुद्राणामवि
वेकमूढमनसां यत्रेश्वराणांसदा चित्तव्याध्यविवेकविह्व-
लगिरां नामापि न श्रूयते ॥ ५६ ॥

सं० टी०—धनिकानां संगेनोद्विग्नचित्तो वनवासेच्छया चित्तवृत्तिमुपदिशन्नाह । पुण्यैरिति । हे प्रिये चित्तवृत्ते ! त्वमुत्तिष्ठोत्थिता भव वयमधुना वनं यामो गच्छामः । यत्र वनेऽविवेकिनो मूढं मनो येषामतएव क्षुद्राणां तुच्छानीश्वराणां श्रीमतां नामाऽपि न श्रूयते । कीदृशानामीश्वराणां सदासर्वदा वित्तं धनमेव व्याधी रोगस्तेन योऽविवेकोऽविचारस्तस्माद्विह्वला व्याकुला गीर्वाणीयेषां । तत्र प्रियशरीरनिर्वाहः कथं भविष्यतीति तत्राह । पुण्यैः पावनैः मूलानि च फलानिच तैः प्रणयिनी रुचिरां वृत्तिं जीविकां हे प्रिये ! त्वं कुरुष्व । नवानि यानि वल्कलानि वृक्षत्वग्लक्षणानि तैरकृपणैर्बहुलैर्भूशय्या च कुरुष्वेत्येवं तत्र निर्वाहः कर्तव्यस्तेषामश्विराणां मुखदर्शनेन किं प्रयोजनमितिभावः । फलैरेवोदरीं वृत्तिं भूशय्या नववल्कलैः । वासं गिरिबिलं कृत्वा मनोऽध्येषि च तत्पदे ॥ १ शार्दूलविक्रीडितं वृत्तमिदम् ॥ ५६ ॥

भा० टी०—हे प्रिये चित्तवृत्ते ! तूं अब उठ और पवित्र फलमूलोंसे अपना पालन कर, तथा बनीबनाई भूमिशय्या और नवीनवल्कलके वस्त्रोंसे निर्वाह कर। हम तौ अब वनको जातेहैं, जहां अविवेकके कारण जो मूढमन हैं, जो क्षुद्र हैं, और धनरूपी व्याधिजनित विचारसे जिनकी बुद्धि विह्वल है उन मनुष्योंका नामभी नहीं सुनाईदेताहै ॥ ५६ ॥

दोहा—वकल वसन फल असन कर, करिहौं वन विश्राम ॥
जित अविवेकी नरनकौ, सुनियत नाहीं नाम ॥ ५६ ॥

मोहं मार्जयतामुपार्जय रतिं चन्द्रार्धचूडामणौ चेतः स्वर्गतरंगिणीतटभुवामासङ्गमङ्गीकुरु ॥ को वा वीचिषु बुद्बुदेषु च तडिल्लेखासु च स्त्रीषु च ज्वालाग्रेषु च पन्नगेषु च सरिद्वेगेषु च प्रत्ययः ॥ ५७ ॥

सं० टी०—विषयभोगेच्छां परित्यज्य "शिवे रतिं कुरु" इति स्वचेतः प्रतिबोधयति । मोहमिति । हे चेतः ! मोहं मार्जयतां दूरीक्रियतां । हे प्राणिन् । चन्द्रार्धचूडामणौ शिवे रतिं तोषमुपार्जय सम्पादय रे चेतः । स्वर्गतरंगिणीतटभुवां आसङ्गं सङ्गतिमङ्गीकुरु । नोऽस्माकं वाऽथवा वीचिषु कल्लोलेषु प्रत्ययो विश्वासः कः । चान्यज्जलबुद्बुदेषु वर्षावारिपुटेषु कः प्रत्ययः । चान्यत्तडिल्लेखासु सौदामिनीषु च पुनः स्त्रीषु कः प्रत्ययः । यथा एतेषु नोऽस्माकं प्रत्ययो नास्ति तथा जीवितेषु नास्ति । शार्दूलविक्रीडितं वृत्तमिदम् ॥५७॥

भा० टी०—हे चित्त ! मोहको छोडकर चन्द्रार्धचूडामणि श्रीशिवजीसे प्रीति कर और गङ्गातटके वृक्षोके नीचे विश्राम ले ! देखो ! जलके तरंग, पानीके बबूले बिजुलीकी चमक, अग्निकी ज्वालाकी शिखा, स्त्री, सर्प, और नदीके प्रवाहमें स्थिर रहनेका कुछ विश्वास नहींहै, अर्थात् यह सातों वस्तु स्थिर नहींरहसक्तीहै, इसलिये स्त्रीके विलासमें मग्न मत हो ॥ ५७ ॥

छप्पय—मोह छांड मन मीत प्रीतिसों चन्द्रचूड भज । सुर सरिताके तीर धीरधर दृढ आसन सज । शम दम भोग विराग त्याग तपकों तू अनुसरि । वृथा विषय बकबाद स्वाद सबही तू परिहरि । थिर नहिं तरंग बुदबुद तडित अगिनशिखा पन्नग सरित । त्यौंही तन जोबन धन अथिर चलदलदल केसे चरित ॥ ५७ ॥

अग्रे गीतं सरसकवयः पार्श्वतो दाक्षिणात्याः पृष्ठे लीलावलयरणितं चामरग्राहिणीनाम् ॥ यद्यस्त्येवं कुरु भवरसास्वादने लंपटत्वं नोचे चेतः प्रविश सहसा निर्विकल्पे समाधौ ॥ ५८ ॥

सं० टी०—पूर्णविषयसुखसमाधिसुखाभ्यामन्तरा वृथैव जन्मेति सूचयति । अग्रेगीत मिति । सिंहासनस्थस्य सतः पुरुषस्याग्रे पुरोभागे गीतं कुशलानां वारवधूनां गानं स्यात् । पार्श्वतो वामदक्षिणभागयो कारिणो भवेयुः । पृष्ठे दाक्षिणात्या दक्षिणदेशीयाः सरसकवयः रससहितकवितयास्तुतिकारिणो भवेयुः । पृष्ठभागे चामरग्राहिणीनां शोभनस्त्रीणां चामरचालनरूपा या लीलात्तया वलयानां कङ्कणानां रणितं शब्दः स्यात् । यद्येवमुक्तेन प्रकारेण भोगसाधनकलापोऽस्तितर्हि भवस्य संसारस्य यो रसस्तस्याश्वादने हे चेतः ! त्वं लम्पटं संलग्नं भव । चेद्यप्येवं भोगसामग्री नास्ति तदा सहसा शीघ्रमेव निर्विकल्पे समाधौ त्वं प्रविश प्रवेशं कुर्वित्यर्थः उभयाभावे वृथैव जन्मेतिभावः अग्रे पश्चात् पार्श्वतो वा यदि शृङ्गारसम्पदः । तदा तु विषये रागो चेन्मनस्त्वं स्थिरीभव ॥ १ ॥ मन्दाक्रान्तावृत्तमिदम् ॥ ५८ ॥

भा० टी०—सन्मुख प्रवीण गवैये गातेहों, दाहिने बाँये दक्षिणदेशके सरस कवि उत्तम काव्य सुनातेहों, और पीछेसे चमरढोरनेवाली सुन्दरास्त्रियोंके कङ्कणोकी झुनकारका शब्द सुनाईदेता हो, जो तुझको ऐसी सामग्री प्राप्तहो तौ संसारके रसका स्वाद लेनेमे मग्न हो, नहीं तो हे चित्त ! शीघ्रही स्थिरसमाधिमें प्रवेशकर॥५८॥

छप्पय—सन्मुख सरससुराग गुनी गावत हैं निशदिन । दहिने बायें पढत दक्षिणी हैं छिनहीं छिन । लिये दुहू घां चौर करत ठाढी नवनारी । झनक मनक धुन होत लगत काननकूं प्यारी । जो मिलै तोहिं यह सौंज सब तौ तू करि संसाररति । नहि मिलै इतीहू तौं इतैं साधत क्यों न समाधिगति ॥ ५८ ॥

विरमत बुधः योषित्संगात्सुखात् क्षणभंगुरात्कुरुत करुणामैत्रीप्रज्ञावधूजनसंगमम् ॥ न खलु नरके हाराक्रान्तं घनस्तनमण्डलं शरणमथवा श्रोणीबिम्बं रणं मणिमेखलम् ॥ ५९ ॥

सं० टी०—अधुना क्षणभंगुरात् स्त्रीसुखाद्वारयन् दैवसम्पल्लक्षणस्त्रीसंगं मित्रभावेन शिक्षयति । विरमेति । हे बुधाः ! सारासारविवेकिनो योषितां स्त्रीणां संगो यस्मिंस्तस्मात् क्षणभंगुरात् सुखात् यूयं विरमत विरक्ता भवत । करुणा च मैत्री च प्रज्ञा च प्रकृष्टबुद्धिस्ता एव वधूजनाः स्त्रीजनास्तेषां सङ्गमं सङ्गतिं कुरुत । खलु यस्मान्नरके हारैः पुष्पादिनिर्मितैराक्रान्तं वेष्टितं घनस्तनयोर्मण्डलं शरणं रक्षकं नास्ति । अथवा रणन्ती शब्दायमानामणीनां मेखला कटिसूत्रं यस्मिंस्तच्छ्रोणीविम्बं नितम्बमण्डलं नरके शरणं नास्ति । तस्मात् प्रथमत एव स्त्र्यादिसुखं दूरतः परित्यज्य मैत्र्यादीन् सम्पाद्य सुखी भवेति भावः ॥ योषित्संगं परित्यज्य प्रज्ञा कार्या च सत्पथे । येन गच्छन् पुमान् याति तच्छम्भोः परमं पदम् ॥ १ ॥ हरिणीवृत्तमिदम् ॥ ५९ ॥

भा. टी.–हे पण्डितो ! स्त्रियोंके सङ्गमरूपी क्षणभंगुरसुखसे विश्राम लो, और मैत्री करुणा और प्रज्ञारूपी वधूसे सङ्गम करो क्योंकि जिस समय नरकमें ताडना होगी उससमय हारोंसे भूषित स्त्रियोंके स्तनमण्डल और शब्दायमान क्षुद्रघण्टिकासे शोभायमान कटि सहायता नहीं करेगी ॥ ५९ ॥

सोरठा—तजि तरुणीसों नेह, बुद्धिबधूसों नेह कर ।
नरक निवारत येह, वहै नरक ले जातहै ॥ ५९ ॥

मातर्लक्ष्मि भजस्व कंचिदपरं मत्कांक्षिणी मास्म भूर्भोगेभ्यः स्पृहयालवो नहि वयं का निःस्पृहणामसि ॥ सद्यः स्यूतपलाशपत्रपुटिकापात्रे पवित्रीकृते भिक्षासक्तुभिरेव संप्रति वयं वृत्तिं समीहामहे ॥ ६० ॥

सं० टी०–हे मातर्लक्ष्मि ! कञ्चिदपरं धनार्थिनं भजस्व सेवय मयि कांक्षा यस्याः सा मदिच्छावती त्वं मास्मभूः माभव । हि यस्मात् वयं भोगेभ्यः स्पृह्यालवो भोगलिप्सवो न भवामोऽतोनिस्पृहाणां त्वं कासि न कापीत्यर्थः । तर्हि तव जीविका कथं स्यादिति तत्राह । सद्यः शीघ्रमेव स्यूतं निर्मितं यत्पलासपत्राणां पुटिकापात्रं दोणपात्रं तस्मिन् पवित्रीकृते जलप्रोक्षणेन शुद्धिकृते भिक्षया प्राप्तैः सक्तुभिरेव सम्प्रतीदानीं वृत्तिं जीविकां वयं समीहामहे कर्तुमिच्छाम इत्यर्थः । यःप्रार्थनां सदा हित्वात्यक्त्वाप्ताग्निस्पृहो जनः । भिक्षाशनं प्रकुर्वाणः शिव स्वान्ते सदा स्मरेत् ॥ १ ॥ शार्दूलविक्रीडितं वृत्तमिदम् ॥ ६० ॥

भा० टी०–हे लक्ष्मि मात ! अब तूं किसी अन्यपुरुषका सेवनकर हमारी आकांक्षा मतकरो । क्योंकि हमको विषय भोगकी इच्छा नहीं हैं, और ( तूं जानतीही है ) कि जिनको कुछ इच्छा नहीं है, उनके निकट तूं तुच्छ है । अब तो हम केवल हरे ढाकके पत्तोंके बनेहुए पवित्र दोनामें भिक्षाके सत्तूसे जीवन निर्वाह करनेकी इच्छा रखतेहैं ॥ ६० ॥

दोहा–मोकों तजि भजि औरकों, येरी लक्ष्मी मात ।
हौं पलाशके पातमें मांग्यौ सतुआ खात ॥ ६० ॥

यूयं वयं वयं यूयमित्यासीन्मतिरावयोः ॥ किं जात
मधुना मित्र यूयं यूयं वयं वयम् ॥ ६१ ॥

सं० टी०–अविवेकदशायां मोहेनावयोरभेदेऽपि विवेकदशायां केनाप्यचिन्त्यमहिम्ना वैराग्येण तत्त्वज्ञानेन वा भेदो जात इत्याह । यूयमिति । भो मित्र ! मोहादविवेकदशायामतिस्निग्धयोः पितापुत्रयोरिवास्माकं स्नेहादभेदमतिरासीत् यूयं वयं वयं यूयमिति । अधुनेदानीं किमप्यपूर्वं वैराग्यं जातं येन यूयमेव विषयसक्ताः वयं वयमेव सर्वस्माद्विरक्ता इत्यर्थः । यद्वाऽधुना किमप्यपूर्वं तत्त्वज्ञानं जातं येन यूयं यूयमेवाज्ञा एव स्थिताः । वयं वयमेव शुद्धसच्चिदानन्दरूपा जाता इत्यर्थः ॥ पुराऽवयोरभेदोऽभूदज्ञानादधुना पुमाः येन यस्त्वं स एव त्वमहन्तु त्वद्विलक्षणः ॥ १ ॥ अनुष्टुब्वृत्तमिदम् ॥ ६१ ॥

भा० टी०–हे मित्र ! जो तुम हो सो हम हैं; और जो हम हैं सो तुम हो, परस्पर कुछ भेदही नहीं है यह मति हमारी प्रथमही थी, अब क्या नई बात होगई कि तुम तुमही हो, और हम हमही हैं, अर्थात् तुम विषयासक्त हो, और हम सबसे विरक्त हैं ॥ ६१ ॥

दोहा–तुम हम हम तुम एकहैं, सबबिधि रह्यौ अभेद ।
अब तुम तुम हम हमहिं हैं, भयौ कठिन यह भेद ॥ ६१ ॥

बाले लीलामुकुलितममीमन्थरा दृष्टिपाताः किं क्षिप्यंते विरम विरम व्यर्थ एष श्रमस्ते ॥ संप्रत्यन्ये वयमु परतं बाल्यमास्था वनान्ते क्षीणो मोहस्तृणमिव जगज्जालमालोकयामः ॥ ६२ ॥

सं० टी०-बाल इति। हे बाले हे सुन्दरि। तावकीना लीलामुकुलितं अमी मन्थरा दृष्टिपाता अस्मासु किं क्षिप्यन्ते विरम विरम। एष ते तव श्रमो व्यर्थो निरर्थकः। सम्प्रति वयं अन्ये ते न भवामः। अस्माकं बाल्यमुपरतं। अस्माकमास्था वनान्ते। कथं। मोहः क्षीणो गतः। इदं जगज्जालं तृणमिव तुच्छमालोकयामो विलोकयामः॥ ६२॥

भाषा टीका-हे बाले! लीलासे किंचित् मुकुलित इन मन्द कटाक्षोंको हमपर क्यौं फैंकती है? विश्राम ले। कारण कि यह तेरा श्रम व्यर्थ है, अब हम औरही हो गये हैं, हमारी बाल्यवस्था बनमेंही व्यतीत होगई, और अब हमारा अज्ञान नष्ट होगया है; इस समय जगत्रूपी जाल हमको तृणके समान तुच्छ दिखाई देता है॥ ६२॥

छप्पय-करि २ बांकें नैन हाय तू हमें निहारत। करत वृथाही खेद वादि तन बसन सँवारत। हम बनवासी लोग बालपन खोयो बनमें। तजी जगतकी आस कामना रही न मनमें। तृणके समान जानत जगत मोहजाल तोड्यौ तमक। आनन्द अखण्डित पाय हम रहे ज्ञानकी छाक छक॥ ६२॥

इयं बाला मां प्रत्यनवरतमिन्दीवरदलप्रभाचोरं चक्षुः क्षिपति किमभिप्रेतमनया॥गतो मोहोऽस्माकं स्मरकुसुमबाणव्यतिकरज्वरज्वाला शान्ता तदपि न वराकी विरमति॥ ६३॥

सं० टी०-पूर्वकथितां वैराग्यस्थितिमधुना प्रकारान्तरेण वर्णयति। इयमिति। इयं बाला मांप्रति चक्षुर्नेत्रं अनवरतं निरन्तरं किं क्षिपति। कथंभूतं चक्षुः इन्दीवरदलप्रभाचोरं इन्दीवरस्य कमलस्य दलं इन्दीवरदलं तस्य प्रभां चोरयतीति इन्दीवरदलप्रभाचोरम्। अनया किमभिप्रेतं किं वाञ्छयते। अस्माकं मोहो गतः। स्मरकुसुमबाणव्यतिकरज्वरज्वाला शान्ता वराकी तदपि न विरमति विरामं न व्रजाति। एवं जाते सति कामिन्याः कटाक्षपातो निरर्थक इति भावः। शिखरिणीवृत्तमिदम्॥ ६३॥

भा.टी.-यह सुन्दरी जो मुझपर कमलकीभी शोभा चुरानेवाले नेत्रोंके कटाक्षोंको फैंकतीहै इससे इसका क्या प्रयोजन है, हमारा मोह तो नष्ट हो गयाहै, और कामदेवके पुष्परूपीबाणोंसे निकलीहुई अग्निकी ज्वालाभी शान्त होगई है, परन्तु यह वराकी फिरभी शांत नहीं होती है॥ ६३॥

दोहा-केहि कारण डारत बयन, कमल नयन यह नार।
मोह काम मेरे नहीं, तऊ न तिय चित हार॥ ६३॥

रम्यं हर्म्यतलं न किं वसतये श्राव्यं न गेयादिकं किं वा प्राणसमासमागमसुखं नैवाधिकं प्रीतये॥ किंतूद्भ्रा

न्तपतत्पतङ्गपवनव्यालोलदीपांकुरच्छायाचंचलमाकल
य्य सकलं संतो वनांतं गतः ॥ ६४ ॥

सं० टी०—पुरुषेण सर्वमस्थिरस्थायिनं विहाय वनमेवाश्रयणीयमित्याह । रम्यमिति । सन्तः सत्पुरुषा वनान्तं गताः । किमिति सम्भावनायाँ । तेषां वसतये निवासाय हर्म्यतलं रम्यं नाभूत्किं ।] श्राव्यं श्रवणयोग्यं गेयं गानं नाभूत्किम् । अधिकप्रीतये प्राणसमायाः स्त्रियाः सुखं नाभूत्किम् एतत्सर्वं अभूदिति यावत् । तथापि सन्तो वनान्तं गता वनं सेवयामासुः । किन्तूद्भ्रान्तपतत्पतङ्गपवनव्यालोलदीपांकुरच्छाया चंचलं सकलं जीवलोकमाकलय्य विचिन्त्य हृदये ज्ञात्वा इत्यर्थः । शार्दूलविक्रीडितं वृत्तमिदम् ॥ ६४

भा० टी०—सन्तजनोंके रहनेके लिये क्या सुन्दर महल नहीं थे ? क्या उनके सुननेयोग्य उत्तमोत्तम गीत नहीं थे ? क्या अधिक प्रीति उत्पन्नकरनेवाली प्राणप्यारी स्त्रीका समागमसुख उनके लिये नहीं था ? यह सब कुछ था ? वे तौ इस संसारको गिरतेहुए पतङ्गकी पवनसे हिलतीहुई दीपककी छायाके समान चञ्चल समझकर वनको चलेगये ॥ ६४ ॥

छप्पय—महल महारमणीक कहा बसिवे नहिं लायक । नाहिं न सुनवे योग कहा जो गावत गायक । नवतरुणीके संग कहा सुखहू नहिं लागत तौ काहेकौ छांड २ ये वनकों भागत । इन जानलियौ या जगतको जैसे दीपक पवनमें । बुझिजात छिनकमें छवि भरयो होत अंधेर भवनमें ॥ ६४ ॥

किं कन्दाःकन्दरेभ्यःप्रलयमुपगता निर्झरा वा गिरि
भ्यःप्रध्वस्ता वा तरुभ्यः सरसफलभृतो वल्कलिन्यश्च
शाखाः ॥ वीक्ष्यन्ते यन्मुखानि प्रसभमुपगतप्रश्रयाणां
खलानां दुःखोपात्तालपवित्तस्मयपवनवशान्नर्तित
भ्रूलतानि ॥ ६५ ॥

सं० टी०—कन्दादौ जीवनोपाये सति किं खलमुखनिरीक्षणेनेत्याह । किं कन्दा इति । कन्दरेभ्यः पर्वतगुहाभ्यः क्षुधानिवृत्तिकरा औषधिमूलभूताः कन्दाः किं प्रलयं विनाशमुपगताः प्राप्ताः । गिरिभ्यो निर्झरा जलस्राविणस्स्रोतसो वा प्रलयमुपगताः वाथवा तरुभ्यः सरसं फलं बिभ्रति या वल्कलिन्यस्तावि शिष्टाः शाखास्तः प्रध्वस्ता भग्नाः । यस्मात् प्रसभमतिशयेनोपगतो नष्टः प्रश्रयो येषां तेषां दुर्जनानां खलानां मुखानि विवेकिभिर्वीक्ष्यन्ते । कथंभूतानि मुखानि दुःखेनोपात्तं यदल्पं वित्तं तस्य यो गर्वः स एव पवनो वायुरोगस्तद्वशान्नर्तिता चलिता भ्रूलता येषु तानि एवंभूतानि तेषां मुखानि कदापि न वीक्षणीयानीतिभावः । जीवनायोपरचितं कन्दादि वसनं हि त्वक् । तस्मात्तत्पदमास्थाय त्यजेद्दुर्जनवीक्षणम् ॥१॥ स्रग्धरावृत्तमिदम् ॥ ६५ ॥

भा० टी०—क्या गुफाओंसे कन्दमूल और पर्वतोंसे पानीके झरने नष्ट होगये ? क्या वृक्षोंकी सरस फल उत्पन्नकरनेवाली शाखाएँ टूटगई ? जो मनुष्य

अविनीत खलोंके दुःखसे प्राप्तकियेहुए अल्पधनके मदसे नाचनेवाले मोहोंसेयुक्त मुखोंकी ओर देखते हैं, अर्थात् खलोंको आश्रय छोडकर सत्पुरुषोंका वनकन्द मूल खाकर रहना उचित है ॥ ६५ ॥

छप्पय–कहा कन्दराहीन भये पर्वत भूतलसे । झरना निर्जल भये कहा जे पूरित जलसे । कहा रहे सब वृक्ष फूल फलविन मुरझाये । सहे खलनके वैन अंधता जो मद छाये । कर संचित धन जे स्वल्पहू इत उत फेरैं भ्रूबिकट । रे मन तू भूल न जाहु कहुँ इन खल पुरुषनके निकट ॥ ६५ ॥

गङ्गातरंगहिमशीकरशीतलानि विद्याधराध्युषितचारु-
शिलातलानि ॥ स्थानानि किं हिमवतः प्रलयं गतानि
यत्सापमानपरपिण्डरता मनुष्याः ॥ ६६ ॥

सं० टी०—अपमानसहितपरान्नरुचिं त्यक्त्वा गङ्गातीरंगिरिगुहानिवासो योग्य इत्याह । गंगातरंगेति । गंगायास्तरङ्गानां हिमाः शीतला ये शीकरा अम्बुकणास्तैः शीतलानि विद्याधरैर्गंधर्वविशेषैरध्युषितानि सेवितानि चारूणि रम्याणि शिलातलानि येषु तानि हिमवतो गिरेः स्थानानि किं प्रलयं नाशं गतानि । यद्यस्मात् सापमानपरपिण्डरता मनुष्या अपमानेन सह वर्तमानो यःपरपिण्डः परदत्तआहाररतत्र रता लुब्धा मनुष्या भवन्तीत्यर्थः । गंगासम्बन्धयुक्तानि । हिमवद्गिरिसन्निधौ । स्थानानि यद्धि विद्यन्ते तदा किं दुष्टसेवया । वसन्ततिलकावृत्तमिदम् ॥ ६६ ॥

भा० टी०—गङ्गाकी तरंगोंके ठण्ढे जलकणोंसे जो शीतल होरहे हैं, और जहां विद्याधर ठौर ठौर पर बैठे हैं, ऐसे हिमालयपर्वतके स्थनोंका क्या लोप होगयाहै, जो अपमान सहन करकेभी मनुष्य पराए दिएहुए अन्नमें रुचि करते हैं ॥ ६६ ॥

दोहा–गङ्गातट गिरिवर गुफा उहां कहा नहिं ठौर ।
क्यों एते अपमान सों खात पराये कौर ॥ ६६ ॥

यदा मेरुःश्रीमान्निपतति युगान्ताग्निनिहतः समुद्राः
शुष्यंति प्रचुरनिकग्राहानिलयाः ॥ धरा गच्छत्यन्तं
धरणिधरपादैरपि धृता शरीरे का वार्त्ता करिकलभक-
र्णाग्रचपले ॥ ६७ ॥

सं० टी०–कैमुतिकन्यायेन शरीरस्यास्थिरतामाह । यदेति । श्रीमान् कनकमयो मेरुर्युगान्तस्य प्रलयकालस्य योऽग्निस्तेन दलितश्चूर्णितः सन् यदा पताति । प्रचुराणां बहूनां मकराणां ग्राहाणां च जलचरविशेषाणां निलया आलयाः समुद्रा अपि तेन युगान्ताग्निना यदा शुष्यन्ति । तथा धरणीधराणां पर्वतानां पादै रन्तर्ग्रावभिर्धृता या धरा पृथिवी साप्यन्तं विनाशं तेनैव यदा गच्छाति तदा करिकलभस्य गजशावकस्य कर्णा

प्रलयपले शरीरे का वार्ता स्थिरत्वसम्बन्धिनी न कापीत्यर्थः ॥ मेर्वादयः स्थिरा नस्युस्तदा किं वपुषः स्थितिः। भविता न तु केषांचिज्ज्ञानन्नेवं शिवं भजेत् ॥ १ ॥ शिखरिणीवृत्तमिदम् ॥ ६७ ॥

भा. टी.–प्रलयकालके अग्निका माराहुआ जब श्रीमान् सुमेरु पर्वत गिरपडताहै बडे२ ग्राहों और मकरोंके स्थान समुद्र जब सूखजातेहैं, और पर्वतोंके पगसे दवीहुई पृथ्वीभी जब नष्ट होजातीहै तौ हाथीके बच्चाके कानके लोंके समान चञ्चल शरीरकी स्थिरताका क्या भरोसाहै ॥ ६७ ॥

दोहा–मेरु गिरत सूखत जलधि धरनि प्रलय व्है जात ।
गजसुतके श्रुति चपल त्यौं, कहा देहकी बात ॥ ६७ ॥

एकाकी निःस्पृहः शान्तः पाणिपात्रो दिगम्बरः ॥
कदा शम्भो भविष्यामि कर्मनिर्मूलनक्षमः ॥ ६८ ॥

सं० टी०–इदानीं वैराग्यपूर्वकं ज्ञानं प्रार्थयति । एकाकीति । हे शम्भो ! एतादृशोऽहं कदा भविष्यामि कीदृश इत्याकांक्षायां सर्वाणि प्रथमान्तविशेषणानि एकाकीत्यादीनि । अद्वितीयः निस्पृह इच्छाशून्यः अतएव शान्तः उपशमी । पाणी हस्तौ पात्रममत्रं यस्य स पाणिपात्रः । दिश एव अम्बरं वस्त्रं यस्य स दिगम्बरः । कर्मणां संचितप्रारब्धाक्रियमाणानां निर्मूलने तत्त्वज्ञानेनाज्ञाननाशद्वारा नाशने क्षमः समर्थ इति एकचारी स्पृहाहीनो दिग्वासः करभाजनः । कदा स्यामि हि तत्त्वज्ञःकर्म दग्धुं सदाशिव ॥ १ ॥ अनुष्टुब्वृत्तदम् ॥ ६८ ॥

भा० टी०–हे शम्भो ! मैं कब एकाचारी, इच्छाशून्य, शान्त, दिगम्बर, पाणिमात्र (अपने हाथोंकोही पात्र बनानेवाला) और कर्मोंकी जड़ उखाडनेमें समर्थ होऊंगा ॥ ६८ ॥

दोहा–एकाकी इच्छारहित पाणिपात्र दिगवस्त्र ।
शिव शिव हौं कब होउंगो कर्मशत्रुकौ शस्त्र ॥ ६८ ॥

प्राप्ताः श्रियः सकलकामदुघास्ततः किं दत्तं पदं शिरसि विद्विषतां ततः किम् ॥ सम्मानिताः प्रणयिनो विभवैस्ततः किं कल्पं स्थितं तनुभृतां तनुभिस्ततःकिम् ६९॥

सं टी०—जन्ममरणरूपसंसारनिवृत्तिं विना श्रीप्राप्त्यादि सर्वं व्यर्थमेवेत्याह । प्राप्ता इति । सकलान् मनोऽभिलषितभोगान् दुहन्ति पूरयन्ति याः श्रियस्ता यदि प्राप्तास्तदा ततस्तत्प्राप्तेः किं संसारनिवृत्तिर्भविष्यत्यापि तु नेत्यर्थः । विद्विषतां वैरिणां शिरसि यदि पदं दत्तं न्यस्तं तर्हि ततःकिम् प्रणयिनः प्रियाः सम्बन्धिनो विभवैर्गजतुरगादिभिर्यदि सन्मानिताः सत्कारं प्रापितास्ततः किम् । तनुभृतां जीवानां तनुभिः शरीरैः कल्पं कल्पपर्य्यन्तं यदि स्थितमस्थायि ततःकिं न किमपि । एतैर्भवबन्धनान्मुक्तिर्न भवेदित्यर्थः । श्रियः प्राप्तिर्वैरिजयः कल्पावधि च जीवनम । सर्वं व्यर्थं भवेन्नृणां यदि नापैति संसृतिः ॥ १ ॥ वसन्ततिलकावृत्तमिदम् ॥ ६९ ॥

भा० टी०–यदि सर्वकामनाओंके देनेवाली लक्ष्मी पाई तौ इससे क्या ? शत्रुओंके शिरपर पग धरा तौ इससे क्या ? धनसे मित्रोंका सन्मान किया तौ

इससे क्या ? यदि इस देहसे कल्पपर्यन्त जिये तौ क्या ? अर्थात् जब तक मनुष्य जन्ममरणरूप संसार निवृत्तीको नहीं प्राप्तकरता तब तक उसके लिये यह सब व्यर्थ है ॥ ६९ ॥

दोहा–इन्द्र भये धनपति भये भये शत्रुके साल ।
कल्प जिये तौऊ गये अन्तकालके गाल ॥ ६९ ॥

जीर्णा कंथा ततः किं सितममलपटं पट्टसूत्रं ततः किं
एका भार्या ततः किं हयकरिसुगणैरावृतोवा ततः किं॥
भक्तं भुक्तं ततः किं कदशनमथवा वासरांते ततः किं
व्रह्मज्योतिर्नवान्तर्मथितभवभयं वैभवं वा ततःकिम् ॥७०॥

सं० टी०—जीर्णेति । जीर्णा कन्था ह्व्धा ततः किम् । सितं शुभ्रममलं स्वच्छं पटं वस्त्रं वा पट-सूत्रं दुकूलादिकं ततः किम् । एका अद्वितीया भार्या ततः किम् । हया अश्वाः करिणो गजाश्च तेषां शोभना गणः समूहास्तैरावृतो व्याप्तो वा ततः किम् । भक्तमोदनं भुक्तं ततः किम् । अथवा वासरान्ते दिनान्ते कद शनं कुत्सितभोजनं ततः किम् । तथा व्यक्त प्रत्यक्षं ज्योतिर्ब्रह्म यस्मिंस्तथाविधं मथितं भवभयं संसारभयं येन अन्तः हृदि वैभवं ऐश्वर्यं न ततः किम् । स्रग्धरावृत्तमिदम् ॥ ७० ॥

भा० टी०–यदि पुरानी गुदड़ी धारण की तौ क्या ? उज्ज्वल निर्मल वस्त्र वा पीताम्वर धारण किया तौ क्या ? एकही स्त्री पास रही तौ क्या ? अथवा हाथी घोडों सहित करोडों स्त्रियां रही तौ क्या ? यदि भात आदि उत्तम भोजन किया तौ क्या ? अथवा यदि सायंकालको कुत्सित अन्न खाया तौ क्या ? संसार भयके नष्टकरनेवाली व्रह्मज्योतिको हृदयमें धारण न की और बड़ा वैभव पायाभी तौ इससेभी क्या है ? ॥ ७० ॥

छप्पय–जैसौ कन्था चीर रेशमी सारी वैसी । जैसी नारी एक अश्व गजयुत वहु तैसी । व्यंजन बहुबिध सरस कहा मनकों ललचावै । सांझ समय बिन नौन टूक सोउ भूख बुझावै । जो दूरि करत संसार भय व्रह्मज्योति उर नहिं धर्‌यो ॥ सो व्यर्थ कियो इहपायतनु बहु वैभव भरि काकर्‌यो ७०

भक्तिर्भवे मरणजन्मभयं हृदिस्थं स्नेहो न बन्धुषु न
मन्मथजा विकाराः॥ संसर्गदोषरहितो विजने निवासो
वैराग्यमस्ति किमतःपरमर्थनीयम् ॥ ७१ ॥

सं० टी०–यदि भगवद्भक्तिवैराग्यादिकमस्ति तर्हि तेनैव कृतार्थ इत्याह । भक्तिरिति । भवति संसा-रोऽस्मादिति भवः शंकरस्तस्मिन् भक्तिः परानुरक्तिर्वर्तते । मरणजन्मनोर्भयं च हृदिस्थमस्ति, बन्धुषु स्नेहः सक्तिरपि न । तथा मन्मथः कामस्तज्जन्या ये विकाराः परस्त्रीदर्शनसंलापादयस्तेऽपि न सन्ति ।

संसर्गदोषेण रहितो विजने वने निवासः स्थितिर्वर्तते । दैवसम्पन्मूलभूतं वैराग्यं चास्ति । अतो भक्त्यादि साधनकलापात् परमन्यत् किमर्थनीयं याचनीयमस्ति न किमपीत्यर्थः । भक्तिर्भवे जन्मे तिर्ने प्रीतिस्तनयादिषु । हृदि कामविकारो न वैराग्यं किमतःपरम् ॥ १ ॥ वसन्ततिलकावृत्तमिदम् ॥ ७१ ॥

भा. टी.–शिवाजीमें भक्ति हो,मरण और जन्मका भय हृदयमें हो,भाईबधुओंमें स्नेह न हो, कामदेवजनित विकार मनसे दूर हो, और संसर्गदोषसे रहित निर्जनवनमें निवाश हो, तौ फिर बताओ इससे बढकर और वैराग्य क्या है जो ईश्वरसे मांगनेयोग्य है ॥ ७१ ॥

दोहा–मन विरक्त हरभक्तियुत, संगी बन तृणडाभ ।
याहूतें कछु और है, परम अर्थकौ लाभ ॥ ७१ ॥

तस्मादनन्तमजरं परमं विकासि तद्ब्रह्म चिन्तय किमेभिरसद्विकल्पैः ॥ यस्यानुषंगिण इमे भुवनाधिपत्य भोगादयः कृपणलोकमता भवन्ति ॥ ७२ ॥

सं० टी०–ब्रह्मोपदेशपूर्विकां लोकतुच्छतां दर्शयति । तस्मादिति । वैराग्यस्य ब्रह्मचिन्तनार्थत्वात् भो विरक्त त्वं ब्रह्म चिन्तय सम्यग् जानीहि । तर्हि कीदृशं ब्रह्मानन्तं देशकालवस्तुपरिच्छेदशून्यं यतोऽजरं देहधर्मजरादिविकारहीनमतएव परमं सर्वाधिष्ठानतया सर्वोत्कृष्टमतएव विशोकं शोकोपलक्षिता विद्या तत्कार्यरहितं तद्ब्रह्म विहाय किमेभिरसद्विकल्पैः देहेन्द्रियादिष्वात्मदृष्ट्या योगक्षेमार्थमसत्संकल्पैः किं न किमपि सुलभस्ति । यस्मादस्य ब्रह्मानन्दस्यानुषङ्गिणः सम्बन्धिनः सन्त इमे भुवनाधिपत्यभोगादयो ब्रह्मेन्द्रादिसम्बन्धिसुखविशेषास्तत्साधनानि च कृपणलोकमताः विषयसुखेक्षया: कृपणा दीनाः पामरा ये लोकास्तेषां मताः सत्यतयाऽभिमता भवन्ति । एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्तीति श्रुतेः । सच्चिदानन्दरूपं यत्तदन्तःकरणे यदि । आविर्भवेत् प्रियाः सर्वे तत्सम्पर्कोद्भवन्तिवै ॥१॥ वसन्ततिलकावृत्तमिदम् ॥ ७२ ॥

भा. टी.–हे विरक्त! तुम अनन्त, अजर, परमोत्कृष्ट, शोकरहित, ब्रह्मका चिंतन करो, असद् विकल्पोंके करनेसे क्या लाभहै, पामरजनोंको भ्रमितकरनेवाले यह भुवनाधिपत्य भोगविलास आदि सब उसी परब्रह्मके आश्रित है ॥ ७२ ॥

दोहा–ब्रह्म अखण्डानन्दपद, सुमिरत क्यों न निशंक ।
जाके छिन संसर्गसों, लगत लोकपति रंक ॥ ७२ ॥

पातालमाविशसि यासि नभोविलंघ्य दिङ्मण्डलं भ्रमसि मानस चापलेन ॥ भ्रान्त्यापि जातु विमलं कथमात्मनीनं तद्ब्रह्म न स्मरसि निर्वृतिमेषि येन ॥ ७३ ॥

सं० टी०–मनश्चापल्यं निरीक्ष्य तस्मान्निवर्तयन् ब्रह्मस्मरणं शिक्षयति । पातालमिति । हे मानस मन चापलेन चंचलतया त्वं पातालमाविशसि प्रविशासि कदाचिन्नभं आकाशं विलंघ्य स्वर्गं यासि, दिग्मण्डलं च भ्रमसि । परन्तु भ्रान्त्यापि विस्मृत्याऽपि जातु कदाचिदात्मनि स्वस्मिन्निष्ठं स्थितं विमलं शुद्धं तद्ब्रह्म कथं कस्मान्न स्मरसि, येन यद्ब्रह्मस्मरणे निर्वृतिं नित्यानन्दमेषि प्राप्नोषीत्यर्थः स्वर्गादिसर्वलोकेषु मनो भ्रमासि किं वृथा । यदि ब्रह्मणि सम्पर्को भ्रमणं शान्तिमेति ते । वसन्ततिलकावृत्तमिदम् ॥ ७३ ॥

भा० टी०–हे चित्त ! तूं अपनी चञ्चलताके वश पातालमें जाताहै, आकाशको फांदताहै, और सब दिशाओंमें भ्रमण करताहै, परन्तु भूलकरभी कभी हृदयमें स्थित विमल उस परब्रह्मका स्मरण नहीं करताहै कि जिसके स्मरणमात्रसे तूं परमानन्दको प्राप्तहोसक्ताहै, बता इसका क्या कारण है ॥ ७३ ॥

कुण्डलिया–फांद्यौ तैं अकाशकों पैठ्यौ तैं पाताल । दशों दिशामें तूं फिर्‌यो ऐसी चंचल चाल ॥ ऐसी चंचल चाल इतै कबहूं नहिं आयौ । बुद्धि सदनको पाय पाय छिनहू न छुवायौ । देख्यो नहि निजरूप कूप अमृतको छांद्यौ । ऐरे मन मति मूढ क्यों न भवबारिधि फांद्यौ ॥७३॥

रात्रिः सैव पुनः स एव दिवसो मत्वा बुधा जन्तवो
धावन्त्युद्यमिनस्तथैव निभृतप्रारब्धतत्तत्क्रियाः ॥
व्यापारैः पुनरुक्तभुक्तविषयैरेवंविधेनामुना संसारेण
कदर्थिताः कथमहो मोहान्न लज्जामहे ॥ ७४ ॥

सं० टी०–कस्यचित् संसारसम्बन्धिकव्यापारैः खिन्नपुरुषस्योक्तिः रात्रिरिति । अहो इति दुःखे । अमुनां एवंविधेन संसारेण कदर्थिता वयं मोहान्मौढ्यात् कथं न लज्जामहे । कैः व्यापारैः । पुनरुक्तविषयैः पुनर्विहितानि पुनरुक्तानि यानि भुक्तानि भोजनानि अन्ये च विषयाः पुनः पुनरुक्तास्तैर्बुधाःपण्डिता जन्तवः प्राणिनः उद्यमिनः उद्यमवन्तो धावन्ति । किंभूता जन्तवः तथैव पुनः पुनर्निभृत-प्रारब्धतत्तत्क्रियाः वारम्वार निभृताः प्रारब्धास्तत्तत्क्रिया यैस्ते । किं कृत्वा तां रात्रिं मत्वा । चान्यत् पुनस्तथैव दिवसं मत्वा ज्ञात्वा । यतः पुनरपि रजनी पुनरपि दिवसः पुनरपि पक्षः पुनरपि मासः ॥ पुनरपि सायं पुनरपि वर्षं पुनरपि वृद्धः पुनरपि याति समेति च कालः । एवंविधं कालस्य स्वरूपं ज्ञात्वा तस्मात् संसाराद्विरक्तिरेव न भवतीति व्रीडा । शार्दूलविक्रीडितं वृत्तमिदम् ॥ ७४ ॥

भाषा टीका—वेहि रात्रि होतीहै, वेही दिन होतेहैं, यह जानकरभी बुद्धिमान् मनुष्य उद्योग करतेहुए वारम्वार कहे और भोगलिये विषय जिनके ऐसे अनेक व्यापारोंसे पुनः पुनः आरम्भ कियी उन्ही २ क्रियाओंको करते जिस संसारमें डोलते हैं, इस संसारके कदर्थ न किये हैं, तौभी अपनी मूढता हेतुसे अहो आश्चर्य है, कि हम लज्जित नहीं, होतेहैं और इस असारसंसारका परित्याग नहीं करते हैं ॥ ७४ ॥

कुण्डलिया–वेही निशि वेही दिवस वेही तिथि वे वार । वे उद्यम वेही क्रिया वेही विषयविकार । वेही विषयविकार सुनत देखत अरु सूंघत । वेही भोजन भोग जागि सोवत अरु ऊंघत । महा निलज

यह जीव भोगमें भयौ विदेही। अजहूं पलटत नाहिं कढत गुण वेके वेही ॥ ७४ ॥

महीशिष्टा शय्या विपुलमुपधानं भुजलता वितानं चाकाशं व्यजनमनकूलोऽयमनिलः ॥ स्फुरद्दीपश्चन्द्रो विरतिवनितासङ्गमुदितः सुखं शान्ता शेते मुनिरतनुभूतिर्नृप इव ॥ ७५ ॥

सं० टी०—अधुना विरक्तस्य मुनेरैश्वर्येण राजतुल्यतां वर्णयति । महीति । मुनेः पृथिव्येव शिष्टा श्रेष्ठा शय्याऽस्ति । भुजलतैव विपुलमुत्तममुपधानामुपबर्हणं । आकाशमेव वितानमुपरितनावरकवस्त्र मण्डपः । अयमनुकूलोऽनिलो वायुर्व्यजनम् । चन्द्र एव स्फुरद्दीपः विरतिः विरक्तिरेव वनिता स्त्री तस्याः सङ्गेन मुदितः आनन्दयुक्तः एवंभूतो मुनिः शान्तःसन् सुखं शेते क इवातनुभूतिरतिसमृद्धो नृप इवेत्यर्थः। मह्यादि सय्यादि विना श्रमेण लब्ध्वा मुनिः शान्तमना वितृष्णः । शेते सुखं भूप इवालघुश्रीः शिवं स्मरन्नष्टजगद्विमोहः ॥ १ ॥ शिखरिणीवृत्तमिदम् ॥ ७५ ॥

भा० टी०—पृथ्वीही जिसकी उत्तम शय्या है भुजाही उत्तम तकिया है, आकाशही जिसका ओढनेका वस्त्र है, यह अनुकूल हवाही जिसका उत्तम पंखा है, चन्द्रमाही जिसका प्रकाशमान दीपक है, विरतिही जिसकी स्त्री है, ऐसे प्रसन्न चित्त शान्त योगीश्वर अतिसमृद्धिमान् राजाओंके समान सुखपूर्वक शयन करतेहैं ॥ ७५ ॥

छप्पय--पृथ्वी परम पुनीत पलंग ताकौ मन मान्यौ। तकिया अपनौ हाथ गगनकौ तम्बू तान्यौ। सोहत चन्द चिराक वीजना करत दशों-दिशि। वनिता अपनी वृत्ति संगही रहत दिवसनिशि। अतुलित अपार सम्पति सहित सोहत हैं सुखमें मगन। मुनिराज महान्नृपराज ज्यों पौढे देखे हम द्दगन ॥ ७५ ॥

त्रैलोक्याधिपतित्वमेव विरसं यस्मिन्महाशासने तल्लब्ध्वासनवस्त्रमानघटने भोगे रतिं मा कृथाः ॥ भोगाः कोऽपि स एक एव परमो नित्योदितो जृम्भते यत्स्वादाद्विरसा भवन्ति विषयास्त्रैलोक्यराज्यादयः ॥ ७६ ॥

सं० टी०—त्रैलोक्येति। हे आत्मन् तत्परब्रह्म लब्ध्वा भोगे रतिं मा कृथाः। यस्मिन् परब्रह्मणि एव निश्चयेन त्रैलोक्याधिपतित्वं विरसं वर्तते। किं भूते भोगे आसनवस्त्रमानघटने आसनं सिंहासनसुखासनादि, वस्त्राणि चीरांशुकपट्टदुकूलादिनि, मानो महत्वास्तित्वमानादिः तेषां घटनं यस्मिन् तस्मिन्। एवंविधे भोगे का

रतिः। कोऽपि सम्भोग एक एव परमो नित्योदितः सन् उज्जृम्भते। यत्स्वादात् यस्य ब्रह्मणो रसास्वादात् त्रैलोक्यराज्यादयो विषया विरसा भवन्ति। मोक्षदायकत्वादित्यर्थः। शार्दूलविक्रीडितं वृत्तमिदम् ॥ ७६ ॥

भा० टी०—हे आत्मन्! जिस ब्रह्मज्ञानके प्राप्तहोनेसे त्रिभुवनका राज्य निस्सार होजाताहै उसको पाकर भोजन वस्त्र और मनके लिये भोगोंमें प्रीति मतकर, वही एक भोग सबसे श्रेष्ठ और नित्य उदित अर्थात् प्रकाशित है जिसके स्वादके सन्मुख त्रैलोक्य राज्यादि सम्पूर्ण ऐश्वर्य नीरस होजातेहैं ॥ ७६ ॥

सोरठा—कहा विषयको भोग, परम भोग इक और है।
जाके होत सँयोग, नीरस लागत इन्द्रपद ॥ ७६ ॥

किं वेदैः स्मृतिभिः पुराणपठनैः शास्त्रैर्महाविस्तरैः
स्वर्गग्रामकुटीनिवासफलदैः कर्मक्रियाविभ्रमैः ॥
मुक्त्वैकं भवबन्धदुःखरचनाविध्वंसकालानलं स्वात्मा
नन्दपदप्रवेशकलनं शेषा वणिग्वृत्तयः ॥ ७७ ॥

सं० टी०—एकमात्मज्ञानं मुक्त्वा वेदाध्ययनादि लोकप्रतारणार्थं स्वर्गार्थं कर्म च निष्फलमित्याह। किं वेदैरिति। सांगोपांगाधीतैर्वसिष्ठादिमुनिप्रोक्ताभिः स्मृतिभिः पुराणानां स्कान्दनारदीयादीनां पठनैर्महाविस्तारयुक्तैर्व्याकरणादिशास्त्रैश्च किं न किमपि संसारनिवृत्तिलक्षणं फलं भवतीत्यर्थः। तथा स्वर्ग एव ग्रामस्तस्य कुट्यां निवासलक्षणं फलं ददातीति तथा तैः कर्मरूपा या ज्योतिष्टोमादिक्रियास्तासां विभ्रमैर्विलासैश्च किं न किमप्युक्तं फलं। तर्हि फलाभावे किमिति कुर्वन्तीति तत्राह। मुक्त्वेति। भवस्य संसारस्य यानि त्रिविधदुःखानि तेषां भारो गुरुत्वं तस्यज्ञानकृता या रचना निर्माणं तस्य विध्वंसे विनाशे कालानलं प्रलयकालाग्निरूपं स्वात्मनन्दस्य पदे स्वरूपे प्रवेशस्तदाकारया स्थितिः तस्य कलनं सम्पादकत्वं तत्त्वज्ञानमेकं मुक्त्वा परित्यज्य शेषा वेदाध्ययनादयो वणिजां वृत्तयः व्यवहारमात्रमित्यर्थः। श्रुतिस्मृतिपुराणैस्तु स्वात्मानं यो न वेद वै। तस्य क्रियाकलापा हि पुनरावृत्तिदायिनः ॥ १ ॥ शार्दूलविक्रीडितं वृत्तमिदम् ॥ ७७॥

भा० टी०—श्रुति स्मृति पुराण और बड़े बड़े शास्त्रोंके पढनेसे क्या प्रयोजन है, केवल स्वर्गरूपी ग्राममें कुटी बनाकर रहनाही जिनका फल है ऐसी जो कर्मरूपी क्रिया है उनके विलासोंसे क्या प्रयोजन है? संसारके बन्धनरूपदुःखोंकी रचना विध्वंसकरनेके लिये प्रलयाग्निके सदृश ब्रह्मानन्दपदमें प्रवेशके उद्योगके अतिरिक्त शेष सब वणिग्वृत्ति है ॥ ७७ ॥

छप्पय—श्रुति अरु समृति पुरान पढे विस्तारसहित जिन। साधे सब शुभकर्म स्वर्गकौ वास लह्यौ तिन। करत तहां हू चाल कालकौ ख्याल भयंकर। ब्रह्मा और सुरेश सबनको जन्ममरणडर। ये वणिकवृत्ति देखी सकल अन्त नहीं कछु कामकी। अद्वैत ब्रह्मको ज्ञान यह एक ठौर आरामकी ॥ ७७ ॥

आयुःकल्लोललोलं कतिपयदिवसस्थायिनी यौवन श्री
रर्थाःसंकल्पकल्पा घनसमयतडिद्विभ्रमा भोगपूगाः ॥
कण्ठाश्लेषोपगूढं तदपि च न चिरं यत्प्रियाभिः प्रणीतं
ब्रह्मण्यासक्तचित्ता भवत भवभयाम्भोधिपारं तरीतुम् ॥७८॥

सं० टी०—इदानीं जगज्जीवनादीनां क्षणभंगुरत्वं दर्शयन् सदैकरसे ब्रह्मणि चित्तस्थैर्यं मोक्षाय शिक्षयाति । आयुरिति । हे उत्तमा ब्रह्मणि प्रत्यगभिन्ने आसक्तं तत्परं चित्तं येषां ता दृशा यूयं भवत किमर्थमिति चेत्तत्फलं दर्शयति । भवभयाम्भोधिपारं तरीतुं भवस्य जननमरणलक्षणस्यसंसारस्य यद्भयं स एवाम्भोधिः सागरस्तस्य पारो मोक्षस्तं प्राप्तुमित्यर्थः । ब्रह्मातिरिक्तं जगत्यस्थिरत्वमाह आयुरित्यादि पादत्रयेण । जीवनं कल्लोललोलं जलतरङ्गवच्चपलं, तथा यौवनस्य श्रीः शोभा कतिपयदिवसात् शीलमस्याः सा अर्थास्तु घनतुरगादयः संकल्पकल्पाः अस्थिरत्वेन संकल्पतुल्याः । तथा भोगपूगा विषयजन्याः सुखानुभवसमूहाः घनसमये मेघकाले या तडिद्विद्युत्तद्वद्विभ्रमो विलासो येषां तादृशाः सन्ति । प्रियाभिः स्त्रीभिः सह यत्प्रणीतं कृतं कण्ठाश्लेषोपगूढमालिङ्गनसुखं तदपि न चिरं किन्तु क्षणिकं तस्मात् प्रत्यगभिन्ने ब्रह्मण्येव शाश्वते मोक्षाय मनः समाधेयमितिभावः ॥ जीवस्यानर्थदा भोगा जीवितं चातिचञ्चलम् । तदद्य ब्रह्मण्यासक्तचित्ताः किन्न भवन्त्यहो ॥१॥ स्रग्धरावृत्तमिदम् ॥ ७८ ॥

भा०टी०—आयु जलके तरङ्गोंके समान चञ्चलहै,युवावस्थाकी शोभा अल्पकालतक रहनेवाली है, धन मनके संकल्पसेभी क्षणिक है, सम्पूर्ण भोग वर्षाकालीन विद्युलीके समान चञ्चल हैं, और प्यारी स्त्रीका आलिङ्गनकरना बहुतादिनतक स्थिर नहीं रहता, इस लिये संसाररूपी भवसागरसे पारहोनेके लिये हे मनुष्यो! ब्रह्ममें अपने चित्तको लीनकरो ॥ ७८ ॥

छप्पय—जलकी तरल तरङ्ग जात ज्यौं जात आयु यह । जोवनहू दिन चार चटककी चोंप चाह चह । ज्यौं दामिनीप्रकाश भोग सब जानहु तैसें । तैसेही यह देह, अथिर थिर व्है है कैसे । सुनि एरे मेरे चित्त तूं हेहि ब्रह्ममें लीनगति । संसार अपार समुद्र तर करि नौका निजज्ञानरति ॥ ७८ ॥

ब्रह्माण्डमंडलीमात्रं न लोभाय मनस्विनः ॥
शफरीस्फुरतेनाब्धेः क्षुब्धता न तु जायते ॥ ७९ ॥

सं० टी०—आब्रह्मभुवना विषया मनस्विनो न क्षोभयन्तीति सदृष्टान्तमाह । ब्रह्माण्डमंडलीमात्रमिति । ब्रह्माण्डस्थमण्डली समूहस्तन्मात्रं यद्वाऽल्पं मण्डलं मण्डली तन्मात्रं ब्रह्माण्डं मनस्विनः स्वात्मविचारशीलस्य लोभाय न भवति । तत्र दृष्टान्तमाह । शफरीस्फुरितेनाल्पमत्स्यप्रचारेणाब्धेः समुद्रस्य यथा क्षुब्धता क्षोभो न जायते तद्वदित्यर्थः ॥ ब्रह्माण्डसम्पदः सन्ति न लोभाय मनस्विनः ॥ क्षुद्रमत्स्यप्रचारेण सिन्धुर्नैवोपसर्पति ॥ अनुष्टुब्वृत्तमिदम् ॥ ७९ ॥

भा० टी०—मनस्वी अर्थात् आत्मविचारशील मनुष्यके लुभानेके लिये यह ब्रह्माण्डमण्डल तुच्छ है, जैसे मछलीके उछलनेसे समुद्र नहीं उमगता । इसक

तात्पर्य यह है, मनस्वीका चित्त समुद्रवत् गम्भीर है, त्रिभुवनकी विभूति उसके सन्मुख तुच्छ मछलीके समान है ॥ ७९ ॥

दोहा-ज्यौं सफरीकों फिरत लख सागर करत न क्षोभ ।
अण्डासे ब्रह्माण्डको त्यौं संतनकों लोभ ॥ ७९ ॥

यदासीदज्ञानं स्मरतिमिरसंस्कारजनितं तदा दृष्टंनारी मयमिदमशेषं जगदपि॥ इदानीमस्माकं पटुतरविवेका ञ्जनजुषां समीभूता दृष्टिस्त्रिभुवनमपि ब्रह्म तनुते ॥८०॥

सं० टी०-यदेति । यदा यस्मिन् प्रस्तावे अज्ञानं आसीत्तदा इदमशेषं जगदपि मया नारीमयं दृष्टं। किंभूतमज्ञानं स्मरतिमिरसंस्कारजनितं स्मरस्य कन्दर्पस्य यत्तिमिरमन्धकारस्तस्य संस्कारेण पूर्वभवोद्भवपरिणामेन जनितं । इदानीं साम्प्रतमस्माकं समीभूता दृष्टिः समतापरिणामेनालंकृतं चेतः त्रिभुवनमपि ब्रह्म तनुते परब्रह्मस्वरूपं विस्तारयति । किंभूतानामस्माकं पटुतरकाञ्जनजुषां प्रकृष्टपटुर्योऽसौ विवेकः पटुतरविवेक एवांजनं जुषन्ति ते पटुतरविवेकांजनजुषस्तां। अथ यथास्थितसंसारस्य स्वरूपं पश्यामः शिखरणीवृत्तमिदम्॥८०

भा० टी०-कामदेवके अन्धकारजनित अज्ञानकेकारण यह सम्पूर्ण जगत् मुझको स्त्रीमय दिखाई देताथा परन्तु इस समय हमारी दृष्टि विवेकरूपी अञ्जनके लगानेसे स्वच्छ होगई है जिससे सम्पूर्ण जगत् ब्रह्ममय दिखाई देताहै ॥ ८० ॥

दोहा-काम अन्ध जबही भयौ तिय देखी सबठौर ।
अब विवेक अंजन किये लख्यौं अलख सिरमौर ॥ ८० ॥

रम्याश्चन्द्रमरीचयस्तृणवती रम्या वनान्तस्थली रम्यः साधुसमागमः शमसुखं काव्येषु रम्याः कथाः कोपोपाहितबाष्पबिन्दुतरलं रम्यं प्रियायाः मुखं सर्वं रम्यमनि त्यतामुपगते चित्ते न किंचित्पुनः ॥ ८१ ॥

सं० टी०-चित्तेऽस्थिरे सति सकलमपि वस्तु अरम्यमिव भात्यतः चित्तस्थैर्यमेव सम्पादनीय मित्याह । रम्या इति । चन्द्रमरीचयो रम्याः । वनान्तःस्थली रम्या । किंभूता वनान्तास्थली तृणवती शाद्वला ॥ साधुसमागमो रम्यः ॥ शमसुखं रम्यं ॥ काव्येषु कथा रम्याः ॥ अन्यच्च प्रियाया मुखं रम्यं ॥ किंभूतं मुखं कोपोपाहितबाष्पबिन्दुतरलं कोपोपाहितः कोपेन निवेशितो यो बाष्पबिन्दुस्तेन तरलं चंचलम् ॥ पुनः अनित्यतामुपगते सम्प्राप्ते चित्ते सर्वं न किंचित् रम्यम् ॥ शार्दूलविक्रीडितं वृत्तमिदम् ॥८१॥

भा० टी०-पहिले चन्द्रमाकी किरणें अच्छी लगतीथीं, हरिततृणवाली बनभूमि सुहावनी मालूम होतीथीं, साधुजनोंका समागम श्रेष्ठ लगताथा, शमतारूपी सुख अच्छा लगताथा, काव्योंमें कथा रमणीक मालूम होतीथीं, और क्रोधके कारण निकलेहुए आसुओंकी बून्दोंसे चञ्चल प्रियाका मुख रमणीक दिखाई देताथा, परन्तु जबसे संसारकी अनित्यता मालूम हुई तबसे सबकी रमणीयता जातीरही अर्थात् कुछ अच्छाही नहीं लगता ॥ ८१ ॥

छप्पय—चन्द चाँदनी रम्य रम्य वनभूमि पहुपयुत। त्यौंही अति-रमणीक मित्र मिलवौहै अद्भुत। वनिताके मृदु बोल महारमणीक बिरा-जत। मानिनिमुख रमणीक दृगन असुअन झर साजत। ए कहे परम रमणीक सब सब कोऊ चितमें चहत। इनकों विनाश जब देखिये तब इनमे कछुहु न रहत॥ ८१॥

भिक्षाशी जनमध्यसंगरहितः स्वायत्तचेष्टः सदा दाना-
दानविरक्तमार्गनिरतः कश्चित्तपस्वी स्थितः॥ रथ्या
क्षीणविशीर्णजीर्णवसनैः संप्राप्तकन्थासखिर्निर्मानो
निरहंकृतिः शमसुखाभोगैकबद्धस्पृहः॥ ८२॥

सं० टी०—इदानीं साधनसम्पत्तिसहितं तपस्विनं दुर्लभत्वेन वर्णयति। भिक्षाशीति। एवंविध-स्तपस्वीजनः कश्चिद्विरलो जगति स्थितोऽस्तीति सम्बन्धः। प्रथमान्तैस्तमेव विशिनष्टि। भिक्षाशी भि-क्षाभोजनः, तथा जननां मध्येऽपि संगरहितः पुष्करपलाशवन्निर्लेपः, तथा सदा स्वायत्ता स्वाधीना चेष्टा देहे-न्द्रियादिव्यापारो यस्य सः, तथा दानं सत्पात्रेभ्यः श्रद्धया द्रव्यार्पणं, आदानं सत्क्रियेभ्यस्तदर्हणं ताभ्यां विरक्ते निवृत्ते मार्गे निरतः, तथा रथ्यायां वीथीमार्गे लब्धानि यानि विशीर्णानि पतितानि जीर्णवसनानि तैः सम्प्रोता सम्यग्ग्रथिता या कन्था तस्या धरो धारकः, तथा निर्मानः परकृतसत्काराभिलाषरहितः, तथा निरहं कृतिः ज्ञानादिगुणाहंकारवर्जितः, तथा शम उपशमः समाधिस्तस्य यत्सुखं तस्य भोगे विस्तारे एका मुख्या बद्धा स्पृहा इच्छा येन सः, एवं निवृत्तिमार्गे निरतोऽतिदुर्लभ इति भावः। मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धयः॥ यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्वतः इति भगवदुक्तेः। भिक्षाशी जनमध्येऽपि सर्वसंगविवर्जितः। दानमानापमानेभ्यो रहितो यः सदुर्लभः॥ १॥ शार्दूलविक्रीडितं वृत्तमिदम्॥ ८२॥

भा० टी०—भिक्षाटन करके भोजन करनेवाले मनुष्योंके मध्यमेंभी संगतिरहित, सर्वदा स्वाधीनचेष्टाकरनेवाले, देनेसेभी और लेनेसेभी विरक्तमार्गमेंही रत रहनेवाले, मार्गमें पडे फटे पुराने कपडोंकी गुदड़ी धारणकरनेवाले, मान और अहंकारसे रहित, और समसुख अर्थात् ब्रह्मानन्दमेंही इच्छा रखनेवाले तपस्वी विरलेही होतेहैं॥ ८२॥

सोरठा—उंच्छवृत्ति गति मान, समदृष्टी इच्छारहित।
करत तपस्वी ध्यान, कन्थाकौ आसन किये॥ ८२॥

मातर्मेदिनि तात मारुत सखे तेजः सुबन्धो जल भ्रा-
तर्व्योम निबद्ध एव भवतामेष प्रणामाञ्जलिः॥ युष्म-
त्संगवशोपजातसुकृतोद्रेकस्फुरन्निर्मलज्ञानापास्तसम-
स्तमोहमहिमा लीये परे ब्रह्मणि॥ ८३॥

सं० टी०–अधुना देहाकारपरिणतपञ्चभूतानां चिरसम्बन्धित्वात्तान्नतिं कुर्वन् क्षमापयति । मातारिति हे मातर्मेदिनि ! धरणि ! हे तात ! पितर्मारुत वायो ! हे तेजोऽग्ने सखे सन्मित्र ! हे जल सुबन्धो सत् रिवार! हे व्योमाकाश भ्रातः! भवतां पञ्चानामग्रे एषोऽन्त्यःप्रणामांजलिः प्रणामयुक्तः करसम्पुटो मया क्रियते पुनर्देहाः भावात् प्रणामाञ्जलेरभाव इत्यतोऽन्त्यः । तत्कृतोपकारं स्मरन्नाह युष्माकं सङ्गवशेन पाञ्चभौतिक-देहसम्बन्धे जातो यः सुकृतस्य पुण्यस्योद्रेक आधिक्यं तेन स्फुरद्भासमानं यन्निर्मलं ज्ञानं तेनापास्तोऽपगत-स्समस्तः समग्रो मोहमाहिमाऽज्ञानं तत्कार्यं च यस्य सोऽहं कार्यकारणाभ्यां परे ब्रह्मणि लीये स्थूलं सूक्ष्मं च देहं हित्वाविदे इत्यर्थः यामीत्यर्थः । भूम्यादिपञ्चभूतेषु सम्बन्धं बहुकालिकम् । संस्मरंस्तन्नतिं कुर्वन् क्षमापयति सादरम् ॥१॥ शार्दूलविक्रीडितं वृत्तमिदम् ॥ ८३ ॥

भा० टी०–हे पृथ्वि मातर ! हे पिता वायु ! हे सखे तेज ! हे बन्धो जल ! और हे भ्रात आकाश ! मैं तुम पांचोंके सन्मुख हाथ जोडकर अन्त समयका प्रणाम करताहूं। आपकी संगतिके कारण उत्पन्न पुण्यकी अधिकतासे प्रकाशमान् ज्ञानद्वारा मेरी समस्त मोहमहिमा दूर होगई है और मैं अब परब्रह्ममें लीन होताहूं ॥ ८३ ॥

छप्पय–अरी मेदिनी मात तात मारुत सुन एरे । तेज सखा जल भ्रात ब्योम बन्धू सुन मेरे ॥ तुमको करत प्रणाम हाथ तुम आगे जोरत । तुह्मरेही सत्संग सुकृतकौ सिन्धु झकोरत । अज्ञानजनित वह मोहहू मिट्यो तिहारे संगसों । आनन्द अखण्डानन्दको छाय रह्यो रसरंगसों ॥ ८३ ॥

यावत्स्वस्थमिदं कलेवरगृहं यावच्च दूरे जरा यावच्चेन्द्रियशक्तिरप्रतिहता यावत् क्षयो नायुषः ॥ आत्मश्रेयसि तावदेव विदुषा कार्यः प्रयत्नो महान्प्रोद्दीप्ते भवने च कूपखननं प्रत्युद्यमः कीदृशः ॥ ८४ ॥

सं० टी०–अधुना विघ्नबाहुल्याच्छीघ्रमेव श्रेयसे यत्नो विधेय इत्याह । यावदिति । इदं कलेवरगृहं शरीरं यावत्स्वस्थमव्यग्रम्, यावज्जरा वृद्धावस्था दूरे तिष्ठति, यावद्यत्पर्यन्तामिन्द्रियाणां शक्तिरप्रतिहता न नष्टा, यावदायुषो जीवितस्यापि क्षयो विनाशो न तावत्प्रथममेव विदुषा विवेकिना पुरुषेणात्मनः श्रेयसि कल्याणार्थं महान्प्रयत्नः कार्यः । ननु यदा भोगशक्तिर्नश्यति तदा श्रेयसि यत्नं करिष्याम इति तत्राह । सन्दीप्ते इति । भुवने गृहे सन्दीप्ते तु दह्यमाने सति तस्मिन्काले कूपखननं प्रतिय उद्यमो यत्नः स कीदृशो नैव योग्यस्तथा देहेन्द्रियादिशक्तिनाशे श्रेयोर्थे यत्नोऽपि व्यर्थ इत्यर्थः । देहेन्द्रियमनोस्वास्थ्यं यावदेव नृणां स्थितम् । आमानः श्रेयसे तावद्यतेत बुद्धिमान्नरः ॥१॥ शिखरिणीवृत्तमिदम् ८४

भा. टी.–जब तक शरीर पुष्ट और निरोग है, जब तक वृद्धावस्था दूर हैं, जब तक इन्द्रियोंकी शक्ति नष्ट नहीं होतीहै, और जब तक आयुका क्षय नहीं हुवा है तभी तक बुद्धिमान् पुरुषको उचित है कि अपने कल्याणके लिये महान् प्रयत्न करे, क्योंकि घरमें आग लगनेपर कूआ खोदनेसे क्या लाभ होसक्ताहै ॥ ८४ ॥

छप्पय—सर्प सुमनकौ हार उग्र वैरी अरु सज्जन । कंचन मणि अरु लोह कुसुम शय्या अरु पाहन । तृण अरु तरुणी नार सबनपै एक दृष्टि चित । कहूं राग नहिं रोसद्वेष कितहू न कहूं हित । व्है है कब मेरी यहदशा गंगाके तट तप तपत । रस भीने दुर्लभ दिवस ये वीतेंगे शिव२जपत१०८

धैर्यं यस्य पिता क्षमा च जननी शान्तिश्चिरं गेहिनी ॥ सत्यं मित्रमिदं दया च भगिनी भ्राता मनः संयमः ॥ शय्या भूमितलं दिशोऽपि वसनं ज्ञानामृतं भोजनम् ॥ ह्येते यस्य कुटुम्बिनो वद सखे कस्माद्भयं योगिनः ॥ १०९ ॥

सं० टी०—दैवसम्पद्रूपपरिवारवतः कुतोऽपि भयं नास्तीत्याह । धैर्य्यमिति । हे सखे ! त्वं वद ब्रूहि एते कुटुम्बिनो यस्य योगिनस्तस्य कस्माद्भयं न कुतोऽपीत्यर्थः । कुटुम्बिन एवाह यस्य योगिनो धैर्य्यं पिताऽस्ति क्षमा च सहिष्णुता जननी मातापित्रोरिवोभयोः पालकत्वात् । यस्य शान्तिश्चिरं गेहिनी भार्याऽस्ति, तथा सत्यं यथा दृष्टश्रुतकथनरूपमिदं मित्रमस्ति, दया च सर्वभूतहितेच्छा भगिनी, मनःसंयमो मनोनिग्रहो भ्राता, भूमितलं शय्या, यस्य दिश एव वसनं वस्त्रं, ज्ञानामृतं भोजनमित्येतादृशी यस्य सम्पदस्ति तस्य कुतोऽपि भयं नास्तीति भावः । दैवीसम्पद्विमोक्षाय निबन्धायासुरी मता । इति भगवद्वचनात्तद्वतो न कुतोपि भयम् ॥ १ ॥ शार्दूलविक्रीडितं वृत्तमिदम् ॥ १०९ ॥

भा० टी०—हे सखे ! तूही बता कि जिसका धैर्य पिता है, क्षमा जननीहै, शांति भार्या है, सत्य जिसका मित्र है, दया जिसकी भगिनी है, मनःसंयम (मनको रोकना) जिनका भ्राताहै, भूमितल जिसकी शय्या है, दिशा जिसके वस्त्र हैं, और ज्ञानरूपी अमृत जिसका भोजन है उस योगीको किसका भय है ॥ १०९ ॥

छप्पय—धीरज जाको पिता क्षमाहै जाकी जननी । सत्यबचन है मित्र दया है जाकी भगिनी ॥ शान्ति सुबाला नारि भूमितल शय्या सोहै । संयम मनको बन्धु वसन दिक् मनकू मोहै ॥ जिन ज्ञान सुधाकौ असन रखि सब एते परिजन लहैं । फिर योगी को क्यों डर रहै सदा मुदित मन ह्वै रहैं १०९

इति श्री भाषाटीकोपेतं श्रीमद्भर्तृहरिविरचितं
तृतीयं वैराग्यशतकं
समाप्तम् ।

---

छप्पय—जौ लों देह निरोग, और जौ लों न जरा तन। अरु जौ लों बलवान् आयु अरु इन्द्रिनके गन। तौ लों निज कल्याण करनको यत्न विचारत। वह पण्डित वह धीर वीर जो प्रथम सह्मारत। फिर होत कहा जर्जर भये जप तप संयम नहिं बनत। भवकाय उठ्यौ निजभवन जब तब क्योंकर कूपहि खनत॥ ८४॥

नाभ्यस्ता भुवि वादिवृन्ददमनी विद्या विनीतोचिता खड्गाग्रैः करिकुम्भपीठदलनैर्नाकं न नीतं यशः॥ कान्ता कोमलपल्लवाधररसः पीतो न चन्द्रोदये तारुण्यं गतमेव निष्फलमहो शून्यालये दीपवत्॥ ८५॥

सं० टी०—अत्र यौवनस्य त्रिविधं फलं तत्रैकमपि न प्राप्तमित्यनुतपन्नाह। नाभ्यस्तेति। भुवि पृथिव्यां वादिनामनीश्वरबुद्धीनां यो वृन्दः समूहस्तस्य दमनशीला तथा विनीतानां नम्राणामुचिता योग्या या विद्या सा नाभ्यस्ता। तथा करिणां हस्तिनां कुम्भः शिरः पिण्डान्येव पीठानि तेषां दलनं विदारणं यैस्तैः खड्गाग्रैर्यशो नाकं स्वर्गं न नीतं प्रापितम्। कान्तायाः स्त्रियाः कोमलपल्लवसदृशो योऽधरोष्ठस्तस्य रसश्च चन्द्रोदये न पीतः। अहो कष्टं शून्यालये दीपवत्तारुण्यं निष्फलमेव गतमैहिकं सुखमपि न लब्धमित्यर्थः। मानुषं दुर्लभं प्राप्य सद्विद्या नार्जिता भुवि। ज्ञानखड्गैरिन्द्रियारिर्दमितो न कथंचन॥ १॥ शार्दूलविक्रीडितं वृत्तमिदम्॥ ८५॥

भा० टी०—वादियोंको दमनकरनेवाली नम्रजनोंके योग्य विद्याका अभ्यास हमने नहीं किया, तलवारकी धारसे हस्तियोंके मस्तकके पृष्ठभागोंको काटकर स्वर्गतक अपना यश नहीं पहुँचाया, और चाँदनीरातमे सुन्दर स्त्रीके कोमल अधरपल्लवका रसभी पान नहीं किया, हाय! हमारी युवावस्था ऐसे बीतगई जैसे शून्यगृहमें दीपक जलकर अपने आप बुझजाताहै॥ ८५॥

दोहा—विद्या पढी न रिपु दले, रह्यौ न नारिसमीप।
यौबन यह यौंही गयौ, ज्यों सूने गृहदीप॥ ८५॥

ज्ञानं सतां मानमदादिनाशनं केषांचिदेतन्मदमानकारणम्॥ स्थानं विविक्तं यमिनां विमुक्तये कामातुराणामतिकामकारणम्॥ ८६॥

सं० टी०—अधुना ज्ञानविविक्तदेशयोः सुपात्रे सम्यक् फलं दर्शयन् कुपात्रे विपरीतफलं दर्शयति ज्ञानं सतामिति। सतां श्रेष्ठानां यज्ज्ञानं सच्छास्त्रजन्यं तन्मानस्य मदादिदोषस्य च नाशनं शामकम्। केषांचिदसतामेतज्ज्ञानं मदमानयोः कारणं जनकम्। तथा यमिनामुपरतानां मुनीनां विविक्तं स्थानमेकान्तप्रदेशो विमुक्तये विचारेण तत्त्वज्ञानद्वारा संसारोच्छेदाय भवति। कामातुराणां तु पुरुषाधमानां विविक्तमतिकामकारिणं कामविकारजनकं भवतीत्यर्थः॥ १॥ इन्द्रवंशावृत्तमिदम्॥ ८६॥

भा. टी.-श्रेष्ठमनुष्योंको तौ ज्ञान मान मदादिका नाश करनेवाला है, और दुष्टजनोंको वही ज्ञान मद और मानका बढानेवालाहै जैसे एकांत स्थान योगियोंको तौ मुक्तिके लिये है; किन्तु कामातुरोंको अत्यन्त कामका बढानेवाला है ॥ ८६ ॥

दोहा—ज्ञान घटावै मान मद, ज्ञानहि देय बढाय ।
रहसि मुक्ति पावै यती, कामी रति लपटाय ॥ ८६ ॥

जीर्णा एव मनोरथाः स्वहृदये यातं च तद्यौवनं हन्तां-
गेषु गुणाश्च वंध्यफलतां याता गुणज्ञैर्विना ॥ किं युक्तं
सहसाभ्युपैति बलवान् कालः कृतांतोऽक्षमी विज्ञानां
मदनान्तकांघ्रियुगलं मुक्त्वास्ति नान्यागतिः ॥८७॥

सं० टी०-मनोरथाद्यासिद्धौ महादेव एवाश्रयणीय इति शिक्षयति । जीर्णा इति । मनोरथाश्चित्राभिलाषाः स्वहृदय एव जीर्णा बहिस्तद्विषयप्राप्तिर्न जाता । तत्प्रसिद्धं यौवनं च यातं गतं हन्ताहो कष्टं गुणज्ञैर्विना गुणाश्चांगेष्ववयवेष्वेव वन्ध्यफलतां निष्फलतां याताः प्राप्ताः । कृतान्तः सर्वनाशकः नास्ति क्षमा यस्य सोऽक्षमी बलवान् कालः सहसाऽकस्मादभ्युपैत्यागच्छति तस्मात् किं युक्तं यद्युक्तं तदेवाह । विज्ञानां मदनान्तकस्य कामविनाशकस्य महादेवस्य यदंघ्रियुगलं चरणद्वन्द्वं तन्मुक्त्वा त्यक्त्वाऽन्या गतिः स्थानं नास्तीति कालकालस्य महेश्वरस्य चरणारविन्दमेवाश्रयणीयमिति भावः । संकल्पा विफला जाता यौवनं च गतं मम । निलयः सर्वकामानां शिवांघ्रिः शरणं भवेत् ॥ १ ॥ शार्दूलविक्रीडितं वृत्तमिदम् ॥ ८७ ॥

भा० टी०—सम्पूर्ण मनोरथ हृदयमेंही जीर्णहोगये, कोईभी उनमेंसे सिद्ध नहीं हुआ, युवावस्थाभी व्यतीतहोगई, गुणज्ञोंके विना सम्पूर्ण गुणभी निष्फल होगये, अब सर्व नाशक बलवान् काल सहसा निकट आ रहाहै, इस समय क्या कर्तव्य है ? मेरी समझमें विद्वानोंके लिये इस समय तौ केवल कामनाशक शिवजीके चरणयुगलको छोडकर और कोई गति नहीं है ॥ ८७ ॥

छप्पय—मनके मनहीं माहि मनोरथ वृद्ध भये सब । निज अंगनमें नाश भयौ वहयौबनहू अब । विद्या ह्वै गइ बांझ बूझवारे नहिं दीसत । दौर्यो आवत काल कोपकर दशनन पीसत । कबहूं नहिं पूजे प्रीतिसों चक्रपाणि प्रभुके चरण । भवबंधनकाटै कौन अब अजहूंगहुरेहरशरण ८७

तृषा शुष्यत्यास्ये पिबति सलिलं स्वादु सुरभि क्षुधार्तः
सन् शालीन् कवलयति शाकादिवलितान् ॥ प्रदीप्ते
कामाग्नौ सुदृढतरमाश्लिष्यति वधूं प्रतीकारो व्याधेः
सुखमिति विपर्यस्यति जनः ॥ ८८ ॥

सं० टी०—प्राणी सलिलं पानीयं पिबति । कस्मिन् सति । आस्ये वदने तृषा शुष्यति सति। कथंभूतं सलिलं । स्वादु सुरभि । प्राणी क्षुधार्तःसन् शालीन् कवलयाति । कीदृशान् शालीन् शाकादिवलितान् । प्राणी कामाग्नौ प्रदीप्ते सति सुदृढतरं यथा भवति तथा वधूं भार्यामाश्लिष्यत्यालिङ्गति । जनः प्राणी व्याधेः प्रतीकार उपचारः सुखामिति विपर्यस्यति विपर्यासं करोति । शिखरिणीवृत्तमिदम् ॥ ८८ ॥

भा० टी०—जब मनुष्यका कण्ठ प्यासके कारण सूखनेलगताहै तब वह शीतल जल पीलेताहै, जब क्षुधासे पीडित होताहै तब शाक आदि सामग्रीके साथ चावलोंके भोजन करताहै, और जब कामदेवका अग्नि प्रचण्ड होताहै, तब सुन्दर स्त्रीको हृदयसे लगाताहै, बिचारकर देखे तौ यह एक व्याधिकीऔषधिहै, परन्तु लोगोंने इसको उलटा सुखकी समझ रखताहै ॥ ८८ ॥

छप्पय—प्यास लगे जब पान करत शीतल सुमिष्टजल । भूख लगै तब खात भात घृत दूध और फल । बढत कामकी आगि तबहि नववधू संगरति । ऐसे करत विलास होत विपरीत दैवगति । सब जीव जगतके दिन भरत खात पियत भोगहु करत । ये महारोग तीनों प्रबल बिना मिटाये नहिं मिटत ॥ ८८ ॥

स्नात्वा गाङ्गैः पयोभिः शुचिकुसुमफलैरर्चयित्वा विभो त्वां ध्येयं ध्याने निवेश्य क्षितिधरकुहरग्रावशय्यानिषण्णः ॥ आत्मारामः फलाशी गुरुवचनरतस्त्वत्प्रसादा त्स्मरारे दुःखान्मोक्ष्ये कदाहं तव चरणरतो ध्यानमार्गैकप्रश्नः ॥ ८९ ॥

सं० टी०—इदानीं मनुष्यणामुचितं कृत्यं दर्शयंस्तत्प्रार्थयति । स्नात्वेति । हे विभो ! गाङ्गैः पयोभिः स्नात्वा शुचीनि यानि कुसुमानि फलानि च तैस्त्वामर्चयित्वा प्रपूज्य ध्येयं त्वां ध्याने मनोवृत्तौ निवेश्य स्थापयित्वा क्षितिधरः पर्वतस्तस्य कुहरे गुहायां ग्रावाणां पाषाणानां या शय्या तस्यां निषण्ण आसीनः सन् आत्मन्येवारामो यस्य सः, फलाशी फलभोजनो गुरुवचने रतः श्रद्धालुरेवंभूतः सन् हे स्मरारे ! त्वत्प्रसादात् तव कृपया दुःखात् त्रिविधात् कदा मोक्ष्ये मुक्तो भविष्यामि । कीदृशोऽहं तवचरणरतः पुनर्ध्यानमार्गे एको मुख्यः प्रश्नः प्रवाहो यस्यसः । गंगायां मज्जनं कृत्वा गन्धपुष्पाक्षतैः शिवम् । अर्चयन्निवसन् दर्योमात्मतत्त्वं विचिन्तयेत् ॥ १ ॥ स्रग्धरावृत्तमिदम् ॥ ८९ ॥

भा० टी०—हे विभो ! हे स्मरारे ( कामदेवके शत्रु ) गंगाजलसे स्नान कर सुन्दर पवित्रपुष्पोंसे आपको पूजा ध्यान करनेके योग्य आपकी मूर्ति मनमें स्थापन करके पर्वतकी कन्दरामें पत्थरकी चट्टानपर बैठ आत्माराम और फलाहारी होकर आपकेही चरणोंमें रति रखनेवाला और आपकेही ध्यानमें मग्नरहनेवाला मैं आपकी कृपाद्वारा कब इस दुःखसे मुक्त होऊंगा ॥ ८९ ॥

दोहा—नरसेवा तजि ब्रह्म भजि, गुरचरणन चित लाय ।
कब गंगातट ध्यान धर, पूजोंगो शिवपाय ॥ ८९ ॥

शय्या शैलशिला गृहं गिरिगुहा वस्त्रं तरूणां त्वचः सारंगाः सुहृदो ननु क्षितिरुहां वृत्तिः फलैः कोमलैः ॥ येषां नैर्झरणाम्बुपानमुचितं रत्यै च विद्यांगना मन्यन्ते परमेश्वराः शिरसि यैर्बद्धो न सेवाञ्जलिः ॥ ९० ॥

सं० टी०—इदानीमीश्वरानुगृहीतानां वृत्तिं कथयंस्तान् स्तौति । शय्येति । ते पुरुषा अस्माभिर्ननु निश्चयेनेश्वरा मन्यन्ते ज्ञायन्ते । ते के । येषां शैलशिला शय्या, गिरिगुहा गृहं, तरूणां वल्कलानि वस्त्रम्, सारङ्गा मृगाः पक्षिणो वा सुहृदो मित्राणि, क्षितिरुहां वृक्षाणां कोमलैः फलैः वृत्तिर्जीविका, येषां नैर्झरणाम्बुपानं निर्झराणां गिरिप्रस्रवाणां सम्बन्धि जलपानमुचितं योग्यमस्ति, येषां च रत्यै रमणीयं विद्यारूपाङ्गना स्त्री वर्तते, यैश्च सेवाञ्जलिः शिरसि न बद्धः धनिकानां सेवार्थं स्वशिरसि हस्तपुटं न कृतमित्यर्थः । एवंभूता ये ते ननु परमेश्वरवत्पूज्या इत्यर्थः । शिला शय्या फलं भक्ष्यं वल्कलं वसनं तरोः । इतीशानुगृहीतानां वृत्तिरस्ति महोज्ज्वला ॥ १ ॥ शार्दूलविक्रीडितं वृत्तमिदम् ॥ ९० ॥

भा. टी.—पर्वतोंकी शिला जिनकी शय्या हैं, कन्दराहि जिनके घर हैं, वृक्षोंके वल्कलही जिनके वस्त्र हैं, वनके हरिणही जिनके मित्र हैं, वृक्षोंके कोमल फल खाकरही जो जीवन निर्वाह करतेहैं, झरनोका जलही जिनका योग्य जलपान है, विद्यारूपी स्त्रीमेंही जिनकी प्रीति है, और सेवाके लिये जिनने कभी अपने हाथ नहीं बांधे उनको मैं परमेश्वरतुल्य जानताहूं ॥ ९० ॥

छप्पय—बसें गुहागिरि सुचित शिला शय्या मनमानी । वृक्षवक्कलके वसन स्वच्छ सुरसरिको पानी । वनमृग जिनके मित्र वृक्षफल भोजन जिनके । विद्या जिनकी नारि नहीं सुरपति सम तिनके । ते लगत ईशसम मनुज मोहिं तनुशुचि ऐसे जग भए । जे परसेवाके काजको हाथ नाहिं जोरत नए ॥ ९० ॥

सत्यामेव त्रिलोकीसरिति हरशिरश्चुम्बिनीवच्छटाया सद्वृत्तिं कल्पयन्त्यां वटविटपभवैर्वल्कलैः सत्फलैश्च ॥ कोऽयं विद्वान् विपत्तिज्वरजनितरुजातीव दुःश्वासिकानां वक्त्रं वीक्षेत दुःस्थे यदिहि न विभृयात्स्वे कुटुम्बेऽनुकम्पाम् ॥ ९१ ॥

सं० टी०—विपत्तिज्वरग्रस्ते कुटुम्बे स्पृहां कृत्वा दुःखेन स्थित्यपेक्षयात्यन्तसुखदो गङ्गातीरे निवासः श्रेयानिति कथयन्नाह । सत्यामिति । हि निश्चितं यदि दुःस्थे स्वकीये कुटुम्बेनुकम्पां कृपां न बिभृयात् । "यत्तदोर्नित्यसम्बन्ध इति न्यायात्" तदा कोऽयं विद्वानतीव दुःश्वासिकानां नारीणां वक्त्रं वीक्षेत, अपि तु न कोऽपीत्यर्थः । कया विपत्तिज्वरस्तेन जनिता रुक् तया । कस्यां सत्यां त्रिलोकीसरीति गङ्गायां सत्यामेव । किंभूतायां सरिति हरशिरश्चुम्बिनीवच्छटायां हरशिरश्चुम्बिनी ईश्वरमस्तकस्य रमणविच्छटा वप्रदेशो यस्याःसाः । पुनः किंभूतायां त्रिलोकीसरिति । सद्वृत्तिं सदावरं कल्पयन्त्यां प्रेरयन्त्यां । कैः सत्फलैः किंभूतैः सत्फलैः वटविटपभवैर्वटवृक्षोद्भवैः ॥ स्रग्धरावृत्तमिदम् ॥ ९१ ॥

भा० टी०—यदि अपने कुटुम्बपर दया न करे तौ कौनसा विद्वान् महादेवजीके मस्तकपर रहनेसे जिसका तटप्रदेश शोभित है, और जो वटवृक्षसे उत्पन्न वल्कल और सत्फलोंद्वारा सद्वृत्तिकी प्रेरणा करती है, ऐसी गंगाजीको छोड कर विपत्तिरूपी ज्वरसे जनित रोगोंके कारण लम्बी श्वास लेतीहुई स्त्रियोंके मुखको देखेगा ॥ ९१ ॥

छप्पय—सोहत जो शिवसीस जटा सुरसरिकी धारा ॥ वटतरु वल्कल फूल जासु तटवृत्ति अपारा ॥ त्याग सुखद अस गंग कौन ऐसौ नर वो है ॥ परिजन करुणाहीन नारिकौ आनन जोहै ॥ जो दीर्घ श्वाससों विपतिज्वर जीरण भारी गहतुहैं ॥ सबबिधि यह दुखकी खान अति निर्दय जेहि त्रिय कहतुहैं ॥ ९१ ॥

उद्यानेषु विचित्रभोजनविधिस्तीव्रातितीव्रं तपः कौपी
नावरणं सुवस्त्रममितं भिक्षाटनं मण्डनम् ॥ आसन्नं
मरणं च मंगलसमं यस्यां समुत्पद्यते तां काशीं परि-
हृत्यहन्त बिबुधैरन्यत्र किं स्थीयते ॥ ९२ ॥

सं० टी०—इदानीं श्लोकद्वयेन काशीवासश्रेष्ठत्वं वर्णयति । उद्यानेष्विति । तां काशीं परिहृत्य परित्यज्य हन्तेति खेदे विबुधैः किमन्यत्र स्थीयते । यस्यां काश्यामुद्यानेषु विचित्रभोजनविधिस्तीव्रातितीव्रं तपः । चान्यत् सुवस्त्रं कौपीनावरणं । मण्डनं यस्याममितं भिक्षाटनं । यस्यां काश्यां मङ्गलसममासन्नं मरणं समुत्पद्यते । तां काशीं मुक्त्वा कथमन्यत्र स्थीयत इतिभावः । शार्दूलविक्रीडितं वृत्तमिदम् ॥ ९२ ॥

भा० टी०—उपवनोंमें नानाप्रकारके भोजन बनाकरही खाना जहां कठिनसे कठिन तप है, लँगोटी पहरनाही जहां परम वस्त्र है, भीख मांगनाही जहां भूषण है, और मृत्यु आनाही जहां परममङ्गल उत्पन्नकरताहै, हाय ! ऐसी काशीपुरीको त्यागकर पण्डितजन अन्यत्र क्यों बसतेहैं ॥ ९२ ॥

कुण्डलिया—काशीमें जहँ शिव बसत बैठ तासु उद्यान । विविध अशन सम तप नहीं देख्यौ उग्र महान । देख्यौ उग्र महान भीख जहँ

सुन्दर भूषण। खण्ड एक कोपीन वसन बहुमूल्य अदूषण। मरणहि मंगलकरण मिले जहँ हर अविनाशी। को ऐसो विद्वान् तजै जो ऐसी काशी॥ ९२॥

नायं ते समयो रहस्यमधुना निद्राति नाथो यदि स्थित्वा द्रक्ष्यति कुप्यति प्रभुरिति द्वारेषु येषां वचः॥ चेतस्तानपहाय याहि भवनं देवस्य विश्वेशितुर्निर्दौवारिकनिर्दयोक्त्यपरुषं निःसीमशर्मप्रदम्॥ ९३॥

सं॰ टी॰—ये धनमदान्धास्तेषां द्वारं परित्यज्य परमेश्वरपदमाश्रयणीयं महत्फलत्वादित्याह। नायमिति हे चेतः अभ्यागते प्राप्ते सति येषामैश्वर्यमदमत्तानां द्वारेष्वित्येवं वचो वचनमस्ति तान् मूढानपहाय परित्यज्य विश्वेशितुर्देवस्य भवनं मन्दिरं याहि प्राप्नुहीति सम्बन्धः। इति निर्दिष्टं वचनमेवाह। भो याचकाऽयं ते तव समयो नास्ति यतोऽधुना रहस्यं प्रभुर्गुप्तविचारे स्थितः। तथा नाथः स्वाम्यधुना निद्राति निद्रां करोति यद्युत्थाय स्थित्वा त्वां द्रक्ष्यति प्रभुः कुप्यत्यतो गच्छेति। कीदृशं विश्वेशितुर्भवनं निर्दौवारिकनिर्दयोक्त्यपरुषं निर्गता दौवारिका द्वारपाला यस्मात्तदेवं निर्दयानामुक्तिभिर्नास्ति परुषं कठोरवचनं यस्मिंस्तत्। पुनः किंभूतं तद्द्वारं निःसीमशर्मप्रदं निरवधि ब्रह्मसुखं प्रददातीत्यर्थः। राजद्वारे विद्यमानं तत्पालवचनं कटु। हित्वा स्वात्महरद्वारमुपेयात्सत्समागमम्॥ १॥ शार्दूलविक्रीडितं वृत्तमिदम्॥ ९३॥

भा. टी.—हे चित्त! अभ्यागतके आनेपर जिन धनमदमत्तोंके द्वारपाल यह कह देते हैं हे याचक! यह समय तुह्मारे आनेका नहीं है इससमय हमारे प्रभु एकांतमें कुछ विचार कररहेहैं, इससमय सोरहेहैं, यदि उठकर तुमको यहां बैठा देखेंगे, तौ हमपर कुपित होंगे, उनको छोडकर विश्वेश्वरदेवके द्वारपर जा, जहां कोई रोकनेवाला नहीं है, जहां निर्दय और कठोर वाक्य सुनाई नहीं देते हैं, और जहां निःसीम ब्रह्मसुख प्राप्त होजाता है॥ ९३॥

छप्पय--बैठ पौरिया द्वार छडीकर पहरौ राखत। सोवत स्वामि हमार जाहु तुम ऐसे भाषत। करि हैं क्रोध अपार लखै जो तुमकों द्वारे। जाहु विश्वपति द्वार जहां नहिं रोकन हारे। जहँ निर्दय कटुवादी नही अवाशि तहां चलिजाइए॥ वहँ निर्भय ब्रह्मानंद सुख ब्रह्मानँद तहँ पाइए॥ ९३॥

प्रियसखि विपद्दण्डव्रातप्रतापपरंपरातिपरिचपले चिन्ताचक्रे निधाय विधिः खलः॥ मृदमिव बलात्पिण्डीकृत्य प्रगल्भकुलालवद्भ्रमयति मनो नो जानीमः किमत्र विधास्यति॥ ९४॥

सं० टी०—संसारेऽतिखिन्नः कश्चित्पुरुषः स्वप्रियां स्त्रीं सम्बोध्य दैवकृतेर्दुर्ज्ञेयत्वमाह । प्रियसखीति । हे प्रियसखि ! खलो विधिः परांमुखो देवः नो जानीमः अत्रेदानीं किं विधास्यति । अयं विधिश्चिन्ताचक्रे निधाय बलात्पिंडीकृत्य मनो भ्रमयति । किंभूते चिन्ताचक्रे विपद्दण्डव्रातपरम्परातिपरिचपलं तस्मिन् । मनः कामिव मृदमिव । विधिः क इव प्रगल्भकुलालवत् । यथा प्रगल्भः कुलालो मृदं मृत्तिकां बलात् पिण्डीकृत्य चक्रे निधाय भ्रमयति । एतावता विपरीतं विधेर्विलसितं कोऽपि न वेत्तीति भावः । हरिणीवृत्तमिदम् ॥ ९४ ॥

भा॰ टी.—हे प्रियसखि! धृष्टकुम्हारकी तरह यह दुष्ट विधाता विपत्तिरूपी दंडोंके समूहके प्रतापकी परम्परासे अत्यन्त चपल चिन्तारूपी चक्रमें मिट्टीके पिंडेकी तरह बलात्कारसे हमारे मनको धरकर घुमाताहै, सो हम नहीं जानतेहैं इस दशाको पहुंचाकरभी अब क्या करेगा ॥ ९४ ॥

दोहा—मनकों चिंता चक्रधर, खलविधि रह्यौ घुमाय ।
रचि हैं कहा कुलालसम, जान्यो कछू न जाय ॥ ९४ ॥

महेश्वरेवा जगतामधीश्वरे जनार्दने वा जगदन्तरात्मनि ॥ तयोर्न भेदप्रतिपत्तिरस्ति मे तथापि भक्तिस्तरुणेन्दुशेखरे ॥ ९५ ॥

सं० टी०—अधुना हरिहरयोर्भेदबुद्ध्याभावेऽपि स्वोपासनां चन्द्रशेखरे दर्शयति । महेश्वर इति । जगतामधीश्वरे महेश्वरे तथा जगदन्तरात्मनि जनार्दने वा तयोर्भेदस्य प्रतिपत्तिर्निश्चयो मे नास्ति तथापि तरुणे नवीन इन्दुश्चन्द्रः शेखरे मस्तके यस्य तस्मिन् मे मम भक्तिः परमानुरागोऽस्ति । हरे हरौ न भेदोऽस्ति जगदीश्वरसाक्षिणोः ॥ तथापि मे दृढा भक्तिश्चंद्रशेखर ईश्वरे ॥ १ ॥ वंशस्थं वृत्तमिदम् ॥ ९५ ॥

भा. टी.—जगत्के ईश्वर महादेवजी और जगदात्मा जनार्दन विष्णु भगवान्में यद्यपि कोई भेद नहीं है तथापि जिनके मस्तकमें नवीनचन्द्रमा विराजमान है उन्हींमें मेरा परम अनुराग है ॥ ९५ ॥

दोहा—नाहिंन शिव अरु विष्णुमें, सूझे अन्तर मोय ।
तदपि चन्द्रशेखर लखत, प्रीति अधिक कुछ होय ॥ ९५ ॥

रेकंदर्प करं कदर्थयसि किं कोदण्डटंकारवै रे रे कोकिल कोमलैः कलरवैः किं त्वं वृथा जल्पसि ॥ मुग्धे स्निग्धविदग्धक्षेपमधुरैर्लोलैः कटाक्षैरलं चेतश्चुम्बितचन्द्रचूडचरणध्यानामृतं वर्तते ॥ ९६ ॥

सं० टी०—शिवध्यानतत्परे पुरुषे कन्दर्पादीनां व्यापारस्य विलक्षणफलत्वमाह । रे कन्दर्पेति । रे कन्दर्प ! रे इति नीचसम्बोधने । कोदण्डटङ्कारवैः करं किं कदर्थयसि । रे रे कोकिल ! कोमलैः कलरवैः पञ्चमस्वरैः किं त्वं वृथा जल्पसि । हे मुग्धे । तव कटाक्षैरलं पूर्यताम् । किंभूतैः कटाक्षैः स्निग्धविदग्धश्च मधुरश्च क्षेपो येषां तैः । भवतां पूर्वोक्तानां कृतं निखिलमपि व्यर्थम् । तस्माच्चेतश्चुम्बितचन्द्रचूडचरणध्यानामृतं वर्तते । चुम्बितं चन्द्रचूडस्य महेश्वरस्य महेशस्य चरणध्यानामृतं येन तत् चुम्बितचन्द्रचूडचर-

णध्यानामृतम् । शिवध्याननिष्ठी मयि मन्मथादिभिः क्रियमाणाः सर्वे यत्ना निष्फला इति भावः। शार्दूलविक्रीडितं वृत्तमिदम् ॥ ९६ ॥

भा० टी०–अरेकामदेव! धनुष्य खींचकर तूं वृथा अपने हाथकों परिश्रम क्यों देताहै? हे कोयल! तूं कोमल और मधुरस्वरसे वृथा क्यों कुहू कररहाहै ? हे मुग्ध ? तूं अपनेचिकने चञ्चल कटाक्षोंको वस कर, कारण कि मेरा चित्त तो चन्द्रशेखर श्रीमहादेवजीके चरणोंके ध्यानरूपी अमृतमें मग्न रहताहै ॥ ९६ ॥

छप्पय–अरे काम वेकाम धनुष टंकारत तरजत। तू हू कोकिल व्यर्थ बोल काहेकों गरजत। तैसेंही तू नारि वृथाही करत कटाक्षै। मोहि न उपजै मोह छोह सब रहिगे पाछैं। चित चन्द्रचूडके चरणको ध्यानअमृत बरसत हितें। आनन्द अखंडानंदको तांहि जगत सुख क्योंहिते ॥९६॥

कौपीनं शतखण्डजर्ज्जरतरं कन्था पुनस्तादृशी नैश्चिन्त्यं
निरपेक्षभैक्ष्यमशनं निद्रा श्मशाने वने ॥ स्वातन्त्र्येण
निरंकुशं विहरणं स्वान्तं प्रशान्तं सदा स्थैर्यं भोगमहो-
त्सवे यदि तदा त्रैलोक्यराज्येन किम् ॥ ९७ ॥

सं० टी०–अथ वैराग्यसामग्रीवतः स्थिरचित्तस्य सुखं त्रिलोकीपतिसुखादाधिकतया वर्णयाति। कौपीनमिति। यस्य कौपीनं शतानि यानि खण्डानि तैर्जर्जरितरमातिशयेन जीर्णभूतं पुनस्तादृश्येव कन्था वर्तते, यस्य नैश्चिन्त्यमैहिकपारलौकिकाचिन्तारहितत्वं तथा निरपेक्षमैक्ष्यमशनं निर्गता कस्याऽप्यपेक्षा यस्मिंस्तादृशं भिक्षासम्पादितमशनं भोजनमास्ति, तथा श्मशाने वने निद्रा, स्वातन्त्र्येण निरंकुशमप्रतिबद्धं विहरणं च यस्य, स्वान्तं मनः सदा प्रशान्तमक्षुब्धमतएव भोगमहोत्सवे भोगसामग्र्यां सत्यामपि स्थैर्यं निर्विकारस्थितिः यद्येवं सामग्री यस्य वर्तते तदा न सुखं देवराजस्य न सुखं चक्रवर्तिनः। यत्सुखं वीतरागस्य मुनेरेकान्तवासिनः ॥ १ ॥ शार्दूलविक्रीडितं वृत्तमिदम् ॥ ९७ ॥

भाषा टीका–जिनकी कन्था और कौपीन महाजर्जर है, जो निश्चिन्त है, अर्थात् जिनको ऐहिक और पारलौकिक कोई चिन्ता नहीं है जो विना किसीकी अपेक्षाके प्राप्त भिक्षान्न खातेहैं, जो श्मशानमें शयनकरते हैं, जो स्वतन्त्र पूर्वक विना रोक टोक विचरण करतेहैं, जिनका मन सदैव शान्त है, और जो भोगोत्सवमें स्थिरचित्त रहते हैं, उनके लिये त्रिलोकीका आधिपत्य क्या है, अर्थात् कुछभी नहीं है ॥ ९७ ॥

छप्पय–कंथा अरु कोपीन फटी पुनि महापुरानी। बिना याचना भीख नींद मरघट मनमानी ॥ रहैं जगसों निश्चिन्त फिरैं जितही मन आवै ॥ राखे चितकूं शांत भोग अनुचित नहि भावै ॥ जे रहें लीनअस ब्रह्ममे सोवत अरु जागत यदा॥ है राज तुच्छ तिहुँ भुवनको ऐसे पुरुषनको सदा ॥९७॥

भोगा भंगुरवृत्तयो बहुविधास्तैरेव चायं भवस्तत्कस्येह कृते परिभ्रमत रे लोकाः कृतं चेष्टितैः ॥ आशापाशशतोपशान्तिविशदं चेतः समाधीयतां कामोत्पत्तिहरे स्वधामनि यदि श्रद्धेयमस्मद्वचः ॥ ९८ ॥

सं० टी०—भोगानामनर्थहेतुत्वं दर्शयन्नीश्वरे चित्तस्थैर्य्यं शिक्षयति । भोगा इति । रे लोका बहुविधा बहुप्रकारा भोगा भंगुरा विनाशशीला वृत्तिर्येषां ते एवंभूताः सन्ति तैर्भोगैरेव चायं भवो जन्ममरणरूप संसारो भवति तत्तस्मात्कारणादिह संसारे कस्यकृते किमर्थं यूयं परिभ्रमत तादृशर्भोगार्थं चेष्टितैः कृतमलम् । यद्यस्मद्वचः श्रद्धेयं श्रद्धाविषयीभूतमस्ति तदा स्वधामनि स्वप्रकाशे आत्मनि कामानामभिलाषाणामुत्पत्तिहरे क्षुद्रानन्दानां तत्रान्तर्भावात्तद्विनाशके चेतो मनः समाधीयताम् । कीदृशं चेतः । आशापाशानां यानि शतानि तेषां योपशान्तिरुपशमस्तेन विशदं निर्मलमित्यर्थः । भोगनां हि विनाशित्वाद्विभ्रमस्तत्कृते वृथा ॥ गुरूण सद्वचस्तथ्यं हृदि कार्यं मुमुक्षुभिः ॥ १ ॥ शार्दूलविक्रीडितं वृत्तामिदम् ॥ ९८ ॥

भा० टी०—हे मनुष्यो अनेकों प्रकारके ये जितने भोग हैं सो सब विनाशशील हैं, इन्हीं भोगोंके संसर्गसे यह भव अर्थात् जन्ममरणरूप संसार होता है, फिर तुम किसलिये इस संसारमें भ्रमण करतेहो, ऐसी भोग चेष्टाओंसे क्या फल मिलेगा। यदि हमारे बचनपर तुह्मारी श्रद्धा है, तौ सौकडों प्रकारकी आशापाशोंकी उपशान्तिके कारण निर्मल चित्तको स्वयंप्रकाशमान् कामनाशक शिवजीके चरणारविन्दमें निरन्तर लगाओ ॥ ९८ ॥

छप्पय—अतिचंचल ये भोग जगतहू चंचल तैसौ । तू क्यों भटकत मूढ जीव संसारी जैसो । आसाफांसी काट चित्त तू निर्मल ह्वैरे । साधन साधि समाधि परमनिजपदकों छ्वैरे । करि रे प्रतीति मेरे बचन ढुरिरे तू इह ओरकों । छिन यहै यहै दिनहू भल्यौ जिन राखै कछु भोरकों ॥९८॥

धन्यानां गिरिकन्दरे निवसितां ज्योतिःपरं ध्यायतामानन्दाश्रुकणान् पिबन्ति शकुना निशंकमंकेशयाः ॥ अस्माकं तु मनोरथोपरचितप्रासादवापीतटक्रीडाकाननकेलिकौतुकजुषामायुः परं क्षीयते ॥ ९९ ॥

सं० टी०—अधुना विरक्ताविरक्तयोरायुस्साफल्यासाफल्ये दर्शयति । धन्यानामिति । वैराग्यादि सम्पाद्य तत्वज्ञानेन कृतकृत्यानां पूर्वतत्वज्ञानार्थाभ्यासंस्कारवशेन गिरिकन्दरे पर्वतगुहायां निवसतां प ज्योतिर्ब्रह्म ध्यायतां तेषामानन्दाश्रुकणान् ब्रह्मानन्दानुभवेनोद्गता येऽश्रूणां कणा बिन्दवस्तान् शकुनाः पक्षिणो निःशंकं यथास्यात्तथा अङ्केशया उत्संगशायिनः सन्तः पिबन्ति तेषामायुः सफलमित्यर्थः । अस्माकं त्वविरक्तानां परं केवलमायुः क्षीयते न काश्चिदपि पुरुषार्थः सिध्यति । कथंभूतानामस्माक

मनोरथेनोपरचिताः प्रासादा राजमन्दिराणि येषु तेषु वाप्यो दीर्घिकास्तासां तटेषु क्रीडाकाननान्युपवनानि तेषुयाकेलि स्त्रीजनैः क्रीडाविशेषस्तदेव कौतुकं तत्सेविनाम् । गिरिदर्यादिवासेन परब्रह्म विचिन्तनात् ॥ कुर्वन्त्यात्मापरोक्ष्यं ये ते धन्या नो जनुर्वृथा ॥ १ ॥ शार्दूलविक्रीडितं वृत्तमिदम् ॥ ९९ ॥

भा० टी०-जो पुरुष पर्वतकी कन्दराओंमें रहतेहैं, और जो परब्रह्म ज्योतिका ध्यान करतेहैं, जिनके आनन्दाश्रुओंके जलको पक्षीगण निःशंक गोदमें बैठकर पीतेहैं वे धन्य हैं, और हमारी तो अवस्था केवल मनोरथहीके मन्दिरमें वनी बावडीके तटपर जो क्रीडाकानन है उसमें लीलाकरतेही क्षीण होती है। तात्पर्य यह है नानाप्रकारकी मिथ्याकल्पनाओंहीमें आयु व्यतीत होजाती हैं, वास्तवमें कोई मनोरथ सिद्ध नहीं होता है ॥ ९९ ॥

छप्पय-योगी जग बिसराय जाय गिरिगुहा बसत हैं। करत ज्योतिकौ ध्यान मगन आंसू बरषत हैं। खगकुल बैठत अंक पियत निःशंक नयनजल। धनि धनि हैं वे धीर धन्यो जिन यह समाधिवल। हम सेवत वारी वागसर सरितावापीकूपतट। खोवत हैं योंही आयुकों भये निपटही निरघट ॥ ९९ ॥

आक्रान्तं मरणेन जन्म जरसा विद्युच्चलं यौवनं संतोषो धनलिप्सया शमसुखं प्रौढांगनाविभ्रमैः॥ लोकैर्मत्सरिभिर्गुणा वनभुवो व्यालैर्नृपा दुर्जनैरस्थैर्येण विभूतिरप्यपहता ग्रस्तं न किं केन वा ॥ १०० ॥

सं० टी०-किञ्चित् केनचिदग्रस्तमित्यग्रस्तं ब्रह्मसमाश्रयेदिति भावेनाह । आक्रान्तमिति । जन्म जननं मरणेनाक्रान्तं व्याप्तम्। विद्युद्वच्चलं यौवनं जरसा जरया क्रान्तम् । धनस्य लिप्सया लब्धुमिच्छया सन्तोष आक्रान्तस्तथा प्रौढांगनानां विभ्रमैर्विलासैः शमसुखं निवृत्त्युपलक्षितब्रह्मसुखमाक्रान्तं ग्रस्तम्। मत्सरिभिर्गुणेषु दोषारोपकैर्गुणा आक्रान्ताः। वनभुवो व्यालैः सर्पैराक्रान्ताः। दुष्टजनैर्नृपा आक्रान्ता येन सुजनानां तत्र प्रवेशोऽपि न भवेत्। तथाऽस्थैर्येण प्रतिक्षणकालकृतपरिणामेन विभूतयो भोगसामग्र्योऽप्युपहताः। किं वस्तु केनेह न ग्रस्तमपि तु चैतन्यमेकं विहाय सर्वं ग्रस्तमतस्तदेवाश्रयेदिति भावः। सर्वेण सर्वमाक्रान्तं नाक्रान्तं केनचित् क्वचित्। चैतन्यं तदयं साधुस्तदेव सततं श्रयेत् ॥ १ ॥ १०० ॥

भा० टी०-मृत्युने जन्मको, वृद्धावस्थाने विजुलीकेसमान चंचल युवावस्थाको, धनकी इच्छाने सन्तोषको, सुन्दरस्त्रियोंके विलासोंने शान्तिसुखको, गुणोंमें दोषारोपन करनेवाले मनुष्योंने गुणोंको, सर्पोंनें वनभूमिको, दुर्जनोंने राजाको, और अस्थिरतानें भोगोंकी सामग्रीको ग्रस रक्खाहै, देखो इसप्रकार इस संसारमे किसने किसको नहीं ग्रसरक्खाहै अर्थात् सब ग्रसेहुएहैं, अग्रस्त तो केवल ब्रह्मही है ॥ १०० ॥

छप्पय—ग्रस्यौ जन्मकों मृत्यु जरा यौवनकों ग्रास्यौ । ग्रसिवेकों सन्तोष लोभ यह प्रगट प्रकास्यौ । तैसेही समदृष्टि ग्रसित वनिता विलासवर । मत्सरगुण ग्रसिलेत ग्रसत वनको भुजंगवर । नृप ग्रसितकिये इन दुर्जनन कियौ चपलता धन ग्रसित । कछुहु न देख्यो विनग्रसित जग याहीतें चित अतित्रसित ॥ १०० ॥

आधिव्याधिशतैर्जनस्य विविधैरारोग्यमुन्मूल्यते लक्ष्मी र्यत्र पतन्ति तत्र विवृतद्वारा इव व्यापदा ॥ जातं जात मवश्यमाशु विवशं मृत्युः करोत्यात्मसात्तत्किंनाम निरं कुशेन विधिना यन्निर्मितं सुस्थितम् ॥ १०१ ॥

सं० टी०—आधीति । नामेति सम्बोधने । तत्किं यन्निरंकुशेन विधिना सुस्थितं निर्मितं किं तद्वद शरीरे आधिव्याधिशतैरमितमतिशयेनारोग्यमुन्मूल्यते । तत्र आधिर्मानसी पीडा व्याधी रोगसमुद्भवः । चान्य द्यस्मिन् दैवनिर्माणे लक्ष्मी तत्र स्थाने व्यापदो विवृत्तद्वारा इवोद्घाटितकपाटा इव वर्तन्ते । अवश्यं निश्चितमाशु शीघ्रं मृत्युर्जातं जातमुत्पन्नमुत्पन्नमात्मसात्करोत्यात्मायत्तं विधत्ते अतोऽस्य दैवस्य निर्माणे किमपि स्थिरं नास्ती त्यागमः ॥ शार्दूलविक्रीडितं वृत्तमिदम् ॥ १०१ ॥

भा० टी०—सैंकडों मानसिक और शारीरिक व्याधियोंने आरोग्यताको समूल उखाडडालाहै, जहां द्रव्य बहुत होताहै वहां विपत्ति द्वार तोडकर आपडती है और जो जन्मता है उसको मृत्यु अवश्य बलपूर्वक अपने वशमें करलेताहै, फिर कहो ऐसी कोनसी वस्तु है जिसको निरंकुश ब्रह्माने स्थिर बनाईहै ॥ १०१ ॥

दोहा—रोग बियोग विपत्ति बहु, देह आयु आधीन ।
निडर विधाता जग रच्यौ, महा अथिरता लीन ॥ १०१ ॥

कृच्छ्रेणामेध्यमध्ये नियमिततनुभिः स्थीयते गर्भवासे कान्ताविश्लेषदुःखव्यतिकरविषमे यौवने विप्रवासः ॥ वामाक्षीणामवज्ञातिमलिनवदनो वृद्धभावोऽप्यसाधुः संसारे रे मनुष्या वदत यदि सुखं स्वल्पमप्यस्ति किञ्चित् ॥ १०२ ॥

सं० टी०—विचार्यमाणे सति संसारे दुःखमेव सुखलेशोऽपि नास्तीत्याह । कृच्छ्रेणेति । अमेध्यम पवित्रं विण्मूत्रादि मध्ये यस्मिंस्तस्मिन् गर्भवासे नियमिता संकुचिता तनुर्येषां तैः पुरुषैः कृच्छ्रेण कष्टेन स्थीयते। कान्तायाः स्त्रियो विश्लेषो वियोगस्तस्य दुःखस्य व्यतिकरेण सम्बन्धेन विषमे संकटरूपे यौवने विप्रवासः परदेशगमनं। तथा वामाक्षीणां युवतीनामवज्ञयाऽतिमलिनं वदनं यस्मिन्स वृद्धभावोऽप्यसाधुरसमीचीन एवातो हे मनुष्या. संसारे स्वल्पमतिलघु किञ्चिल्लेशमात्रमपि यदि सुखमस्ति तर्हि यूयं वदत कथयतास्माकन्तु नैव भातीत्यर्थः ।

गर्भवासेऽथ तारुण्ये वार्द्धक्ये दुःखदर्शनात् । संसारे स्वल्पमपि हि सुखं नास्तीति दर्शितम् ॥ १ ॥ शार्दूलविक्रीडितं वृत्तमिदम् ॥ १०२ ॥

भा० टी०—अपवित्र मलमूत्रके स्थान गर्भमें मनुष्य हाथ पैर बंधेहुए बडे कष्टकेसाथ वासकरताहै, युवावस्थामें स्त्रियोंके वियोगरूपीदुःखसे दुःखी रहताहै, और वृद्धावस्थामें नारियोंसे निरादर पाकर नीचा शिर किये शोचमें पडरहताहै, इसलिये हे मनुष्यो! यदि इस संसारमें किंचिन्मात्रभी सुख है त हमसे कहो ॥ १०२ ॥

दोहा–सह्यौ गर्भदुख जनमदुख, जोबन लिया बियोग ।
वृद्ध भये सबहिन तज्यौ, जगत किधों यह रोग ॥१०२॥

आयुर्वर्षशतं नृणां परिमितं रात्रौ तदर्धं गतं तस्यार्द्धस्य परस्य चार्द्धमपरं बालत्ववृद्धत्वयोः ॥ शेषं व्याधिवियोगदुःखसहितं सेवादिभिर्नीयते जीवे वारितरंगचंचलतरे सौख्यं कुतः प्राणिनाम् ॥ १०३ ॥

सं० टी०–इदानीमायुर्विभागं कृत्वा तत्र सुखाभावं दर्शयति । आयुरिति नृणामायुर्वर्षशतं परिमितं नियतं तदर्द्धं तस्य वर्षशतस्यार्द्धं पंचाशद्वर्षमितं रात्रौ शयनेन निरर्थकं गतं, तस्यार्द्धस्य परस्य शेषभूतस्य पंचाशन्मितस्य यदपरमर्द्धम्पञ्चविंशतिवर्षाणि तत्सार्द्धद्वादशविभागेन बालत्ववृद्धत्वयोर्गतं, शेषमवशिष्टं पञ्चविंशतिपरिमितं तु व्याधिना प्रियाणां वियोगेन च यद्दुःखं तेन सहितं युक्तं यथास्यात्तथा सेवादिभिः सेवा जीविकार्थं राज्ञामाराधनमादिर्येषामध्ययनाध्यापनक्रयविक्रयभृत्यादीनां तैर्नीयते व्यतीयते । एवं साति वारितरङ्गवच्चञ्चलतरे जीवं जीवितव्ये प्राणिनां सौख्यं कुतः स्यान्नकुतोऽपीत्यर्थः । आयुषः सकलस्यापि भागं कृत्वा प्रदर्शितम् । बाल्यतारुण्यवार्द्धक्ये सुखं नास्त्येव किंचन ॥१॥ शार्दूलविक्रीडितं वृत्तमिदम् ॥१०३॥

भाषा टीका–मनुष्योंका आयु सौबर्षका नियत कियागया है, उसमेंसे आधा अर्थात् ५० वर्ष तौ रात्रिको सोनेमेही व्यतीत होजाताहै, फिर शेष बचेहुए ५० वर्षोंमेंसे २५ वर्ष वाल्यावस्था और वृद्धावस्थामें व्यतीत होजाताहै, और शेष २५ वर्ष नानाप्रकारके वियोग, दुःख, व्याधि, हानि, लाभ, हर्ष शोक और परसेवाआदिमें व्यतीत होजातेहैं, । जब इसप्रकार आयु व्यतीत होताहै तौ सोचौ कि जलके तरङ्गकेसमान चञ्चल जीवनमें मनुष्योंको सुख कहां प्राप्तहोसक्ताहै ॥ १०३ ॥

छप्पय–शतहि बर्षकी आयु रातमें बीतत आधे । ताके आध्यौ आध वृद्धबालकपन साधे । रहे यहै दिन आधि व्याधि गृहकाज समोये । नाना विधि बकवाद करत सबहिनको खोये । जलकी तरंग बुदबुद सदृश देह खेहके जातहै । सुख कहौ कहां इन नरनकों जासों फूलत गातहै १०३॥

ब्रह्मज्ञानविवेकिनोऽमलधियः कुर्वन्त्यहो दुष्करं यन्मुंचंत्युपभोगकांचनधनान्येकांततो निःस्पृहाः ॥ न प्राप्तानि पुरा न संप्रति न च प्राप्तौ दृढप्रत्ययो वाञ्छामात्रपरिग्रहाण्यपि परं त्यक्तुं न शक्ता वयम् ॥ १०४ ॥

सं० टी०—अधुना विद्वदविदुषोर्विषयत्यागसामर्थ्यासामर्थ्ये दर्शयति । ब्रह्मज्ञानेति । ब्रह्मज्ञानाय विवेकः सदसद्विचारस्तेन निर्मला धीर्येषां तेऽहो इत्याश्चर्ये दुष्करं कर्तुमशक्यं यत्कर्म तत्कुर्वंति तदेवाह । यदिति एकान्ततोऽत्यन्त निस्पृहा विरक्ताः सन्तो यदुपभोगसाधनानि धनानि मुञ्चन्ति त्यजन्ति स उपभोगसाधनत्याग एव तेषां दुष्करं कर्म । वयं तु पुरा पूर्वकाले उपभोगसाधनधनानि न प्राप्तानि सम्प्रत्यधुनाऽपि न संत्यग्रेऽपि प्राप्तौ दृढप्रत्ययो नास्ति तथापि कदाचिद्दैवगत्या मिलिष्यन्तीति वाञ्छामात्रं परिग्रहो येषां तान्यपि परित्यक्तुं शक्ताः समर्था न भवाम इत्यर्थः ॥ प्राप्तान् भोगान् परित्यज्य ये कुर्वन्त्यात्मदर्शनम् । ते धन्या ह न चास्माभिस्त्यज्यन्ते हि मनोरथाः ॥ १ ॥ शार्दूलविक्रीडितं वृत्तमिदम् ॥ १०४ ॥

भाषा टीका—ब्रह्मज्ञानके विवेकसे जिनकी बुद्धि निर्मल है ऐसे मनुष्य बडा कठिन कार्य करतेहैं कि उपभोग, भूषण, वस्त्र, ताम्बूल, शय्या, धन, इत्यादि विषयकी सब सामग्री त्यागदेतेहैं, और निरन्तर निस्पृह रहतेहैं, परन्तु-हमको तो न पहिले प्राप्तहुई, न अब प्राप्तहै, और न आगे प्राप्तहोनेका दृढ विश्वास है, यह सब केवल इच्छामात्रसेही ग्रहण होरहे हैं, हम तो इनकोभी त्यागनेमें समर्थ नहीं हैं ॥ १०४ ॥

दोहा—बडे विवेकी तजतहैं, संपति सुत पितु मात ।
कंथा अरु कोपीनहू, हमसे तजी न जात ॥ १०४ ॥

व्याघ्रीव तिष्ठति जरा परितर्जयन्ती रोगाश्च शत्रव इव प्रहरन्ति देहम् ॥ आयुः परिस्रवति भिन्नघटादिवाम्भो लोकस्तथाप्यहितमाचरतीति चित्रम् ॥ १०५ ॥

सं० टी०—वैराग्यहेतुष्वप्यासक्तयाऽशुभमाचरतीति चित्रमित्याह । व्याघ्रीति । जरा व्याघ्रीव परितर्जयन्ती भर्त्सयन्ती तिष्ठति । रोगाश्च शत्रव इव देहं प्रहरन्ति । आयुरपि भिन्नघटादम्भो जलमिव परिस्रवति । तथाऽपि लोको जनोऽहितं पापमाचरतीति चित्रं महदाश्चर्यमित्यर्थः । जरा रोगादयः सर्वे सन्ति वैराग्यहेतवः । तथाप्यहित आचारः किमाश्चर्यमतः परम् ॥ १ ॥ वसन्ततिलकावृत्तमिदम् ॥ १०५ ॥

भा टी०—वृद्धावस्था व्याघ्रीके समान गर्जतीहुई सन्मुख खडीहै, सब रोग शत्रुओंके समान देहपर प्रहार कररहेहैं, और आयु प्रतिदिन ऐसे निकलता जाता है जैसे फूटे घडेसे पानी निकलजाताहै, यह सब कुछ होनेपरभी मनुष्य ऐसा काम कररहेहैं, जिसमें उनका बुरा हो यह बडे आश्चर्यकी बात है ॥ १०५ ॥

दोहा—कुपित सिंहनी ज्यों जरा, कुपित शत्रु ज्यों रोग ।
फूटे घट जल त्यौं वयस, तऊ अहितयुत लोग ॥ १०५ ॥

गात्रं संकुचितं गतिर्विगलिता भ्रष्टा च दन्ता-
वलिर्दृष्टिर्नश्यति वर्धते बधिरता वक्त्रं च
लालायते ॥ वाक्यं नाद्रियते च बान्धवजनो
भार्या न शुश्रूषते हा कष्टं पुरुषस्यजीर्णवयसः
पुत्रोऽप्यमित्रायते ॥ १०६ ॥

सं० टी०—अधुना वृद्धावस्थां सर्वथा कष्टरूपतया वर्णयति । गात्रमिति । वृद्धावस्थायां गात्रं शरीरं संकुचितं कुब्जं भवति, गतिर्गमनं विगलिता नष्टा, दन्तावलिर्दन्तपंक्तिर्भ्रष्टा पतिता भवति, दृष्टिरवलोकनं च नश्यति, बधिरतापि वर्द्धते निकटे उच्चैर्घुष्टमपि न श्रूयते, वक्त्रं च मुखं लालायते लालास्रावं कुरुते, बान्धवजनो वाक्यं नाद्रियते न सत्करोति प्रत्युतोपक्षते, भार्या च स्त्री न शुश्रूषते सेवां न कुरुते, हा कष्टं जीर्णं वयो यस्य तस्य पुरुषस्य यतः साक्षात्पुत्रोऽप्यमित्रायते शत्रुवदाचरतीत्यर्थः। तथाच जगति स्वार्थायैव पुत्रबन्धुभार्यादीनां प्रीतिरतः प्रथममेव तेषां सम्बन्धं परित्यज्य परमसम्बन्धिनं परमेश्वरं जानीयादितिभावः । वृद्धावस्था च कष्टातिभर्त्सनं यत्र सर्वथा । विचार्यैव हि कर्तव्यं कर्तव्यं यन्मुमुक्षुभिः ॥ १ ॥ शार्दूलविक्रीडितंवृत्तमिदम् ॥ १०६ ॥

भा० टी०—वृद्धावस्थामें शरीर सिकुडजाताहै, चाल नष्ट होजातीहै, दांत गिरपडतेहैं, दृष्टि जातीरहती है, बहिरापन बढजाताहै, मुखसे लार टपकने लगतीहै, बन्धुजन बातका आदर नहींकरतेहैं, और स्त्री सेवा नहींकरती है, हाय ! वृद्धमनुष्यके कष्टका क्या वर्णन कियाजाय, यहांतक तौ है कि साक्षात् पुत्रभी शत्रुके समान आचरण करनेलगताहै ॥ १०६ ॥

छप्पय—भयौ सकुंचित गात दन्तहू उखर परे महि । आंखिन दीखत नाहिं वदनतें लार परत बहि । भई चाल बेचाल हाल बेहाल भयौ अति । बचन न मानत बन्धु नारिहू तजी प्रीति गति । यह कष्ट महादिय वृद्धपन कछु मुखसों नहिं कहि सकत । निज पुत्र अनादर कर कहत यह बूढौ योहीं बकत ॥ १०६ ॥

क्षणं बालो भूत्वा क्षणमपि युवा कामरसिकः क्षणं
वित्तैर्हीनः क्षणमपि च सम्पूर्णविभवः ॥ जराजीर्णैरंगै
र्नटइव वलीमण्डिततनुर्नरः संसारान्ते विशति यमधानी
जवनिकाम् ॥ १०७ ॥

सं० टी०—अधुनायं जीवो नानावेशान् दर्शयित्वा यमालयं प्रविशतीत्याह । क्षणमिति । अयं प्राणी नट इव क्षणं बालो भूत्वा क्षणमपि कामे रसो यस्य स कामरसिको युवा तरुणो भवति, ततो जरया जीर्णैरंगैर्हस्तपादादिभिः सह बलिभिः शिथिलमांसलताभिर्मण्डिता व्याप्ता तनुर्देहो यस्य स नरः संसारस्याङ्के क्रोडे वर्तमान इव यमधानीरूपां जवनिकां तिरस्करिणीं नट इव विशति प्रविशतीत्यर्थः । नानाकर्म प्रकुर्वाणा बाल्यतारुण्यवार्द्धके । भगवत्पादविमुखा गच्छन्ति हि यमालयम् ॥ १ ॥ शिखरिणी वृत्तमिदम् ॥ १०७ ॥

भा० टी०—यह मनुष्य क्षणमें बालरूप और क्षणमें कामरसिक युवा क्षणमें दरिद्री, क्षणमें धनाढ्य, और क्षणभरमें ऐसा वृद्ध होजाताहै कि जिसके अंग जीर्ण होगयेहैं और जिसकी खाल सिकुडगई है, इसप्रकार नटकेसमान रूप धारणक रताहुआ संसाररूपीनाटकके अंगमें*यमधानी ( यमलोक ) रूपी जवनिका (परदा) में प्रवेश करजाताहै ॥ १०७ ॥

छप्पय—छिनमें बालक होत होत छिनहीमें यौबन । छिनहीमें धनवन्त होत छिनहींमें निर्धन । होत छिनकमें वृद्ध देह जर्जरता पावत । नट ज्यों पलटत अंग स्वांग नित नये दिखावत । यह जीव नाच नाना रचत निचल्यो रहत न एक दम । करके कनात संसारकी कौतुक निरखत रहत यम ॥ १०७ ॥

अहौ वा हारे वा बलवति रिपौ वा सुहृदि वा मणौ वा
लोष्ठे वा कुसुमशयने वा दृषदि वा ॥ तृणे वा स्त्रैणे वा
मम समदृशो यांति दिवसाः क्वचित्पुण्यारण्ये शिव
शिव शिवेति प्रलपतः ॥ १०८ ॥

सं० टी०—समदृष्टिपूर्वकं महेश्वरे प्रेमाणं प्रार्थयति । अहाविति । अहौ सर्पे, हारे मौक्तिकमालायां, बलवति रिपौ बलिष्ठे शत्रौ, सुहृदि हितकरे मित्रे, मणावत्युत्तमे रत्ने लोष्ठेमृत्पिण्डे, कुसुमशयने पुष्पशय्यायां, दृषदि पाषाणे, तृणे घासकणे, स्त्रैणे स्त्रीसमूहे, सर्वत्र वाशब्दो निश्चयार्थस्तथा चाह्यादिषु निश्चिता समदृष्टिर्यस्यैतादृशस्य हे शिव हे शिव हे शिवेति मङ्गलनाम क्वचित्पुण्यारण्ये पावनवने प्रलपतः उच्चैराक्रोशं कुर्वतो ममसम्बन्धिनो दिवसाः कदा यान्त्यागमिष्यन्तीत्यर्थः । अह्यादिस्त्रैणपर्यंते सर्वत्र समदर्शनम् । कदा मम भवेच्छम्भो त्वां हृदि स्मरतोऽनिशम् ॥ १ ॥ शिखरिणीवृत्तमिदम् ॥ १०८ ॥

भा० टी०—सर्प अथवा हार, बलवान् शत्रु अथवा हितकारी मित्र, मणि अथवा पाषाण, पुष्पोंकी शय्या अथवा पत्थरकी चट्टान, और तृण अथवा स्त्रियोंके समूहमें समदर्शी होकर किसी पवित्र वनमें शिव शिव जपते मेरे दिन कब व्यतीत होंगे ॥ १०८ ॥

* नाटकान्तर्गत दृश्यकी समाप्तिको अङ्क कहते हैं ।

छप्पय—सर्प सुमनकौ हार उग्र वैरी अरु सज्जन । कंचन मणि अरु लोह कुसुम शय्या अरु पाहन । तृण अरु तरुणी नार सबनपै एक दृष्टि चित । कहूं राग नहिं रोसद्वेष कितहू न कहूं हित । व्हैहै कब मेरी यहदशा गंगाके तट तप तपत । रस भीने दुर्लभ दिवस ये वीतेंगे शिव२जपत१०८

धैर्यं यस्य पिता क्षमा च जननी शान्तिश्चिरं गेहिनी ॥ सत्यं मित्रमिदं दया च भगिनी भ्राता मनः संयमः ॥ शय्या भूमितलं दिशोऽपि वसनं ज्ञानामृतं भोजनम् ॥ ह्येते यस्य कुटुम्बिनो वद सखे कस्माद्भयं योगिनः ॥ १०९ ॥

सं० टी०—दैवसम्पद्रूपपरिवारवतः कुतोऽपि भयं नास्तीत्याह । धैर्य्यमिति । हे सखे ! त्वं वद ब्रूहि एते कुटुम्बिनो यस्य योगिनस्तस्य कस्माद्भयं न कुतोऽपीत्यर्थः । कुटुम्बिन एवाह यस्य योगिनो धैर्य्यं पिताऽस्ति क्षमा च सहिष्णुता जननी मातापित्रोरिवोभयोः पालकत्वात् । यस्य शान्तिश्चिरं गेहिनी भार्य्याऽस्ति, तथा सत्यं यथा दृष्टश्रुतकथनरूपमिदं मित्रमस्ति, दया च सर्वभूतहितेच्छा भगिनी, मनःसंयमो मनोनिग्रहो भ्राता, भूमितलं शय्या, यस्य दिश एव वसनं वस्त्रं, ज्ञानामृतं भोजनमित्येतादृशी यस्य सम्पदस्ति तस्य कुतोऽपि भयं नास्तीति भावः । दैवीसम्पद्विमोक्षाय निबन्धायासुरी मता । इति भगवद्वचनात्तद्वतो न कुतोपि भयम् ॥ १ ॥ शार्दूलविक्रीडितं वृत्तमिदम् ॥ १०९ ॥

भा० टी०—हे सखे ! तूही बता कि जिसका धैर्य पिता है, क्षमा जननीहै, शांति भार्या है, सत्य जिसका मित्र है, दया जिसकी भगिनी है, मनःसंयम ( मनको रोकना ) जिनका भ्राताहै, भूमितल जिसकी शय्या है, दिशा जिसके वस्त्र हैं, और ज्ञानरूपी अमृत जिसका भोजन है उस योगीको किसका भय है ॥ १०९ ॥

छप्पय—धीरज जाको पिता क्षमाहै जाकी जननी । सत्यबचन है मित्र दया है जाकी भगिनी ॥ शान्ति सुबाला नारि भूमितल शय्या सोहै । संयम मनको बन्धु वसन दिक् मनकू मोहै ॥ जिन ज्ञान सुधाकौ असन रखि सब एते परिजन लहैं । फिर योगी को क्यों डर रहै सदा मुदित मन ह्वै रहैं १०९

इति श्री भाषाटीकोपेतं श्रीमद्भर्तृहरिविरचितं

तृतीयं वैराग्यशतकं

समाप्तम् ।

सं० टी०-अधुना देहाकारपरिणतपञ्चभूतानां चिरसम्बन्धित्वात्तान्नतिं कुर्वन् क्षमापयाति। मातरिति हे मातर्मेदिनि! धरणि! हे तात! पितर्मारुत वायो! हे तेजोऽग्ने सखे सन्मित्र! हे जल सुबन्धो सत्परिवार! हे व्योमाकाश भ्रातः! भवतां पञ्चानामग्रे एषोऽन्त्यःप्रणामांजलिः प्रणामयुक्तः करसम्पुटो मया क्रियते पुनर्देहाः भावात् प्रणामाञ्जलेरभाव इत्यतोऽन्त्यः। तत्कृतोपकारं स्मरन्नाह युष्माकं सङ्गवशेन पाञ्चभौतिकदेहसम्बन्धे जातो यः सुकृतस्य पुण्यस्योद्रेक आधिक्यं तेन स्फुरद्भासमानं यन्निर्मलं ज्ञानं तेनापास्तोऽपगतस्समस्तः समग्रो मोहमाहिमाऽज्ञानं तत्कार्यं च यस्य सोऽहं कार्यकारणाभ्यां परे ब्रह्मणि लीये स्थूलं सूक्ष्मं च देहं हित्वाविदेहमुक्तिं यामीत्यर्थः। भूम्यादिपञ्चभूतेषु सम्बन्धं बहुकालिकम्। संस्मरंस्तन्नातिं कुर्वन् क्षमापयति सादरम् ॥१॥ शार्दूलविक्रीडितं वृत्तमिदम् ॥ ८३ ॥

भा० टी०-हे पृथ्वि मातर! हे पिता वायु! हे सखे तेज! हे बन्धो जल! और हे भ्रात आकाश! मैं तुम पांचोंके सन्मुख हाथ जोडकर अन्त समयका प्रणाम करताहूं। आपकी संगतिके कारण उत्पन्न पुण्यकी अधिकतासे प्रकाशमान् ज्ञानद्वारा मेरी समस्त मोहमहिमा दूर होगई है और मैं अब परब्रह्ममें लीन होताहूं ॥ ८३ ॥

छप्पय-अरी मेदिनी मात तात मारुत सुन एरे। तेज सखा जल भ्रात व्योम बन्धू सुन मेरे ॥ तुमको करत प्रणाम हाथ तुम आगे जोरत। तुम्हरेही सत्संग सुकृतकौ सिन्धु झकोरत। अज्ञानजनित वह मोहहू मिट्यो तिहारे संगसों। आनन्द अखण्डानन्दको छाय रह्यो रसरंगसों ॥ ८३ ॥

यावत्स्वस्थमिदं कलेवरगृहं यावच्च दूरे जरा यावच्चेन्द्रियशक्तिरप्रतिहता यावत्क्षयो नायुषः ॥ आत्मश्रेयसि तावदेव विदुषा कार्यः प्रयत्नो महान्प्रोद्दीप्ते भवने च कूपखननं प्रत्युद्यमः कीदृशः ॥ ८४ ॥

सं० टी०-अधुना विघ्नबाहुल्याच्छीघ्रमेव श्रेयसे यत्नो विधेय इत्याह। यावदिति। इदं कलेवरगृहं शरीरं यावत्स्वस्थमव्यग्रम्, यावज्जरा वृद्धावस्था दूरे तिष्ठति, यावद्यत्पर्यन्तामिन्द्रियाणां शक्तिरप्रतिहता न नष्टा, यावदायुषो जीवितस्यापि क्षयो विनाशो न तावत्प्रथममेव विदुषा विवेकिना पुरुषेणात्मनः श्रेयासि कल्याणार्थं महान्प्रयत्नः कार्यः। ननु यदा भोगशक्तिर्नश्यति तदा श्रेयसि यत्नं करिष्याम इति तत्राह। सन्दीप्ते इति। भुवने गृहे सन्दीप्ते तु दह्यमाने साति तस्मिन्काले कूपखननं प्रति य उद्यमो यत्नः स कीदृशो नैव योग्यस्तथा देहेन्द्रियादिशक्तिनाशे श्रेयोर्थे यत्नोऽपि व्यर्थ इत्यर्थः। देहेन्द्रियमनोस्वास्थ्यं यावदेव नृणां स्थितम्। आमान: श्रेयसे तावद्यतेत बुद्धिमान्नरः॥१॥ शिखारिणीवृत्तमिदम् ८४

भा. टी.-जब तक शरीर पुष्ट और निरोग है, जब तक वृद्धावस्था दूर हैं, जब तक इन्द्रियोंकी शक्ति नष्ट नहीं होतीहै, और जब तक आयुका क्षय नहीं हुवा है तभी तक बुद्धिमान् पुरुषको उचित है कि अपने कल्याणके लिये महान् प्रयत्न करे, क्योंकि घरमें आग लगनेपर कूआ खोदनेसे क्या लाभ होसक्ताहै ॥ ८४ ॥